THE

# SIDDHA BHAISHAJYA MANJOOSHA

(Being a learned and up-to-date treatise on the Ayurvedic treatment in Verse.)

## PART 1



BY

PANDIT JAYADEVA SHASTRI, AYURVEDACHARYA
Proprietor, The Bharat Bandhu Aushadhalaya, Bahraich (U. P.)

WITH

The Exhaustive KUNCHIKA COMMENTARY.

OF

PANDIT HANUMATPRASAD SHARMA,
Shastri, Sahityacharya, Ayurveda-Visharad.
Principal, H. R. Sanskrit College, Ramgarh, (Sikar).

Published by:
The Sharada Sadan Karyalaya, Ramgarh, (Sikar State)

1932



First Edition:
1250 Copies.

Price Rupees 3.

श्रीः

विद्वत्कण्ठभूषा

# सिद्धभैषज्यमञ्जूषा

तत्र

## प्रथमं प्रकोष्ठम्

नव्यरचनाविलासितम्,




तदिदं

चिकित्साचार्यजोशीत्युपनामधारिविद्वज्जयदेवशास्त्रिकविना

सुभाषितम् ।

साहित्याचार्यशास्त्रिपण्डितहनुमत्प्रसादनिर्मितया

कुञ्चिकाख्यटीकया

विकाशितम्,




स्वैरेवाधिकारै रामदुर्गाभिधपत्तनस्थ-

शारदासदनकार्य्यालयतः

प्रकाशितम् ।

मोहमयीस्थे "गुजराती प्रिण्टिङ्ग प्रेस—" नाम्नि मुद्रणालये मुद्रितम् ।

संवत् १९८९

# समर्पणम्

श्रीमन्! महोदय! मान्यवर! महनीयमहिममहामते!,

शेखावतान्वयवार्धिकौस्तुभ! विपुलरविकुलसन्तते!।

मरुभूमिभूषण! नृवर! सीकरमण्डलेश्वर! सद्व्रते!,

अभिनीतशासन! कीर्तिधन! कल्याणसिंहमहीपते!॥

भुवनाभिरामसुशिक्षणप्रियतादिगुणमभिनन्द्य ते,

मञ्जूषिका करकञ्जयोरियमर्प्यते परिचन्द्यते।

नैसर्गिकीं करुणादृशं भृशमीश! कन्दलयामलम्,

प्रेमोपहारमुरीकुरु प्रणयावनिं यशसाप्यलम्॥

समर्पयितारौ

ग्रन्थकर्त्तारौ

# सहृदयानां सेवासु—

यत्नात्सञ्चितमादरादुपचितं शास्त्रेषु वा निश्चितं
व्यापन्नेषु परीक्षया परिचितं वैद्योचितं यद्धनम् ।
तत्पूर्णां किल कुञ्चिकासुविवृतां मञ्जूषिकामद्य नः
स्वान्तं हन्त ! परं प्रसीदति सतां सेवासु विन्यस्यताम् ॥ १ ॥

नो चित्रं मनुजस्वभावसुलभा दोषाः स्युरत्र क्वचित्
तान्संशोध्य कृपालवः करुणया गृह्णन्तु सन्तो गुणान् ।
आयुर्वेदसमुद्धरैकमनसां साहित्यसेवाजुषा–
मुत्साहं परिवर्धयन्तु सुधियो भूयोऽपि किञ्चित्कृते ॥ २ ॥

एषा यद्यपि सत्कृतिर्न विकृतिग्रन्थान्तराणां निजां
सर्वत्राश्रयते स्वतन्त्रसरणिं नव्यां तथापि क्वचित् ।
योगायोजनगुम्फनादिविधया साहाय्यमालम्बितं
पूर्वेषां विदुषां विशुद्धमनसा तेषां कृतज्ञा वयम् ॥ ३ ॥

धत्ते राजसभासु कौशलमलं दत्ते च यो मन्त्रणां
कार्ये यस्य जयो न यो नयविधौ नम्रो विनम्रोऽपि सन् ।
एतां सीकरभूपभूरिकृपया संरक्षितां यो व्यधात्
सोऽयं श्रीजयदेव इत्यभिधया गीतश्चिरायुर्भवेत् ॥ ४ ॥

तस्माद्राजसुसत्कृतां गुणवतां सद्भिः सतां सम्मतां
संवीतां सुभगाक्षरैः सुरुचिरैः सीसाक्षरैर्मुद्रिताम् ।
एतां दुष्पथदूषिकां हृदयतः स्वीकृत्य मञ्जूषिकां
कारुण्येन कृतार्थयन्तु कृतिनस्तत्प्रार्थ्यते केवलम् ॥ ५ ॥

—ग्रन्थकर्ता

# INTRODUCTION.

It is with feelings of delight and gratitude that I venture to put down the following few lines as my humble offerings at the feet of my venerable preceptor Pandit Jayadeva Shastri, the author of this book.

Often when we sat at his feet for instruction in Ayurveda, at the Empress Sanskrit Pathashala Bahraich, which he adorned as the head of Ayurvedic Department, we noticed the flashes of his poetic genius and more than once requested him to compile a work that could be modern in the strict sense of the term.

The present work has exceeded all our expectations. At its name Siddha-Bhaishajya-Manjoosha implies, it is not only a repository of effecacious Ayurvedic medicines, but also of various gems in the form of varied types of verses.

Although among the extant works of Ayurveda, there are treatises like Vaidya-Jiwan and Siddha-Bheshaja-Manimala, but both are deficient in some respect or the other.

Vaidya-jiwan, according to its author Lolimbaraj, contains mostly authenticated prescriptions from Charak and Sushrut, clothed in fine verses without due regard to the system of treatment.

Siddha-Bheshaja-Manimala is rather an improvement upon Vaidya-jiwan. Its author Pandit Krishna Ram has, for the most part, dealt independently with all diseases. Unlike Vaidya-jiwan, the treatment of modern ailments such as Syphilis and gonorrhea has found its due place in Siddha-Bheshaja-Manimala.

Now it is a matter of great felicitation, that a book like Siddha-bhaishajya-manjoosha has seen the light of the day. The sloka, cited below, from the text, will show what the aims and the objects of the writer are in the preparation of this work.

सिद्धा योगाः कीर्त्तिता ये प्रत्नप्रत्नचिकित्सकैः ।
तेषां सङ्ग्रहणायैव मञ्जूषेयं विरच्यते ॥ ११ ॥

This Manjoosha ( chest ) is framed in order to collect all those ready cures that have been prescribed by both modern and ancient physicians.

In it the author has evinced the catholicity of his mind, in contravention to the proverbial conservatism of the oriental pandits, in making use of the occidental system of treatment where necessary. The following quotations from the text will bear testimony.

पोदीनार्को देवपुष्पस्य वार्को मिश्रेयार्कः श्वेतजीरोद्भवार्कः ।
एलाक्षोदश्चैतसो वा प्रमोदः सोडावारिच्छर्दिरोगापहारि ॥ छर्दिरोगे ।

Mint, clove, लौंग anise, सौंफ or white cummin seed, जीरा water, the powder of cardamum इलायची or SODA-WATER assuages vomiting

( १ ) निश्चिन्तो निवसन्नसुखानिलजले देशे मरौ वा गिरा-
ह्युद्यानेषु समायनेषु च गृहारामेषु कामं भ्रमन् ।
गृह्णन् विष्णुपदामृतं त्रिपथगातीरेऽच्छनीरं पिबन्
शोषी विन्दति शर्म, कर्मकुशलं वैद्यं च भक्त्याऽऽश्रयन् ॥ २ ॥

( २ ) सुप्तिर्दारुतलेऽमलेऽम्बुजदले भुक्तिश्च मुक्तिः कलेः
पानं गोहविषां तथाजपयसां गानं च चेतोहरम् ।
आसो मित्रजनैस्तथा शुभकुलैर्वासो वहिर्यामतो
गोदेवद्विजपूजनं, क्षयरुजां प्रत्यर्थिनोऽमी मताः ॥ ३ ॥—यक्ष्माधिकारे ।

( 1 ) A consumptive is cured by living free from anxienties in a district destitute of water or on a hill,

where climate is salubrious; by walking as long as he wishes in gardens where paths are level or in pleasure gardens attached to one's house; by inhaling oxygen ( विष्णुपदामृतम् ), quaffing pure water at the bank of the Ganges, and also by taking shelter of an effecient Vaidya with devotion.

( 2 ) These are the enemies of consumption क्षयरोग; rest ( sleep ) under the Deodar चीड; partaking of food served on a lotus leaf free from mud; indulgence in all what is pleasing to the heart, drinking of cow-ghee and also of goat-milk, charming music, association of the friends of noble descent or of goats, encamping out-side the habitation, worship of the cow, god, and Brahman.

The treatment of almost all the modern diseases, such as plague and pneumonia has been fully dealt with.

The author himself, being deeply read in Ayurveda, has judiciously avoided the unnecessary details of the Shastric recipes knowing well that mere references to them will suffice for the Vaidyas. The prescriptions, which he has by experiences found infallible have been versified and recorded there-in.

The versification has also eclipsed the Vaidya-jiwan and Siddha-Bheshaja-Manimala. It is rich in fine verses. The vehicle of expression being Sanskrit all through, the metre af the Hindi prosody, such as Dohas, Sorathas etc, has at places being adopted to make the work interesting.

Figures of speech with all the varieties have been fully illustrated. Sometimes, more than one figure of speech is met with in one sloka. The following is an

illustration of alliteration, occurring in one, with all its three or four forms.

विधुहरभिसदम्भो वान्तिदम्भो विशिष्टम्
समहिमरुचिराजीलेपनं वा हृदीष्टम् ।
लवणजरणचूर्णैः सम्मता दन्तशुद्धिः
शुचिरुचिरपदार्थैश्चाशु योज्येत बुद्धिः ॥ १२ ॥ छर्दिरोगे ।

Pun ( श्लेष ) can be seen in आसो मित्रजनैस्तथा शुभकुलैः quoted above शुभ means both goat and noble.

Simplicity and perspicuity are the salient features of the commentary Kunchika. The commentator Pt. Hanumat Prasad, Shastri, Sahityacharya, Ayurved-Visharad, a man of no mean repute, desrves credit for elucidating the text and the prescriptions in detail which have been merely hinted at by the author.

In fine, the ayurvedic world will be greatly indebted to the compiler Pt. Jayadeva Shastri for placing before it such a nice and peerless production. It will prove useful not only to the graduates of Ayurveda but to the average students of it as well. Its Dohas, sorathas, and Chaubolas will delight even people with a little smattering of Sanskrit. Students of Ayurveda will derive immense good from it by easily memorising its verses for their examinations. The music of its verses and its specifics will also attract the learned Pandits of Ayurveda and general sarskrit knowing world.

May God, the Almighty, shower his choicest blessings upon Pt. Jayadeva Shastri and spare him long to serve the noble cause of Ayurveda.

Mohalla Brahmanipura
Bahraich ( Oudh )
The 5th of May 1932

PUTTOO LAL GUPTA
VAIDYA.
Ayurvedacharya; B. A.

# "मञ्जूषा कण्ठभूषासौ"

अयि परमायुर्वेदविद्यापारपारावारपारीणाः साहित्यसुधामाधुरीधयधुरीणाः प्रथितप्राणाचार्यकर्मप्रवीणा गुणिगणगुम्फितग्रन्थान्तरालवर्त्तिगुणैकमात्रदर्शननिपुणाश्चिकित्सनचणाः। विदाङ्कुर्वन्तु तत्रभवन्तो भवन्तः काव्यामृतरसास्वादलालसावन्तः सन्तः, यत्खलु सकलचिकित्सावृक्षबीजभूतस्याथर्ववेदोद्भूतस्यायुर्वेदस्य कीदृशी दशेति।

साम्प्रतिकी प्रचलिता विदेशीया चिकित्सापद्धतिः कायिकातङ्कप्रतिक्रियाकरणकातरा वारधूवत्केवलं बाह्याडम्बरभरेणैव भारतीयजनानां मनांसि मोहयन्ती अभिनवरोगग्रस्तानामल्पप्राणत्वात्स्वरं त्रस्तानामविचारितस्वीयास्वीयचिकित्सापद्धतीनामविवेकमतीनामिदानीन्तनानां पुरतश्चपलेव चापलं चञ्चयन्ती ज्ञानलवदुर्विदग्धान्मुग्धान्प्रतारयन्ती केवलमापातप्रभावं प्रभावयन्ती निखिलावनिमण्डलं व्याप्नुवतीव दरीदृश्यते। अत एव भारतीयपुराभवभव्यभिषक्क्रियासरणिर्निखिलचिकित्साकर्माणि कर्मठायमानापि तात्कालिकफलवितरणविधौ कमठायमाना विश्वजनीनापि सामयिकसंस्करणविहीना नितरां दीनेव प्रतिभाति।

तस्मात्प्राचीनार्वाचीनसकलसामयिकामयविलयनार्थे काचिदभिनवविधानविधायिकानवद्या पद्धावश्यमपेक्षितव्यासीदिति नाविदितं नव्यानां भव्यानाम्। तदर्थमेवास्मदादिजनप्रार्थनया समुज्जृम्भितमनोवृत्तिभिरस्मद्गुरुचरणैः कविवरमहाभागैः "सिद्धभैषज्यमञ्जूषा"-भिधोऽयं ग्रन्थोऽग्रन्थि।

इमे ग्रन्थगुम्फनगरिष्ठाः स्वधर्मनिष्ठा विद्वद्वृन्दवरिष्ठाश्चिकित्सकश्रेष्ठा आतुरार्त्तिहरणाच्छात्रैकशरणाः श्रीगुरुचरणा मरुस्थलतिलकीभूतशेखावाटीप्रान्तवर्तिसीकरमण्डलान्तर्गतरामदुर्गनगरवास्तव्या इदानीं "बहराइच"—नगरे कृतायुर्वेदविद्यालयसमुद्घाटनाध्यापना बहुशश्छात्रानभ्यस्तयोग्यासुत्रीयान्विशिखानुप्रवेशार्हान् विधाय "भारतबन्धुमौषधालय"-मधितिष्ठन्ति स्वातन्त्र्येण प्रवर्त्तयन्ति वृत्तिं प्रचारयन्ति चायुर्वेदविद्यामद्यापि। ये चास्मदादिभिरेवं प्रत्यहं प्रातरेव स्तूयन्ते—

यद्भैषज्यगुणैकगाननिरताः स्वस्थान्त्यसंख्या जना
यस्तच्छिष्यपरम्परा सुचतुरा कृत्ये समुज्जृम्भते।
यत्कीर्तिर्जनदुर्लभा शशिनिभा शुभ्रप्रभा भासते
सोऽयं श्रीमयदेवशास्त्रिसुकविर्जीयान्मदीयो गुरुः॥

यदीयचरणकमलपवित्रीकृता " बहराइच "–नगरी च यैरेवैवङ्कारं संस्थापितास्ते, यथा—

युक्तप्रदेशेऽवधभूमिभालं सदट्टकूटोन्नतहर्म्यमालम् ।
अगण्यपण्यान्वितपण्यशालं शंसामि बालार्कपुरं विशालम् ॥
विहङ्गवाग्व्यञ्जितवेश्मजालं घण्टागृहालङ्कृतमध्यतालम् ।
प्रतिक्षणोद्घोषितभव्यकालं शंसामि बालार्कपुरं विशालम् ॥

विशेषपरिचयस्त्वेषां महाभागानां " कुञ्चिका "–कारमहाशयैः साशयं समुपवर्णितः प्रथमप्रकोष्ठकसमाप्तौ ।

" कुञ्चिका "–कारास्तु एतेषां सतीर्थ्याः प्रसृत्वरयशोराशयः स्वनामधन्या मान्या विद्वद्वृन्दवरेण्या रामदुर्गस्थहरलन्दरायरुइयासंस्कृतकालेजाध्यक्षाः साहित्याचार्यायुर्वेदविशारदशास्त्र्यादिविविधपदवीभव्या बीकानेरमण्डलान्तर्गतरत्ननगरवास्तव्याः श्रीहनुमत्प्रसादशर्ममहोदयाः सातीर्थ्यमर्पयन्तो मञ्जूषोद्घाटनायापेक्षितां तदन्तःस्थयोगरत्नावलुञ्चिकां सरलसरलां " कुञ्चिकां " नाम टीकां विधाय महान्तमुपकारमकुर्वञ्जगतः ।

तदेवं कविवरमहाभागैः श्रीगुरुचरणै रचितस्य तथा तत्सतीर्थ्यैः शास्त्रिभिः साधु संवर्धितस्य सटीकस्य ग्रन्थोत्तमस्यास्योपादेयताविषये मादृशानां शेमुषीकृशानां भणनं यद्यपि सम्यग्दर्शिनां विमर्शिनां समक्षं विलक्षमिवाभाति, तथापि " सिद्धभैषज्यमञ्जूषा "–भिधाने सुधासमानेऽप्यत्नेऽत्र ग्रन्थरत्ने यद्वैशिष्ट्यमस्ति तद्यथास्थूलं स्थूलया बुद्धया विवेच्यते ।

अद्यावधि खलु प्राचीनागाधचरकसुश्रुतादिपारमर्षसंहितानिर्माणानन्तरं दृशोर्गोचरतामुपयातेषूपयत्सु च प्रायः सर्वेषु साहित्यिकसरणिमवलम्ब्योपनिबद्धेष्ववांचीनायुर्वेदनिबन्धेषु नैतादृशी पूर्णताऽनुभूतचरी यादृशी निबन्धेऽस्मिन् । कुत्रचित्साहित्यरसभरेऽपि ग्रन्थवरेऽभिनवरोगचिकित्साशैली काल्पनिकाः प्रयोगाश्च नोपवर्णिताः, केवलं पुराणाः स्वानुभूताः प्रयोगाः संक्षेपतो रुचिकरकवितायां प्रदर्शिताः । क्वचिन्नवीनकल्पितानुभूतयोगरत्नेषु सत्स्वपि नाधुनिकरोगचिकित्साक्रमो नापि सर्वेषामातङ्कानां निग्रहः । क्वचिदुभयसत्त्वेऽपि न भावभाषासौष्ठवं न वा काव्यमाधुरीधुरीणजनमनःसमावर्जनसामग्री । क्वचित्केवलं क्वाथचूर्णगुटिकाघृततैलाद्याभासः क्वापि केवलं रसादिसारतासम्पादनप्रयास इत्याद्येव तत्र तत्रानुभूयते ।

अत्र तु महता चातुर्येण सहृदयमनोहारिणीभिश्चमत्कारिणीभिर्ललितललिताभिः कविताभिःप्रायः शास्त्रप्रसिद्धाः स्वानुभवसिद्धा गुरुपरम्परापरिलब्धा भूरिविस्रब्धाश्चतुरचिकित्सूपहृता विविधव्याधिपरिखिन्नरुग्णजनवृताः सरलस्वभावाः शीघ्रप्रभावाः प्रयोगोत्तमा यथा सन्दर्भितास्तथाऽऽधुनिकश्लैष्मिकश्वसनकग्रन्थिकादिदुश्चिकित्स्यतमानामामयानां प्रतीकारेऽपि प्रकृष्टप्रमाणाणि भैषज्यरत्नानि समुपनिबद्धानि प्रमोदयन्ति मनांसीति स्वानुभवसाक्षिकं चक्षुष्मताम् ।

तत्र शास्त्रसिद्धानां योगानां नाम्नैव निर्देशः कृतष्टीकाकृद्भिश्चासौ व्याकृतः । आधुनिकप्रयोगास्तु स्वीयहृद्यपद्यमयैर्वाक्यवयैर्विकचीकृताः । विचित्रवृत्तवतीभिः सालङ्कृतिभिः कृतिभी रामवाणवत्प्रकृष्टप्रयोगा जलवाय्वादिपरिवर्त्तनविधानं च सुस्पष्टं समुद्घोषितम् । किं बहुना, अपेक्षितविषयस्य सर्वाङ्गीणसौन्दर्यसम्पादने न किमप्यवशेषितमिति तु सुधियः स्वयमेव विभावयिष्यन्ति ।

रचनायाञ्चात्र यथा अनुष्टुबार्यागीत्युपगीत्युद्गीतिचम्पकमालाक्षरपङ्क्तिशशिवदनामदलेखामाणवकाक्रीडेन्द्रवज्रोपेन्द्रवज्रावैश्वदेवीनगस्वरूपिणीप्रमाणिकापञ्चचामरमन्दाक्रान्तादोधकवृत्तशार्दूलविक्रीडितशिखरिणीभुजङ्गप्रयातविद्युन्मालामणिबन्धशालिनीहरीणीस्रग्धराद्रुतविलम्बिततोटकवसन्ततिलकामालिन्यादीनि प्राचीनानि सकलसंस्कृतसाहित्यललामभूतानि वृत्तानि सहृदयहृदयानि हरन्ति तथैव दोहाचौपाईचौबोलाकव्वालीकवित्तसवैयागीतिगेयादीनि नवीनानि हिन्दीसाहित्यशोभाविधायकानि छन्दांस्यप्यमन्दानन्दसन्दोहजननायालं भवन्ति । तानीमानि टीकाकृद्भिर्यथास्थानं लक्षितानि । एवं विविधवृत्तवत्सु सत्स्वपि नानापद्येषु पठतां न मनागपि मनोविनोदवैकल्यम्, प्रत्युत रमणीयरीतिरञ्जितैर्माधुर्यगुणगौरवगुम्फितैः प्रसादासादितसमस्तसाहित्यसारल्यै रचितरसिकजनमनस्तारल्यैस्तैर्हृद्यैः पद्यैः परमानन्दममन्दं विन्दतां पुरतः परिस्फुरति मूर्तेव कापि नवकवनवपुर्भास्वती सूक्तिसरस्वती ।

किञ्च कमनीयकाव्यालङ्कृतावलङ्कर्मीणतां गताः सकलसाहित्यिकजनबहुमताः श्रुतिवृत्तिच्छेकान्त्यलाटानुप्रासयमकवक्रोक्तिप्रभृतयः शब्दालङ्कारा उपमानन्वयरूपकपरिकरार्थान्तरन्यासादयोऽर्थालङ्काराश्च चक्रमुसलखड्गगोमूत्रिकाबन्धादयश्चित्रकाव्यप्रकाराश्चात्र भूम्ना तथा प्रतिभासन्ते यथा तेषां सर्वेषामुल्लेखाय निखिलं पुस्तकमेवापेक्षितं भवेदिति दिग्दर्शनमात्रेण पाठकान् सन्तोषयामः । तत्र—"विधुसुरभि०" इत्यत्र ( छर्दि०१२ ) 'म्भो' इति व्यञ्जनसङ्घस्य सकृत्साम्याच्छेकः, रेफमकारयोः पूर्वस्वरवर्णसहितस्य चकारस्य वा पुनरावृत्तेर्वृत्तिः, पूर्वस्वरसहितस्य यथावस्थितस्य पादान्त्यवर्णस्यावृत्तत्वादन्त्यानुप्रासः, तृतीयचरणे तकारदकारयोर्दन्तोच्चार्यत्वेन समानश्रुतित्वाच्छ्रुत्यनुप्रासः— एवं लाटानुप्रासविहीनाऽनुप्रासचतुष्टयी दृश्यते । पङ्ग्वन्धा०" इत्यत्र (अपस्मार०८) पूर्वार्धस्योत्तरार्धेन साम्याल्लाटानुप्रासो यमकञ्च । " प्रतीते" (अग्निमान्द्य०५) इति पद्येऽपि उभयम् । मङ्गलाचरणादिमश्लोकेषु छेकानुप्रासः " हिक्काधिक्कारम् " इत्यत्रापि ( हिक्का० १० ) । राजयक्ष्माधिकारोक्तयो "आजद्रानुनिभो०" " क्षुद्रास्वासवलासनाशकुशला०" इतिपद्ययोः ( राज० १, ४ ) वृत्त्यनुप्रासः । " नीचानीतापि कस्तूरी कस्तूरीकुरुते न ताम् " इत्यत्र ( उपो० १६ ) " पिडकानुद्गमे मुक्ता मुक्ताख्ये श्लाघिता ज्वरे " इत्यत्र ( ज्वर० ५३ ) च यमकम् । "हे प्राणेश्वर वैद्य०" इति पद्ये (अर्शः०३१) वक्रोक्तिः । तदेवं स्थाने स्थाने शब्दालङ्कारचमत्कारोऽनुभूयते । अनुप्रासस्य त्वत्र तादृशं वैशिष्ट्यं यत्क्वचिच्छ्लोके एकः, क्वचिद्द्वौ,

क्वचित्त्रयः, क्वचिच्चत्वारः, क्वचित्तु श्रुतिवृत्तिच्छेकलाटान्त्यभेदभिन्नाः पञ्चैवानुप्रासा दृश्यन्ते। अन्त्यानुप्रासवृत्त्यनुप्रासौ तु प्रायः प्रतिश्लोकं चकास्तः। अनुभूयतां मनाक्तत्कृतश्चमत्कारः—

भज वत्सकरसपङ्कं सरणातङ्कं यदीहसे रङ्कम्।
पिब मथितं निश्शङ्कं योगमिहान्यं ब्रवीमि मोऽकं कम्॥
पिष्टिरहो विड्भजा कम्पयते कासरुजाः।
क्षौद्रसखं चेदिह खं खादति ना याति सुखम्॥
विश्वगुडूचीग्रन्थिकनीरम्। मारुततापध्वंसनधीरम्॥
जीरकजातीकोपकतोलम्। हन्ति विषूचीं पुष्करलोलम्॥
विश्वमिवेष्टा शङ्करभक्तिः। जाड्यमधीतेवाक्षरपङ्क्तिः॥ इति॥

वस्तुतस्तु पुस्तकमिदं सर्वमेवानुप्रासरसिकस्वान्तसरोरुहसमुल्लासायादर्शभूतम्। अत एवाभाणि तदीयमधुरिमातिशयमुग्धैर्विशिष्टव्याख्यानविदग्धैः श्रीमद्भिः कुञ्चिकाकृद्भिः—"अनुप्रासस्तु कवेरस्य दास एव" "कवेरस्य कृतावनुप्रासं विना पदविन्यास एव न" इत्यादि। चित्रकाव्यभूताश्चक्रमुसलादिबन्धाः प्रहेलिकान्तर्लापिकाबहिर्लापिकासमस्यापूर्त्यादयश्च तैरेव सचित्रोद्धारं यथास्थानं विशदीकृताः।

अर्थालङ्कारा अपि बहुशश्चेतांसि चन्दयन्ति सचेतसाम्, तद्यथा—"सद्वृत्तार्थवती" इत्यत्र (उपो० ९) "धातूपधातुघटिताम्०" इत्यत्र (उपो० ७) च श्लेषानुप्राणिता पूर्णोपमा। "भक्तो विल्वतले०" इत्यत्र (ज्वर० १५५) परिकरः। "रोचते कविता नो चेत्" इत्यादिषु दृष्टान्तः। "मल्लस्तालमरालपादमिलितः०" इत्यत्र (ज्वर०६०) रूपकम्। "शुक्लं मलम्०" इत्यत्र (ज्वर० ११९) मुद्रा। "जलदमिपि०" "विल्वाम्बुमुस्त०" इति पद्ययोः (अतिसार० १०-११) उपमा। "भङ्गाहिफेन०" इत्यत्र (अति० १२) अर्थापत्तिः। "ब्राह्मी येषां हृदये०" इत्यत्र (अपस्मार०७) अर्थान्तरन्यासः—इत्यादि। अधिकं तु तत्र तत्र ग्रन्थपर्यालोचनेनैव ज्ञायेत।

इदं प्रायो विलोक्यते यत्—देशतः कालतो वा विप्रकृष्टे ग्रन्थकर्तरि तदीयाशयो विपर्यासं नीयते न वा प्रतीयते। प्रस्तुतग्रन्थेऽपि तन्मा स्म भूदिति सम्यक्सतीर्थ्याशयं जानानैः शास्त्रिभिः"मञ्जूषायां मुद्रितानर्थान्कुञ्चिकैव प्रकाश्य दर्शयितुमलम्" इत्ययं लौकिक आभाणकः सत्यं सत्यापितस्तन्नामद्वयस्यान्वार्थतापि समर्थिता। "कुञ्चिकायां" हि नवीनया रीत्या तिर्यग्रेखाद्वयेन पर्यायप्रदर्शनपूर्वकं मूलार्थः स्फुटीकृतः, स्वल्पसंस्कृतज्ञवैद्यबोधनाय देशभाषास्वौषधानां विपरीतप्रसिद्धिरोधनाय च हिन्दीनामोल्लेखप्रकारोऽपि स्वीकृतः, दर्शनादेवौषधविधानविज्ञानाय तन्नामानि तिर्यगधोरेखया लक्षितानि, मूले नामतो निर्दिष्टयोगानां विधानानि ततस्ततः समाहृत्य पूर्णतया रक्षितानि, केवलं परोपकृतिप्रवणतयैकैकस्य स्थाने त्रिचतुराणामपि प्रयोगाणां विधानं समङ्कितम्, यथास्थानमपेक्षिततत्तद्रहस्यस्फारणाय पुन-

रुचितोऽपि न शङ्कितम् । मूलेऽनुक्तानामप्युपयुक्तानां योगानां तत्र तत्र योजनं विहितम्, नवाविर्भूतानामांग्लवैद्येषु प्रसिद्धानां रोगाणां योगानाञ्चांग्लभाषयैव नामादिकं निहितमित्येवं स्वानुभवसारेण मञ्जूषायाः सर्वोपादेयतासम्पादनेऽतीव नाम परिश्रान्तामिति दर्शनेनैव प्रत्यक्षं भविष्यति ।

तदेवं सम्पादितस्यास्य ग्रन्थरत्नस्य मुद्रणं यद्यर्थव्ययभीतेर्यादृशे तादृशे नाम यन्त्रालयेऽभविष्यत्तर्हि सर्वमेवादसीयं महत्त्वमन्धकारे व्यलेप्स्यत । परन्तु, महान्तमर्थव्ययमङ्गीकृत्यापि सर्वमान्यतया प्रसिद्धेषु यन्त्रालयेष्वेकतमे मोहमयीस्थे "गुजराती प्रिण्टिङ्ग प्रेस"—नाम्नि यन्त्रालये मुद्रणप्रबन्धं कृतवद्भ्यां ग्रन्थकृद्भ्यां सोऽयं स्वसुरुचेः परिचयोऽदायि । प्रत्यहं प्रकाश्यमानेषु सांप्रतिकपुस्तकेषु शुद्धिपत्राणां मूलतः साम्यमाधिक्यं वा विलोकयतोर्मञ्जूषाकुञ्चिकाकारयोः पूर्वं प्रतिज्ञाऽऽसीन्नात्र पुस्तके शुद्धिपत्रं भवेन्मुद्रणमेव शुद्धं भवेदिति । अत एव प्रूफसंशोधनादिकं सर्वमपेक्षितं मुद्रणकार्यं स्वयमेव कृतम् । परन्तु अक्षरयोजकादिकर्मचारिणां प्रमादान्मुद्रणयन्त्रस्य गतिवेगाद्वा स्वीयानवधानाद्वा मानवस्वभावसुलभा यत्र क्वचिद्वर्णमात्रादिविकाराः समभूवंस्तत्प्रतीकाराय शुद्धिपत्रमपि संयोजितम् । यदनुसारेण पुस्तकं संशोध्य पठन्तः सन्तः क्लेशस्य लेशमपि नानुभविष्यति ।

सेयं सकलालङ्कारालङ्कृता विविधवृत्तविभूषिता सरससरस्वतीसङ्कलिता सुन्दरशिवसत्यप्रयोगरत्नसंभृता विविधविद्वद्वृन्दाननारविन्दाभिनन्दिता भिषग्भवनभूषा "सिद्धभैषज्यमञ्जूषा" भिषग्बुभूषूणां छात्राणां प्रचुरज्ञानजननाय स्नातकानां चिकित्सापरिपाटीपरिचयाय बुद्धिमतां स्वालक्षण्यानुमानयुक्तिकुशलानामप्यनुक्तार्थज्ञानाय सन्दिग्धार्थपरिहाणाय स्वानुभवोन्नतिवर्धनाय वा, साहित्यविशारदानां परमानन्दप्रापणायापरेषामलग्नशारदानां मनोविनोदाय श्रोतॄणां सुखाय चालं भविष्यति । तस्मात्सहृदयजनानां गले ललन्तिकेव ललिष्यति । अत एव कविवरचरणोक्तिः—

" मञ्जूषा कण्ठभूषासौ " इति ।

प्रकोष्ठद्वयात्मिकायास्तस्याः सर्वसाधारणसौकर्याय तदिदं प्रथमं प्रथमं प्रकोष्ठं श्रीमत्सेवासु समुपसर्पति । द्वितीयं प्रकोष्ठमपि प्रस्तुतं न चिरादेव प्रकाशमेष्यतीति शिवम् ।

" मूलं व्याकुरुते व्याख्या व्याख्यामाख्याति भूमिका ।
तस्माद्ग्रन्थमधीयानैरध्येया भूमिकादितः ॥ "

बहराइच
४—९—३२

श्रीभगवतीप्रसादशुक्ल आयुर्वेदाचार्यः
प्रधानायुर्वेदाध्यापकः—
एम्प्रेससंस्कृतपाठशालायुर्वेदविभागस्य

## काश्चित्सम्मतयः

मञ्जूषागौरवाकृष्टहृदयाः सुधियोऽत्र यत् ।
वदन्ति तदधःस्थाभिः प्रत्येतव्यं प्रशस्तिभिः ॥

---

आयुर्वेदमार्तण्डानां लखनऊनगरवास्तव्यानां प्रख्यातकीर्त्तीनां श्रीक्षमापतिवाजपेयिवैद्यमहाभागानाम्—

आयुर्वेदाचार्यश्रीभज्जयदेवशास्त्रिनिर्मितां "सिद्धभैषज्यमञ्जूषाम्" अंशतोऽपूर्णामपि प्रायः पूर्णां यत्र तत्र विलोक्य सप्रमोदमिदमुद्घोषयामि यत्प्रायः समुपलभ्यमानेषु सर्वेष्वप्यायुर्वेदनिबन्धेषु न कश्चिदीदृशः कवितामाधुरीसमावर्जितसहृदयहृदयो रामबाणवत्सिद्धप्रयोगसंग्रहयुतोऽन्यो ग्रन्थो दृशोर्गोचरतामायातीति । भारतीयविदुषां मस्तिष्कमधुनाऽप्येतादृशग्रन्थनिर्माणे प्रभवतीति हन्त ! परं हर्षस्थानम् । मञ्जूषेयं वैद्यानामायुर्वेदच्छात्राणाञ्च महान्तमुपकारमाधास्यतीति न मनाक्सन्देहः । आयुर्वेदीयपरीक्षासु पुस्तकमिदं प्रचारितं स्यादित्यहं तदधिकारिणोऽनुरुन्धे । ग्रन्थस्यास्य मूलानुरूपिण्येव विधिबोधिनी काचित्सरला टीकापि यदि स्यात्तर्हि सुवर्णे सौगन्ध्यं भवेदिति कविना तद्घटनाय प्रयतनीयमित्याशास्ते—

हरिद्वारे
ज्ये. शु. ११ सं. १९८६ } वैद्यक्षमापतिवाजपेयी

* * * *

जयपुरराज्यस्थडूंडलोदनगरे वेदवेदाङ्गसंस्कृतपाठशालाऽऽध्यक्षयजुषां सुप्रसिद्धविदुषां विद्याभूषणेत्युपाधिधारिणां शास्त्रिश्रीरामधारिणाम्—

मया रामदुर्गनिवासिनो नि० भा० आयुर्वेदविद्यापीठतो लब्धायुर्वेदाचार्यपदवीकस्य श्रीमतः पण्डितप्रकाण्डस्य श्रीजयदेवशर्मशास्त्रिणो विरचना "सिद्धभैषज्यमञ्जूषा" अवलोकिता । इमां "रामबाणमहेषुधिः" इति कथयितुमभिलष्यति मे मनः । इयञ्चालङ्कृतिरसोपेताभिर्हृद्यपद्ययुताभिः सुकविताभिर्ग्रथिता ग्रन्थनिर्मातुरसामान्यां काव्यनिर्माणशक्तिं प्रकटयति । अस्याष्टीकाऽप्यत्र मञ्जूषायां मुद्रितानर्थानुद्घाटय दर्शयन्ती वस्तुतः कुञ्चिका कुञ्चिकाभिधाना रामदुर्गस्थहरनन्दरायरूइयासंस्कृतकालेजप्रधानाध्यापकेन पण्डितहनुमत्प्रसादशास्त्रिणा साहित्याचार्येण विरचिता सर्वविधगुणातिप्रशस्ततरा । तया च सुवर्णे सौगन्ध्यं विहितम् । सेयं सकुञ्चिका मञ्जूषा जगतस्तनुरत्नं गदचौरेभ्यो रक्षिष्यतीत्याशास्ते-

डूंडलोद
फा० शु० ८ सं० १९८७ } रामधारिशास्त्री

भारतप्रसिद्धवैदुष्यवैभवानामायुर्वेदमार्तण्डेत्याद्युपाधिभाजामायुर्वेदाचार्याणां राजवैद्यश्रीलक्ष्मीरामस्वामिमहोदयानाम्—

आयुर्वेदाचार्यश्रीजयदेवशास्त्रिसंकलितां सिद्धभैषज्यमञ्जूषां निरीक्ष्य नितरां प्रीताः स्मः । पद्यरचनाचातुरी समाख्याति प्रणेतुः कवित्वशक्तिम् । प्रायोऽनुप्रासवती पद्यपंक्तिश्चमत्करोति चित्तम् । इतोऽप्यधिकः प्रमोदो यन्मञ्जूषानुरूपिण्येव तदुद्घाटनकुञ्चिका साहित्याचार्यश्रीहनुमत्प्रसादशास्त्रिरचिता कुञ्चिका टीका । सरलसरला योगा अचिरेणैव मञ्जूषाभूषां प्रख्यापयिष्यन्तीति सामोदमाशास्महे ।

जयपुरम्
१३।९।३१

लक्ष्मीरामस्वामी

* * * *

हरिद्वारस्थायुर्वेदप्रचारककम्पन्यध्यक्षाणामायुर्वेदमार्तण्डेत्यादिविविधविरुदावलीभूषितानां श्रीशिवचन्द्रवैद्यमहानुभावानाम्—

आयुर्वेदाचार्यश्रीजयदेवशास्त्रिनिर्मितः सिद्धभैषज्यमञ्जूषाभिधो ग्रन्थो मयावलोकितः । सालङ्कृतिकवितानिबद्धोऽयं ग्रन्थकर्तुरसाधारणं पाण्डित्यं प्रथयति । एतद्रचनया चेतसि मे महानानन्दः समभवत् । ग्रन्थेऽस्मिन् प्रदर्शितया चिकित्सारीत्या ध्रुवं लोकोपकारः स्यादिति वैद्यैरवश्यमादरणीयोऽयं स्वसमीपे स्थापनीयश्चेति मे प्रार्थना ।

हरिद्वारम्
७।७।३१

शिवचन्द्रवैद्यः

* * * *

काशीस्थहिन्दूविश्वविद्यालयीयायुर्वेदकालेजे " प्रोफेसर "—पदमलङ्कुर्वतामायुर्वेदाचार्यश्रीजगन्नाथप्रसादवाजपेयिमहोदयानाम्—

आयुर्वेदमहाम्बुधेर्यदि शुभान्योगानमोघान्बुधा
विज्ञातुं विनियोगरीतिसहितानातङ्कसङ्घेष्वथो ।
सत्साहित्यकलाकलापजनितामोदं च वाञ्छन्ति चेद्
गृह्णीयुर्जयदेवशर्मसुकृतिं भैषज्यमञ्जूषिकाम् ।

सिद्धयोगाः समुद्दिष्टा ग्रन्थेषु विविधेषु ये ।
तेषां नाम प्रयोगस्य विधिश्चात्र निदर्शितः ॥

परम्परापरिप्राप्ता ये योगाः शीघ्रसिद्धिदाः ।
तेषां निर्माणपद्धत्या वर्णनञ्चात्र दृश्यते ॥

निदाने पूर्वमुद्दिष्टा ये नवाविष्कृतास्तथा ।
ग्रन्थेनानेन शक्यन्ते ते चिकित्सितुमामयाः ॥
श्रीहनुमत्प्रसादेन रचितामर्थबोधिनीम् ।
कुञ्चिकानामिकां टीकामवाप्यातीव सुन्दरा ॥
सैषा भैषज्यमञ्जूषा ग्राह्या वैद्यै रसप्रियैः ।
छात्रैश्च सम्मतिः सेयं जगन्नाथस्य शर्मणः ॥

काशी
२५।२।३२

वैद्यजगन्नाथप्रसादवाजपेयी.

* * *

काशीस्थमारवाडीसंस्कृतकालेजे "प्रिंसिपल"-पदमधितिष्ठता-मखिलशास्त्रपारदृश्वनां व्याकरणाचार्याणां श्रीहाराणचन्द्रभट्टाचार्यमहानुभावानाम्—

जयपुरराज्यान्तरालवर्त्तिरामदुर्गनगरनिवासिपण्डितवरश्रीयुतजयदेवशर्मायुर्वेदाचार्य-कविवर्यविरचितां सिद्धभैषज्यमञ्जूषामवलोक्य नितरां प्रीतोऽस्मि । ग्रन्थेऽस्मिन् विविधा रोगहरा योगाः प्रसादगुणगुम्फिताभिर्ललितललिताभिः कविताभिर्निबध्यमानाः सर्वानेव सहृदयजनान् मोदयन्तीति स्वानुभवसाक्षिकं रसज्ञानाम् । अत्र च रामदुर्गस्थितहरनन्द-रायरूइयासंस्कृतमहाविद्यालयप्रधानाध्यापकेन श्रीयुतहनुमत्प्रसादशर्मसाहित्याचार्यपण्डित-वर्य्येण विरचिता सुललितदेवभाषामयी कुञ्चिका टीका सरलतमा मूलाशयमुद्घाटयन्ती सम्यगुपकरोति जिज्ञासूनाम् । सोऽयं सटीको ग्रन्थः सर्वेषां वैद्यविद्याजिघृक्षूणां परमोप-काराय स्यादिति सम्भावयति—

काशी
फा० कृ० ९ सं० १९८८

काशीस्थो हाराणचन्द्रभट्टाचार्यः

* * * *

काशीस्थहिन्दूविश्वविद्यालयीयायुर्वेदकालेजाध्यक्षाणाम् ( प्रिंसि-पल) आयुर्वेदमार्त्तण्डानां श्रीधर्मदासकविराजमहाभागानाम्—

सिद्धभैषज्यमञ्जूषा जयदेवबुधोदिता ।
नागेशभट्टभणितां मञ्जूषामतिरोहति ॥
विधेयादियं वैद्यविद्योपकारं
निकारं रुजां नव्ययोगप्रचारम् ।

मुदाऽभ्यर्थये काशिकेमास्यपल्ली-
निवासी भिषग्धर्मदासाभिधोऽहम् ॥

काशी
१।३।३२ } धर्मदासकविराजः

* * *

श्रीकालिकायुर्वेदीयौषधालयाध्यक्षाणां काशीहिन्दूविश्वविद्यालये आयुर्वेदाध्यापकानां सनातनधर्मसभामन्त्रिणां भिषक्शिरोमणिकविराज-श्रीसत्यनारायणशास्त्रिणाम्-

वैद्यश्रीजयदेवशास्त्रिकविताप्रोद्वीक्षणेन क्षणात्
स्मर्तव्यैकपथाभिरेति जयदेवो गीतगोविन्दकृत् ।
लोलिम्बश्च स लौल्यमेव तनुते श्रीवैद्यविद्या शुभो-
दर्काशां समुपैति सत्कविकला त्वृद्धिं परामृच्छति ॥
प्रसादादिसद्गुण्यसञ्जुष्टया येऽ-
नया सिद्धभैषज्यमञ्जूषया नो ।
मनस्तोषमेष्यन्ति सद्वैद्यवर्याः,
न ते वै गुणज्ञा न साहित्यविज्ञाः ॥
कवेर्लोलसीतीह या काव्यरीति-
र्हनूमत्प्रसादस्य या चातुरीति ।
प्रसन्नस्ततः सत्यनारायणोऽहं
शिवं ग्रन्थरत्नस्य याचे प्रचारम् ॥

काशी
१।३।३१ } कविराजःश्रीसत्यनारायणशास्त्री

* * *

श्रीमतां विद्यावागीशानामायुर्वेदाचार्याणां काशीहिन्दूविश्वविद्यालयीयायुर्वेदकालेजे "हाउस फिजीशियन-" पदे राजतां श्रीराजेश्वर-दत्तमिश्रशास्त्रिणाम्-

जोशीत्युपाह्वश्रीजयदेवशर्मशास्त्रिकृतः सिद्धभैषज्यमञ्जूषाख्यो ग्रन्थो वस्तुतः सिद्धभैषज्यमञ्जूषैवास्ते । तदुद्घाटनाय विद्वद्वरहनुमत्प्रसादशर्मनिर्मिता कुञ्चिकाप्यत्यन्तमनोहरा । अनयोरुभयोः पाण्डित्यं कालिदासमल्लिनाथयोर्योग्यतामनुकरोतीति शम्-

काशी
१।३।३२ } राजेश्वरदत्तमिश्रः

* * * *

काशीहिन्दुविश्वविद्यालये "आयुर्वेदिकफार्मेसी-सुपरिण्टेण्डेण्ट" पदमधितिष्ठतां श्रीमतां रसायनाचार्याणां कविराजश्रीप्रतापसिंहमहाभागानाम्–

ये मोदा जयदेवगीतिषु मता लोलिम्बराजोक्तिषु
श्रीकृष्णाख्यकवेः सदुक्तिषु च ये काव्यामृतोत्था रसाः ।
रोचन्ते खलु ते समेऽत्र सरला योगाश्च शैली नवा
तत्केषां न मनो विनोदयति भो भैषज्यमञ्जूषिका ॥ १ ॥
या भैषज्यशतावली विलसिता या हृद्यपद्यावली
नानावृत्तपरा प्रसादमधुराऽनुप्रासचेतोहरा ।
सेयं श्रीजयदेवरत्नकृतिर्नूनं सुधासम्भृति-
श्चित्तं चारु चमत्करोति चतुरा वक्त्रचिकित्साचयैः ॥ २ ॥
मञ्जूषा मृदुभाषिणी विजयतां या विश्वविद्यालया-
यायुर्वेदिकशालिकासु पठतां विद्यार्थिनां धीमताम् ।
स्यान्नित्यं करपुस्तिका च भिषजां विस्फारयन्ती मनः
पेटी भेषजसंभृता गदतरीश्चेटीव चाज्ञाकरी ॥ ३ ॥
प्राचीनाधुनिकप्रगाढविषयायुर्वेदराद्धान्तयोः
सामञ्जस्यमहो महोत्तमकृतिः सेयं दधाति स्फुटम् ।
तस्माच्चारुचिकित्सितैकनिपुणैः संप्रोल्लसत्सद्गुणैः
सेव्या सर्वभिषग्भिरादरभरैर्मञ्जूषिका मञ्जुला ॥ ४ ॥
मनसो मुदं विधत्ते चारुचिकित्साप्रचारमाधत्ते ।
नवयोगानभिधत्ते सेयं समयानुकूलतां धत्ते ॥ ५ ॥
मञ्जूषाया विषये ललितपदायाः सुकुञ्चिकायाश्च ।
कविराजस्य ममैषा सम्मतिरस्ति प्रतापसिंहस्य ॥ ६ ॥

काशी
२।३।३२

कविराजः श्रीप्रतापसिंहः

*   *   *   *

श्रीकविराजप्रतापसिंहमहोदयानामेव ( इंग्लिशभाषायाम् )–

I have gone through the msnusoript of Pandit Jayadevaji of Ramgarh, Jaipur state, Rajputana. The book is a treatise on the Ayurvedic medicines. This book will meet the necessity of advanced Students of

Ayurved who want to learn new and progressive additions of present stage. The lucidity of language and expression is highly commendeble.

I hope the general public, specially the Pandits of Ayurveda, will encourage the Writer and enjoy its poetrical nectar. I have expressed my idea in senskrit poetry which will give my full appreciation the book and the author.

K. PRATAPSINHA
Rasayanacharya,
Superintendent Ayurvedic Pharmacy
Benares Hindu University.

March 2, 1932.

* * *

कलियुगजनपावनावतारभक्तजनजीवातुपरमपुमर्थप्रेमवितरणपरायणभगवत्श्रीश्रीकृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकश्रीमन्माध्वसम्प्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामि श्रीदामोदरशास्त्रिमहाभागानाम्—

जयपुरप्रान्तस्यजोश्युपाख्यायुर्वेदाचार्यकविजयदेवशर्मशास्त्रिरचितं सिद्धभैषज्यमञ्जूषानामकं निबन्धं पद्यात्मकमानुपूर्व्येणावलोकितुमलब्धावसरेणापि यावानिदमीयांशोऽवेक्षणपथं नीतो मया तावता निर्विचिकित्समेतदवधार्यते यन्न केवलमेष ग्रन्थश्चिकित्सूपकारावहः प्रत्युत काव्यच्छन्दोऽलङ्कारव्याकरणपटिमानमप्यभिलाषुकैरितो बाढं फलग्रहिभिर्भवितेतीत्थं लोकोपकृतिप्रवणं निबन्द्धारं येनोपमिमीमहे नैतादृशमुपमानमुपलभामहे। सुतरामद्सीयावगतिजन्मानं सम्मदातिरेकमन्तरमान्तमिव कतिपयवर्णमिषेण प्रचिकाशयिषुः प्रकृतटीककस्याचार्यहनुमत्प्रसादशास्त्रिणोऽपि चतुरस्रावधानबंहिम्ना मोदमानमानसो भगवतो जगदीश्वरादेतन्मञ्जूषास्यरत्नैः सर्वंपथीनं भावुकं भविनां भूयादिति प्रार्थयमानो विरमति मुधा विस्तरादिति शम्—

काशी
फा० कृ० १२
सं. १९८८

गोस्वामी दामोदरशास्त्री

* * *

श्रीमतां न्यायादिशास्त्राचार्याणां काशीहिन्दूविश्वविद्यालयीयप्राच्यमहाविद्यालयाध्यापकानां पण्डितप्रवरशास्त्रिश्रीबालकृष्णमिश्रमहोदयानाम्-

मारवारविप्रान्ववायवारिधिकौस्तुभेन कविचिकित्सकप्रवरेण श्रीजयदेवशर्मणा विनिर्मितां सिद्धभैषज्यमञ्जूशमालोक्य नितरां प्रमोदमनुभवामि। एक एवायमभूतपूर्वो निबन्धो रचयितुर्वैद्यविद्यावैशारद्यं सत्कवित्वञ्च प्रख्यापयति। एतदध्ययनेन महानुपकारो भविष्यतीति सुदृढो मम विश्वास इति—

काशी
फा० कृ० १० सं० १९८८ } बालकृष्णमिश्रः

* * * *

जयपुरराजकीयशिक्षाविभागे संस्कृतपाठशालानिरीक्षकपदमभिभूषयतां "साहित्यवैभव-" प्रभृत्यपूर्वग्रन्थनिर्मातॄणां नवकवनपथप्रशास्तॄणां साहित्याचार्यभट्टश्रीमथुरानाथशास्त्रिणाम्—

( कवित्त–घनाक्षरी )

सर्वतः सुलभसिद्धयोगाः संगृहीता यत्र,
गुणिभिर्गृहीता रम्यरीतिः प्रतिभासते।
श्रीमज्जयदेवकान्तकवितानिबद्धा सेय—
मालोचकलोककृतश्रद्धामधिविन्दते।
इतरचिकित्सापक्षपातिनां निरासकरी,
नाकनिर्झरीव बुधवाञ्छिता विराजते।
सैषा सिद्धभैषज्याग्रमञ्जूषा प्रतीपपुञ्ज—
पिञ्जूपापनोदे पूर्णपौरुषा प्रकाशते॥
साहित्याचार्यहनुमत्प्रसादैः कुञ्चिकोद्धृता।
सिद्धभैषज्यमञ्जूषा पीयूषाय प्रकल्पताम्॥

जयपुरम्
७।४।३२ } भट्टश्रीमथुरानाथशास्त्री

* * * *

श्रीमतां रत्नाकरौषधालयाधिकारिणां विहारप्रान्तेऽद्वितीयायुर्वेदप्रचारिणामायुर्वेदरत्नाकरोपाधिधारिणां चतुर्वेदिमहाभागश्रीव्रजविहारिणाम्-

आयुर्वेदाचार्यश्रीजयदेवशास्त्रिसम्पादितां सिद्धभैषज्यमञ्जूषां समालोच्य नितरामानन्दमनुभवामः। पद्यपाटवं प्रकटयति पुस्तकप्रणेतुरनुपमकविताकलापप्रभुत्वम्। साहित्याचार्यहनुमत्प्रसादशास्त्रिरचिता टीका चास्याः सुवर्णे सौगन्ध्यमिव मल्लिनाथानुकारिणी। अत्रत्या योगा अतीव सरलाः सिद्धसंकलिताश्च भूम्ना प्रतिभान्ति। आशास्महे ग्रन्थोऽयमायुर्वेदानुरागिणामत्युपकाराय कल्पिष्यते इति—

बांकीपुरम् ( पटना )
२४।४।३२ } व्रजविहारी चतुर्वेदी

श्रीः

अनुक्रमणिकारीत्या नामान्यन्वीक्ष्य सर्वतः।
योगरत्नान्ययत्नेनैवाहरन्तु विपश्चितः॥





## तृतीयकोष्ठके—

श्रीः

मञ्जूषोद्घाटनात्पूर्वं शुद्धिपत्रमधस्तनम् ।
समादाय दयाशीलैर्विधेयं दोषमार्जनम् ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ११ | कृधि | क्षुधि |
| ६ | १९ | रसंवहा | रसवहा |
| ७ | ५ | आद्यावधि | अद्यावधि |
| „ | २३ | क्रोधाय । | क्रोधाय |
| १२ | १४ | शतं | शृतं |
| १३ | १६ | भ्रष्टा | भृष्टा |
| १९ | ३ | क्वालयेत् | क्वाथयेत् |
| २१ | १ | " कंधी " | " कंघी " |
| २२ | २ | एतङ्के | एतदङ्के |
| „ | ८ | पारदः | पारदं |
| „ | १७ | शृङ्गि, कविषं | शृङ्गिकविषं |
| २४ | २१ | आमलकी | अम्लिका |
| २५ | ११ | वद्यानां | वैद्यानां |
| २९ | ५ | भ्रष्टा | भृष्टा |
| „ | १६ | लङ्करः | लङ्कारः |
| ३२ | २६ | वूयादेव | ब्रूयादेव |
| ३३ | १० | चेष्यते | चाहरेत् |
| ३४ | ९ | क्वाथे | तैले |
| ३५ | १२ | मलक्वाथः | मूलक्वाथः |
| „ | १८ | पष्ठोरः | पृष्ठोरः |
| ३६ | २० | दरूरनज | दरूनज |
| ३९ | २७ | पपटः | पर्पटः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४१ | १५ | कल्पमान | कल्प्यमान |
| ४२ | २ | पिष्टवा | पिष्ट्वा |
| ,, | ५ | घृष्टवा | घृष्ट्वा |
| ४५ | २१ | भ्रष्टा | भृष्टा |
| ,, | २५ | पिप्पली—शुण्ठी | पिप्पलीहरिताळशुण्ठी |
| ,, | २६ | नयपालानां | जयपालानां |
| ४७ | १५ | मान्याादिः | मान्याद्यैः |
| ५५ | १ | भ्रष्टा | भृष्टा |
| ,, | ३ | ,, | ,, |
| ,, | ४ | ,, | ,, |
| ,, | ,, | भ्रष्टम् | भृष्टम् |
| ५७ | ६ | भ्रष्टे | भृष्टे |
| ५९ | ३ | भ्रष्ट | भृष्ट |
| ,, | ४ | विजाय | विजया |
| ,, | २७ | धन्य | धन |
| ६५ | १८ | भ्रष्ट | भृष्ट |
| ६६ | ९ | ङ्खभस्म | शङ्खभस्म |
| ,, | १५ | गोमू | गोमूत्रे |
| ६९ | १ | कुर्वन्ती | कुर्वती |
| ,, | ११ | विधती | विदधती |
| ७५ | १ | दरीकर्त्तुं | दूरीकर्त्तुं |
| ८४ | २३ | शाकम्भ; रीयम् | शाकम्भरीयम् |
| ९९ | १३ | विमर्दैं विमर्दै | विमर्दे विमर्दैं |
| १०४ | १ | दर्वा | दूर्वा |
| ११० | १२ | हिमाल्य | हिमालय |
| ,, | २२ | स्वस्थ्य | स्वास्थ्य |
| ११३ | २५ | कीटाणनां | कीटाणूनां |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११८ | १८ | क्षयायजयी | क्षयामयजयी |
| ,, | २३ | अग्निमन्थ | अग्निमन्थः |
| ,, | २४ | कर्कटशृङ्गीं | कर्कटशृङ्गी |
| १२२ | ८ | त्वदधिकै | त्वदधिकै |
| १३४ | २३ | इात | इति |
| १३७ | १ | चूण | चूर्ण |
| ,, | ३ | क्वथेन | क्वाथेन |
| ,, | ५ | त्वं च | त्वचं |
| १४७ | ८ | मर्च्छितस्य | मूर्च्छितस्य |
| १५१ | २२ | त्तमगौ | त्तगौ |
| १६१ | २२ | मरीचग् | मरीचम् |
| १६५ | ६ | पर्पटीदीनां | पर्पटादीनां |
| ,, | २२ | श्वतेजीरं | श्वेतजीरं |
| १७१ | ५ | भक्षणीयेति | न भक्षणीयेति |
| ,, | ७ | विमद्येत् | विमर्दयेत् |
| १७४ | २१ | बिभीतः ० | बिभीतः ! |
| १८२ | ४ | शतवारी | शतावरी |
| १८७ | १३ | प्रसिद्धाषधिः | प्रसिद्धौषधिः |
| १९२ | ९ | तेऽस्वातुभवो | ते स्वानुभवो |
| १९६ | १४ | ललिता | लालिता |



कटुकषायरसा अपि माधुरीमुपगताः खलु यत्र विभान्ति ताम् ।
सुरसिका रसयन्तु सुधास्तुतिं रसवतीं जयदेवसरस्वतीम् ॥ १ ॥
तदनुगां हनुमद्बुधभारतीं प्रददतीं विदुषां प्रतिभारतिम् ।
समनुभूय भवन्तु विचक्षणाः सुकृतिनः कृतिनः सुकृतक्षणाः ॥२॥



श्रीजयदेवहनुमत्प्रसादौ शास्त्रिणाविमौ ।
यल्लेखनीकलोद्भूता मञ्जूषेयं सकुञ्चिका ॥

श्रीः

श्रीगणेशाय नमः ।

जोश्युपाख्यायुर्वेदाचार्यकविजयदेवशास्त्रिनिर्मिता

# सिद्धभैषज्यमञ्जूषा

कुञ्चिकाख्यव्याख्योपेता ।

## प्रथमप्रकोष्ठे

### उपोद्घातकोष्ठकम् ।

कारुण्यापूरभरितस्वान्तमन्तस्तमोपहम् ।
वन्दे वाङ्मनसातीतवैभवं शाम्भवं वपुः ॥ १ ॥

यल्लीलावशतो जगज्जनिलयौ चित्रं समुन्मीलतो
यन्माहात्म्यविमर्शनेऽपि मुनयः श्रान्ताः पुनः किं परे ।
यो मूलं सुकृतस्य चामृतरसस्यास्ते दयालुः प्रभुः
स्वान्ते मे प्रतिभासतां स भगवान् भक्तप्रियो माधवः ॥ २ ॥

वन्दे सन्देहसन्दोहव्यपोहचतुरं गुरुम् ।
नानाज्ञानाकरं रुग्णजनतातद्वतापहम् ॥ ३ ॥

आयुर्वेदनिधिर्गुणैर्निरवधिप्राप्तप्रतिष्ठाभरः,
साहित्याम्बुधिमन्थनोन्नतगतिः, कीर्त्या लसन् सन्मतिः ।
निर्व्याजप्रणयाप्लुतदृढहृदयः, सौहार्दहृद्यो मयि,
जीयाच्छ्रीजयदेवशर्मसुकविस्तत्पक्ष्मक्षमाः संविधाः ॥ ४ ॥

तदुक्तसिद्धभैषज्यमञ्जूषां कुञ्चिकाख्यया ।
व्याख्यया व्याकरोम्येतां भावोपेतां यथामति ॥ ५ ॥

अज्ञैरज्ञेयवृत्तिः कठिनविरचना चित्रशब्दार्थभित्ति-
श्छन्दोऽलङ्कारधाराऽगणितगुणगुरुर्गूढभावप्रचारा ।
मञ्जूषा वेश्मभूषा किमु भवति विना कुञ्चिकां कार्यसिद्ध्यै
तस्मादस्माकमस्यां यतनमिदमलं भूयसे स्यात्फलाय ॥ ६ ॥

सतीर्थ्यस्य भैषज्यमञ्जूषिकायाः सतीर्थ्येन सातीर्थ्यमेवार्पितेयम् ।
सतां कुञ्चिका टीकिका सन्तनोतु पदार्थान्मतार्थान्यथार्थं गतार्थान् ॥ ७ ॥

इह खल्वस्मत्परमसुहृज्जयपुरराज्यान्तःपातिरामदुर्गस्थजोश्याख्यकुलावतंसः, आयुर्वेदाचार्यशास्त्र्यादिविविधप्रशस्ति विभ्रत्, श्रीमज्जयदेवशर्मसुकविर्नानातङ्कनिपीडितान् जनानुद्दिधीर्षुः, प्रत्नानिबन्धैरगतार्थतां समर्थयमानो गुरुकृपापीयूषपाकोद्भवानायुर्वेददधिमन्थनोत्थांश्च विविधप्रयोगान्सम्यक् संगृह्य, आधुनिकांग्लयावनायुर्वेदप्रसिद्धानपि सिद्धान् कांश्चित्प्रयोगान्संमेल्यानेकैर्वर्षैः स्वयमनुभूय, वैद्यविद्यासम्बन्धबन्धूनामप्युपचिकीर्षया, स्वयशःप्रचिख्यापयिषया चेमां " सिद्धभैषज्यमञ्जूषां " निर्मित्सुः प्रत्यूहव्यूहव्यपोहार्थं शिष्टपरम्पराप्राप्तं मङ्गलमारचयति- जयतीत्यादिभिः पद्यैः । तत्रापि संसारामरसुरनरदेशभेदेन वैद्यानां चतुर्विधत्वं मत्वादौ संसारभिषजं देवदेवं महादेवमुपवर्णयति—

जयति विभुर्भववैद्यो भुवनव्याधिप्रतिक्रियाकुशलः ।
सेवकजनैकबन्धुः करुणासिन्धुर्महेशानः ॥ १ ॥

जयतीति—भववैद्यः, भवस्य=संसारस्य वैद्यः=चिकित्सकः, यद्वा—भवत्यस्मात्संसार इति भवः=शिवः स एव वैद्यः । यस्माज्जगदुदेति तस्य पालनद्वारेण तच्चिकित्सकत्वमुचितमेव । भुवनव्याधिप्रतिक्रियाकुशलः, भुवने=संसारे ये यावन्तो व्याधयः=रोगास्तेषां प्रतिक्रियायाम्=प्रार्थनेनाभिमतदातृत्वान्नाशने कुशलः=प्रवीणः, यद्वा—भुवनम्=विश्वमेव व्याधिस्तत्प्रतिक्रियायां कुशलः । मुक्तिप्रद इति यावत् । यद्वा—भुवनशब्देन तद्गता त्रित्वसंख्यात्र विवक्ष्यते, तेन त्रिविधाः=आध्यात्मिकाधिदैविकाधिभौतिका वा, कायिकवाचिकमानसिका वा, आत्ममनःशरीराधिष्ठिता वा ये व्याधयः=क्लेशा आधयो दोषकर्मोभयनिमित्ता रोगा वा तेषां प्रतिक्रियायां कुशलः । सेवकजनानाम्=अनन्येनैव योगेन ध्यायतामेकः=असाधारणो बन्धुः=योगक्षेमनिर्वोढृत्वेन बन्धुतुल्यः । करुणायाः=निरवधिकृपायाः सिन्धुः=अगाधसमुद्र इवाधारभूतः । विभुः=सर्वव्यापको महेशानः=महादेवो जयति=सर्वोत्कर्षेण वर्तत इति । सर्वेषु च स्वस्याप्यन्तःपातित्वात्स्वापेक्षयापि तस्योत्कृष्टत्वात्स्वस्य च ततोऽपकृष्टत्वात् " नमस्कार्यावधिकप्रयोक्तृपुरुषविशेषनिष्ठापकर्षबोधनानुकूलव्यापारस्य " नमःशब्दार्थत्वाज्जयत्यर्थेनात्र नमस्कारः आक्षिप्यते इति तं भगवन्तं प्रत्यहं प्रणत इति लभ्यते । अत्र श्लोके पूर्वार्धे एकस्यापि भकारस्यासकृदावृत्त्या साम्येन वृत्त्यनुप्रासो नाम शब्दालङ्कारः। उत्तरार्धे तु छेकानुप्रासाभासो रूपकमर्थालङ्कारश्च । पथ्यार्यावृत्तम् । आदौ नगणप्रयोगाद्ग्रन्थस्यास्य सुखप्रदता सूच्यते ॥

एवं भववैद्यस्तवानन्तरं क्रमप्राप्तौ सुरवैद्यौ स्तौति—

वन्दे तौ सुरभिषजौ चलितं याभ्यां चिकित्सितं चारु ।
अवलम्ब्योज्झितशोकः ससुखो जीवति चिरं लोकः ॥ २ ॥

वन्दे इति—अत्र याम्यामिति पञ्चमी । याम्याम्=अश्विभ्यां चलितम्=प्रवृत्तं चारु=मनोहरं वातादिदोषत्रयविज्ञानसिद्धत्वेन निर्दुष्टमिति यावत् । चिकित्सितम्=चिकित्साप्रतिपादकमायुर्वेदागममवलम्ब्य=उपायत्वेनाश्रित्य लोकः=संसारस्थो जनः, उज्झितः त्यक्तः शोकः=शोकजनको रोगसमूहो येन तादृशस्तथा ससुखः सुखेन=सुखजनकेनारोग्येण सहितः सन् चिरम्=पुरुषायुषं यावत् जीवति, तौ=तादृशौ लोकवेदप्रसिद्धौ सुरभिषजौ=देववैद्यौ भगवन्तावश्विनौ वन्दे=अभिवादये । पद्येऽत्रापि पूर्ववद्वृत्त्यनुप्रासच्छेकानुप्रासावलङ्कारौ । पथ्यार्या ॥

अधुना सुरनरवैद्यं धन्वन्तरिमुपस्तौति—

**धन्वन्तरिमहमीडे यस्य कृपातोऽमरत्वममरेषु ।**
**यन्मुखगलितादगदाद्भवन्ते नीरुजा मनुजाः ॥ ३ ॥**

धन्वन्तरिमिति—यस्य भगवतः कृपातः=करुणयैवामरेषु=देवेषु अमरत्वम्=मृतिराहित्यं वर्तते इति निरुक्तिर्नाम काव्यलक्षणम् । " आविर्बभूव कलशं दधदर्णवायः पीयूषपूर्णममरत्वकृते सुराणाम् । " इत्येवं पुराणसिद्धकथया भगवतो धन्वन्तरेः सुराणाममरीकरणं सुप्रतीतमेवेति तत एवावसेयम् । तथा, यन्मुखगलितात्=यदाननेन्दोराविर्भूतादगदात्=रोगप्रत्यनीकादायुर्वेदामृतान्मनुजाः=मानवाः, न केवलं त एवापि तु सर्वे प्राणिनो नीरुजाः=रोगनिर्मुक्ताः सन्ति । सह्हि देव आयुर्वेदप्रवर्तकः। तं धन्वन्तरिमहमीडे=स्तौमि । पूर्ववद्वृत्तमलङ्कारश्च ॥

अधुना स्वगुरू स्तौति—

**देशवैद्यं गुरुवरं चिकित्सामृतसागरम् ।**
**नुमोऽबोधतमःस्तोमतरणिं च भिषङ्मणिम् ॥ ४ ॥**

देशेति—देशे वैद्यो देशवैद्यस्तम् । अत्र वैद्यशब्दगतैकत्वसंख्यां विवक्षित्वा सकले शेखावाटीप्रदेशे योऽद्वितीयो वैद्य इत्यर्थकरणेन इतरवैद्यातिशायितया सकलजनप्रार्थ्यमानतया चातीव प्राशस्त्यं व्यज्यते । गुरुषु=वर्णमातृकामारभ्य गहनशास्त्रपर्यन्तमुपदिष्टवत्सु वरम्=श्रेष्ठम् । चिकित्सैवामृतं तस्य सागरम्=समुद्रम्, श्लेषमर्यादया—चिकित्सया=भनितरसाधारणचिकित्साकरणेनामृतम्=अमरम्, चिरस्थायियशःप्रसरमिति यावत्, तादृशं सागरम्=सागरमल्लशर्मनामकं पिलानीवास्तव्यमधुना मोहमयीमधिवसन्तं वैद्यतल्लजं, तथा—अबोधः=पदार्थतत्त्वाज्ञानमेव तमःस्तोमः=अन्धकारसमूहस्तत्र तरणिम् । सूर्यम् । चिरप्ररूढं शास्त्रसन्देहसन्दोहं यो हेलयैव निरमूलयत्तं तादृशमिति यावत् =

भिषङ्मणिरिवेति. भिषङ्मणिस्तम्=मणिमिव प्रकाशमानमित्यर्थः । पूर्ववत्–भिषक्चासौ मणिः=काश्मीरिको हरनन्दरायसंस्कृतकालेजप्रधानायुर्वेदाध्यापक आयुर्वेदाचार्यः प्रख्यातकीर्तिः श्रीमणिरामशर्मवैद्यमहाभागस्तं च नुमः=सविशेषभक्त्या प्रणमामः । अत्र कविना आयुर्वेदप्राथमिकशिक्षागुरुः श्रीसागरमल्लशर्मा द्वितीयो गुरुः श्रीमणिरामशर्मा आयुर्वेदाचार्यश्चेति सूचितम् । अनुप्रासः, श्लेषो रूपकञ्चेत्यलङ्काराः ।

**ते सन्तोऽपि नमस्यन्ते ये सहन्ते परोन्नतिम् ।**
**उपकारपराः शूराः कृपायां क्रुधि कातराः ॥ ५ ॥**

त इति—ये परस्य=स्वातिरिक्तस्य योग्यविदुषः उन्नतिम्=ग्रन्थनिर्माणवैदुष्यख्यात्यादिरूपमभ्युदयं सहन्ते=महोदारविचारत्वात्तत्र मात्सर्यमप्रकाशयन्तस्तत्प्रचारादिकर्मणि सहयोगमाकलयन्ति, अतएव—उपकारपराः=परोपकारयशसा धनिनः, कृपायां शूराः=वीराः, यतस्ते उपकारपराः । किञ्च, क्रुधि=क्रोधविषये कातराः=कारणे सत्यपि येषां न कदाचित्क्रोधप्रयुक्तो मुखरागः समुद्भवतीत्यर्थः । ते=एवं गुणविशिष्टाः सन्तः=महात्मानोऽपि मया नमस्यन्ते=हार्दिकेन प्रेम्णा नमस्क्रियन्ते । त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः, परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्तो मदीयामिमां " सिद्धभैषज्यमञ्जूषां " जगतः किञ्चिदुपकरिष्यन्तीमाकलय्य हृदयेनाभिनन्दन्त एतत्समादरे दयां दर्शयेयुरिति सङ्कलयितुर्गूढाभिसन्धिः । अनुप्रासच्छटात्रापि ॥

अधुनोपादेयतां ध्वनयन् स्वविधेयं प्रतिजानीते—

**आयुर्वेदमहोदधिलब्धामोघप्रयोगरत्नाढ्याम् ।**
**भिषजां सदनविभूषां विदधे सिद्धप्रयोगमञ्जूषाम् ॥ ६ ॥**

आयुर्वेदेति—आयुर्वेदः=" आयुर्हिताहितं व्याधिर्निदानं शमनं तथा । विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते ॥ अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च । तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः ॥ हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् । मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ "—इत्येवमुपवर्णितमाहात्म्यम्, हेतुलिङ्गौषधज्ञानम्, स्वस्थातुरपरायणम्, निखिलसुरनरतिर्यगासुरारोग्यप्रदम्, शल्यशालाक्यकायचिकित्साभूतविद्याकौमारभृत्यागदतन्त्ररसायनतन्त्रवाजीकरणतन्त्रेत्यङ्गाष्टकयुतम्, पुण्यम्, शाश्वतिकम्, अनुत्पाद्यैव प्रजाः स्वयंभुवा निर्मितमथर्ववेदस्योपाङ्गभूतं शास्त्रम्, स एव महानुदधिः=अगाधत्वादनन्तपारत्वादकृतमतीनामगम्यरूपत्वाच्च महासमुद्रः, तस्माल्लब्धाः=गुरुकृपापरिपाकात्स्वीयपरिशीलनाच्च संप्राप्ताः, येऽमोघाः=सफलाः, रामबाणवदप्रतिघातेन

कार्यकरा इति यावत्, प्रयोगाः=औषधप्रकारास्त एव रत्नानि, अनर्घत्वादित्यर्थः । तैराढ्याम्=कृतापूरणाम् । भिषजाम्=भारतीयायुर्वेदे चिकित्सायाञ्चाभिमानवतामार्षसिद्धान्तेषु श्रद्दधतां वैद्यमहाभागानां नतु विदेशीयवेषभूषाविदूषितशरीराणां तदीयवाह्याडम्बरचाकचिक्यचिल्लीभूतचक्षुषां स्वीयं सर्वमेव विनिन्दतां भिषक्पांशानाम्, सदनविभूषाम्=एकयैवानया निखिलरोगसमूहनिवारणसिद्धया गृहशोभासम्पादयित्रीम्, सिद्धप्रयोगमञ्जूषाम्=सिद्धानां प्रयोगानां मञ्जूषेव मञ्जूषा तां, "सिद्धभैषज्यमञ्जूषा—" भिधं ग्रन्थमिति यावत्, विदधे=सम्पादयामि ॥ अत्र रूपकमनुप्रासश्चालङ्कारौ । गीतिश्छन्दः ।

**धातूपधातुघटितां जटितां रत्नैर्मनोरमैरनघैः ।**
**प्रमदामिव सुखफलदामङ्गीकुर्वन्तु पेटिकां भिषजः ॥ ७ ॥**

धात्विति—भिषजः!=अयि वैद्याः! धातूपधातुघटिताम्=धातवः—"स्वर्णं रूप्यं च ताम्रं च वङ्गं यसदमेव च । सीसं लोहं च सप्तैते धातवो गिरिसंभवाः ॥" इत्युक्ताः, उपधातवः—"सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् । तुत्थं कांस्यं च रीतिश्च सिन्दूरश्च शिलाजतु॥" इत्येवमुक्तास्तैर्घटिताम्=लक्षणया तच्छोधनमारणप्रयोगविधिप्रतिपादयित्रीम् । तथा-मनोरमैः=सरलैरुपायैः साध्यत्वादनुद्वेगजनकत्वाच्च चेतोहरैः । अनघैः=निर्दोषैः, यथाशास्त्रं विहितत्वादनेकवारं परीक्षितचमत्कारत्वाच्च परिशुद्धैरित्यर्थः । तादृशै रत्नैः=औषधप्रयोगमणिभिर्जटिताम्=यथाधिकारं यथास्थानं च कृतप्रयोगसंविभागाम् । सुखफलदाम्=सुखं-सुखजनकमारोग्यरूपं फलं ददातीति तादृशीमिमां पेटिकाम्="सिद्धभैषज्यमञ्जूषाम्," प्रमदाम्=प्रकृष्टमदां वनितामिव भवन्तोऽङ्गीकुर्वन्तु । प्रमदापि धातूपधातुभिः=रसासृङ्मांसमेदोऽस्थ्यादिभिर्घटिता, मनोरमैरनघै रत्नैर्जटिता,सुखजनकापत्यरूपफलदायिनी भवति। अत्र—उपमानोपमेयसाधारणधर्मोपमावाचकशब्दानां चतुर्णामुपादानेन पूर्णोपमालङ्कारः । गीतिश्छन्दः ।

**नेयं तथा यथान्या भाराय स्यादतो गले लान्तु ।**
**अन्यास्ता गृहभूषा मञ्जूषा कण्ठभूषासौ ॥ ८ ॥**

नेयमिति—यथान्या मञ्जूषाश्चौरादिकृतापहरणादिवर्जनाय भारवल्लोहघटितत्वाद्भाराय भवन्ति, तथा नेयं भवतां भाराय स्यादत इमां सोत्कण्ठं कण्ठे भवन्तो गृह्णन्तु । ननु मञ्जूषा गृहे स्थाप्यते न तु केनचित्कण्ठे इति किमिति तथा कर्तुमेव प्रोत्साह्यामहे इति मास्म शङ्किषत, यतो गृहभूषास्ता अन्या=लोहादिघटिता मञ्जूषा भवन्ति, असौ="सिद्धभैषज्यमञ्जूषा" तु भवतां कण्ठभूषा भविष्यति । अत्रोल्लिखिताः प्रयोगाः सर्वे बहुशोऽनुभूताः, चिकित्सारीतिश्च तथा सरलसरलेन पथा निरदेशि यथा नान्यः

कश्चन ग्रन्थोऽत्रापेक्षिष्यते इति भवन्तश्चेदिमां कण्ठस्थां कुर्युरवश्यमियं ललितललितैः पदैर्जनमनांसि मोहयन्ती भवतां कण्ठान्भूषयिष्यतीति निर्मातुराकूतकम् । अत्रोपमेयाधिक्यपर्यवसायी व्यतिरेकोऽलङ्कारः, अनुप्रासश्च । पथ्यार्यावृत्तम् ॥

सद्वृत्तार्थवती सती गुणवती सालङ्कृतिः सुश्रुति–
र्निर्दोषा निरवग्रहा रसवहा सद्वर्णवाग्विग्रहा ।
प्रत्यग्राभ्युदया पुनः सहृदयानन्दोदयावासभू–
र्मञ्जूषा रमणीव रम्यवचना कस्यास्ति न प्रीतये ॥ ९ ॥

सद्वृत्तेति—इयं मञ्जूषा रमणी=महिलेव कस्य प्रीतये नास्ति, अपि तु सर्वस्यैव । यः श्रोता, यश्च द्रष्टा, यश्चाप्यनुभविता सर्वानप्येतानियं सर्वथा प्रीणयतीत्यर्थः । कीदृशीयम्? सन्ति=शोभमानानि वृत्तानि=आर्यागीत्यादिच्छन्दांसि यस्यां तादृशी । अन्यत्र–सद्वृत्ता=सदाचरणप्रवणा । अर्थवती=चमत्कारजनकार्थशालिनी, चिकित्सकानां धनादिसाधनायालंभवित्रीच । रमणीपक्षे–पुत्रादिप्रयोजनवती "व्यये चामुक्तहस्तया" इति शास्त्रोक्तगुणशालित्वाद्धनवती च । सती=श्रेष्ठा शोभमाना वा, अन्यत्र–साध्वी । गुणवती=माधुर्यौजःप्रसादाख्यकाव्यगुणविशिष्टा, अन्यत्र–रूपौदार्यचातुर्यादिगुणगणगणनीया । सालङ्कृतिः=उपमानुप्रासाद्यलङ्कारसहिता, अन्यत्र–कटककुण्डलाद्याभरणप्रभाभासुरा । सुश्रुतिः=मञ्जूषापक्षे–सुखश्रवा, रमणीपक्षे–श्रेष्ठश्रवणवती सुकीर्तिमती च । निर्दोषा=श्रुतिकटुत्वादिकाव्यदोषवर्जिता, अन्यत्र–व्यभिचारादिदोषरहिता । निरवग्रहा=इतरनिरपेक्षत्वेन स्वतन्त्रा, रमणीपक्षेऽनिरवग्रहेतिच्छेदेनास्वतन्त्रा, पतिवश्येत्यर्थः । रसवहा=एकत्र–रसान्पारदविकारभूतांश्चन्द्रोदयादीन्वहति तादृशी, अपरत्र–पतिविषयकप्रेमवती । सद्वर्णवाग्विग्रहा=मञ्जूषापक्षे सन्तो वर्णा यस्यां तादृशी वाक्=शब्द एव विग्रहः=शरीरं यस्यास्तथाभूता, रमणीपक्षे–सन्तो वर्णश्च वाक्च विग्रहश्च यस्याः सा=सद्रूपा, सद्वचना, सच्छरीरा चेत्यर्थः । प्रत्यग्राभ्युदया, प्रत्यग्रः=अभिनवोऽभ्युदयः=उन्मेषो यस्याः सा, नूतनतयैव जगति प्रकाशमासादयन्तीत्यर्थः । रमणीपक्षे तु नवोढेत्यर्थः । सहृदयानन्दोदयावासभूः, सहृदयानाम्=रसिकजनानां य आनन्दस्योदयस्तस्यावासभूः=स्वच्छन्दास्पदमन्दिरमित्युभयत्र समानोऽर्थः । तथा रम्याणि=एकत्रानुप्रासच्छटाविच्छुरितत्वादपरत्र स्वभावतः अनृतत्वान्मञ्जूनि वचनानि यस्यां तादृशी । एवंविधां मञ्जूषामिमां वीक्ष्यावश्यं श्रीमन्तः प्रसीदन्त्वित्यभ्यर्थना । अत्र-श्लेषानुप्राणिता पूर्णोपमा, अनुप्रासच्छटा च । शार्दूलविक्रीडितं छन्दः ॥

चित्रशब्दार्थसम्पन्ना नानाबन्धविभूषिता ।
सदौषधसमापूर्णा मञ्जूषा कस्य नो मुदे ॥ १० ॥

चित्रेति—चित्राः=प्रतिपदं नवीनतां धारयन्तो ये शब्दा अर्थाश्च तैः सम्पन्ना, नाना=अनेकविधा ये बन्धाः=चक्रबन्धमुसलबन्धादिचित्रकाव्यरचनाप्रकारविशेषास्तैर्विभूषिता, सन्ति=आद्यावधिरामबाणताख्यापनपुरःसरमन्यत्राप्रकाशितत्वेन ग्रन्थेऽस्मिन् सुन्दरविधया बोधितत्वेन च सर्वश्रेष्ठानि यान्यौषधानि=सिद्धप्रयोगास्तैः समापूर्णा मञ्जूषेयं कस्य मुदे नो भविष्यति, सर्वस्यापि हृदये सान्द्रानन्दं निःस्यन्दयिष्यतीत्यर्थः ॥

सत्सु नानानिबन्धेष्वेतद्ग्रन्थग्रथनप्रयोजनं विवृणुते—

सिद्धा योगाः कीर्तिता ये प्रत्ननूत्नचिकित्सकैः ।
तेषां सङ्ग्रहणायैव मञ्जूषेयं विरच्यते ॥ ११ ॥

सिद्धा इति—प्रत्नाः=पुराणा भगवन्तश्चरकादयो महर्षिप्रवरास्तच्छिष्यपारम्परीपरिप्राप्तपटुप्रसराश्च, नूत्नाः=आधुनिकाः कतिपये स्वासाधारणविद्याविभवेन, विदेशीयैर्विधर्मिभिश्च स्वीयाचारप्रचारमीहमानैरामूलादुन्मूलयितुमुपकल्पितस्यार्षायुर्वेदागमस्य समुद्दिधीर्षयानेकशः शिष्याननुशिष्य दिक्षु प्रचारणेन च जगति प्रसिद्धयन्तो ये चिकित्सकाः=वैद्यमहाभागास्तैर्ये सिद्धा योगाः कीर्तिताः=स्वीयनिबन्धेषु निबद्धाः मुखतश्च समुपदिष्टास्तेषां सङ्ग्रहणाय=अनेकत्र प्रसृतैस्तैर्जगत उपकारप्रतिबन्धमवेक्ष्यैकत्र निबद्धय प्रचारणायैवेयं मञ्जूषा विरच्यते । नान्यः कश्चिद्धेतुरिति ध्येयम् ॥

किमनया सेत्स्यतीत्याह—

रोगसागरशोषाय पोषाय प्रतिकर्मणाम् ।
सतां तोषाय रोषाय द्विषामेषा भविष्यति ॥ १२ ॥

रोगेति—एषा=मञ्जूषा रोगसागरशोषाय, प्रतिकर्मणाम्=चिकित्साङ्गानां पोषाय=पुष्ट्यै, सताम्=गुणैकपक्षपातिनां महानुभावानां तोषाय तथा द्विषाम्=दोषान्वेषणतत्पराणां गुणवत्स्वपि पौरोभाग्यमाचरतां रोषाय=क्रोधाय । भविष्यति । ग्रन्थेऽस्मिन्साभिनिवेशं दोषानन्वेषयन्तोऽपि स्वाभीप्सितमनासाद्य दुष्टा रुष्टा असन्तुष्टाश्च भविष्यन्तीति भावः । अनुप्रासः ॥

श्रुतेऽपि मत्प्रबन्धेऽस्मिन्मन्दोऽप्यानन्दमश्नुते ।
किं पुनस्तदभिप्रायचिन्तने चतुरो नरः ॥ १३ ॥

श्रुत इति—अस्मिन्=मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजि मत्प्रबन्धे=मद्रचितसिद्धभैषज्यमञ्जूषाभिधग्रन्थे श्रुते=श्लोकमात्रपाठेन कर्णे पातितेऽपि मन्दः=पदपदार्थपर्यालोचनपरिहीणमतिरपि जन आनन्दम्=सान्द्रसुधारसावगाहनमिव विगलितवेद्यान्तरं कमपि लोकोत्तरचमत्कारमश्नुते=अनुभवति। तदभिप्रायचिन्तने चतुरः=एतदीयरचनासौष्ठवभावगाम्भीर्यादिमर्मज्ञस्तथात्रोल्लिखितप्रयोगसारासारविचारपारीणश्च नरः पुनरानन्दमश्नुते इति किमु वक्तव्यम्! पद्येऽस्मिन्—मकारदकारचकारादीनामनुप्रासो रमणीयः। अर्थापत्तिरपि।

विगुणापि मदुक्तिर्वा सुखाय समुदेष्यति।
स्वर्णाभरणभारोऽपि केषां कष्टाय जायते॥ १४॥

विगुणेति—वा=अथवा, मा भूवन्नत्र मदुक्ताः केऽपि गुणास्तथापीयं मदुक्तिर्विगुणा सत्यपि युष्माकं सुखाय=निरतिशयानन्दजननाय समुदेष्यति=उदयं लप्स्यते इति दृढो ममाशाबन्धः। ततश्च "नहि कस्तूरिकामोदः शपथेन विभाव्यते" इति न्यायमनुसरन्नेतद्गुणवर्णने मौनमेवावलम्बे। अत्र मदुक्तिर्विगुणापि-भवतां सुखं संजनयिष्यतीति विरोधः। श्लेषेण—विविधा गुणाः=माधुर्यादयो यस्यां सेति तत्परिहारः। स्वर्णेति, नहि काचित्कामिनी आपादतलमस्तकं मण्डनमण्डितापि कथंचित्सन्तुष्यति प्रत्युताधिकेभ्य एव स्पृहयतीति भावः। अत्र दृष्टान्तोऽर्थालङ्कारश्छेकानुप्रासश्च॥

रोचते कविता नो चेदादेयं त्वौषधामृतम्।
अपि क्षारादकूपारान्मणिराशिरवाप्यते॥ १५॥

रोचते इति—चेत्कालिदासादिकाव्यवैदग्धीमुग्धेभ्यो भवद्भ्यो भिन्नरुचित्वादेतदीया कविता न रोचते, अथापि ग्रन्थादस्मादौषधामृतन्त्वादेयमेव। क्षारादप्यकूपारात्=समुद्रान्मणीनां राशिरवाप्यत एव। नहि व्यवसायिनः क्षारवारिमकरौर्वाग्निभिराहता अपि विरमन्ति, प्रत्युतानेकैरुपायैर्नवनवैश्चाविष्कारैर्मणिराशिमभीप्सितमासाद्यैव विश्राम्यन्ति। दृष्टान्तश्छेकानुप्रासश्च॥

निकृष्टादपि चोत्कृष्टं गृह्णात्येवाशु सारवित्।
नीचानीतापि कस्तूरी कस्तूरीकुरुते न ताम्॥ १६॥

निकृष्टादिति—सारवित्=विवेकपटुर्निकृष्टात=स्वतो न्यूनादपि, उत्कृष्टं वस्त्वाशु गृह्णात्येव नतु तत्संसर्गदोषं विमृश्य परिजिहीर्षति। कस्तूरी नीचेन=हिंसादिनिरतेन पर्वतीयेन काम्बोजादिना म्लेच्छेनाप्यानीतास्ति, किन्तु, कस्तां नोरीकुरुते। सर्व एव तदीयगुणमुग्धस्तां गृह्णाति। वैधर्म्यनिबन्धना प्रतिवस्तूपमा यमकमनुप्रासश्चेत्यलङ्काराः।

अत्र गुणगृह्यालुनभ्यर्थयते—

अनुभूय क्रियाः सर्वाः सन्दर्भेऽत्र प्रदर्शिताः ।
क्षणं कृपाकटाक्षांस्तत्क्षिपन्त्विह विचक्षणाः ॥ १७ ॥

अनुभूयेति—अत्र सन्दर्भे सर्वाः क्रियाः स्वयमनुभूय=प्रत्नतूत्ननिबन्धसन्दर्भान्सर्वानप्रत्यान्योगान्निर्माय, तत्सत्यासत्यत्वे सम्यक्परीक्ष्य, " व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत् । अनुक्तमपि यद्युक्तं योजयेत्तत्र तद्बुधः ॥" इति शिष्टशासनानुरोधेन विसंवादान्परिहृत्य च प्रदर्शिताः । तत्=तस्माद्विचक्षणाः=बुद्धिमन्तः क्षणमिह कृपाकटाक्षान् क्षिपन्तु, सदसद्विवेकेन ग्रन्थमिमं समालोचयन्त्वित्यर्थः । वृत्त्यनुप्रासोऽलङ्कारः ॥

अल्पिष्ठाप्यर्थभूयिष्ठा गरिष्ठा योगतल्लजैः ।
श्लोकैः श्रेष्ठा गुणैः प्रेष्ठा तत्प्रतिष्ठाप्यतां बुधैः ॥ १८ ॥

अल्पिष्ठेति—यत इयं मञ्जूषा प्रमाणतोऽल्पिष्ठाप्यर्थभूयिष्ठा=प्रतिपाद्यार्थबाहुल्यवती, एनामनुसृत्य चिकित्सामाचरतां धनादिप्रयोजननिष्पादनायालम्भविष्णी च । तथा योगतल्लजैः=श्रेष्ठप्रयोगैर्गरिष्ठा, श्लोकैः श्रेष्ठा, किञ्च गुणैः=माधुर्यादिभिः काव्यगुणैर्विषयप्रतिपादनसारल्यादिभिश्च प्रेष्ठा=प्रियतमा विद्यते, तत् बुधैः=न केवलं ग्रन्थभारवहनदुर्भगैः, किन्तु सारासारविवेकपटुत्वादन्वर्थैर्विद्वद्भिरियं प्रतिष्ठाप्यताम्=अस्याः प्रामाणिकतासमुद्घोषणद्वारेण जगति प्रचारं लम्भ्यताम् । अत्र वृत्त्यनुप्रासच्छटा ॥

साङ्कर्यविलोपादिदोषपरिजिहीर्षया प्रमाणमप्याह—

सगर्भा साधुसन्दर्भा द्विप्रकोष्ठाष्टकोष्ठका ।
विज्ञैः सा योगमञ्जूषा स्थाप्यतां स्वस्ववेश्मनि ॥ १९ ॥

सगर्भेति—इयं योगमञ्जूषा सगर्भा=योगाख्यगर्भवती, साधुः=मनोहरः सन्दर्भः=रचनाप्रकारो यस्यास्तादृशी तथा द्विप्रकोष्ठाष्टकोष्ठका चास्ति,सा विज्ञैः स्वस्ववेश्मनि=स्वीये स्वीये सदने स्थाप्यताम्=निधीयताम् , न केवलं तथैव क्रियतामपि तु योगमञ्जूषेयमनेकशः परिशील्यतामेतदीयप्रयोगानादाय चिकित्स्यतां चेत्याकूतम् । इदमस्याः प्रमाणम्—मञ्जूषायां हि प्रकोष्ठकानि कोष्ठकानि च भवन्ति, तथैवात्रापि "सिद्धभैषज्यमञ्जूषायाम्" द्वे प्रकोष्ठे प्रतिप्रकोष्ठञ्च चत्वारि चत्वारि कोष्ठकानि षोडशशानि योगरत्नानि चानेकानीति ।

संप्रति कोष्ठसमाप्तौ स्वकीर्त्यनुवृत्तये स्ववंशादिकमाह—

विप्राग्रणीश्यामलरामसूनुर्यो रामदुर्गे जयदेवजोशी ।
तस्यानुभूतौषधपेटिकायां यातं समाप्तिं प्रथमं हि कोष्ठम् ॥२०॥

इति श्रीसिद्धभैषज्यमञ्जूषायां प्रथमप्रकोष्ठे प्रथमं कोष्ठम् ।

---

विप्रेति—विप्राणाम्= " पोद्दार"वंशीयवैश्यकुलगुरूणां "जोशी" इत्युपाधिभाजां खण्डेलवालब्राह्मणानामग्रणीर्यः श्यामलरामः=प्रसिद्धः पण्डितसांवलरामशर्मा तत्सूनुः । रामदुर्गे=" रामगढ़" इति प्रसिद्धनगरे । जयदेवजोशी पञ्चाम्बु ( पंजाब ) विश्वविद्यालयतो लब्धशास्त्रिपदवीको निखिलभारतवर्षीयायुर्वेदविद्यापीठतश्च लब्धायुर्वेदाचार्यपदवीकः । एतदीयं संक्षिप्तं चरितमग्रे वर्णयिष्यते । पेटिका=" पेटी" इति ख्याता मञ्जूषा ।

बाल्ये भ्रातुरसीमवत्सलतया यो जातशिक्षाक्रमः
श्रीश्रीदत्तगुरोः कृपामरतरोराप्तानवद्यागमः ।
वैद्यानां मणिरामशर्मगुरुणा सिद्धान्तमध्यापितोऽ-
ध्यक्षः सम्प्रति रामदुर्गऋष्याकालेजकाध्यापने ॥
श्रीमत्पण्डितफुल्लचन्द्रजनुषाऽऽचार्यप्रशंसाजुषा
बीकानेरनृपेष्टरत्ननगरे संवासिना शास्त्रिणा ।
तेन श्रीहनुमत्प्रसादविदुषा भैषज्यमञ्जूषिका-
कोष्ठे कुञ्चिकयाऽऽदिमं सुविवृतं माधुर्यधुर्याक्षरैः ॥

इति श्रीसिद्धभैषज्यमञ्जूषायाः प्रथमप्रकोष्ठीयप्रथमकोष्ठक-
विवरणे कुञ्चिकायाः प्रथम आवर्त्तः ॥



---

१- पैतृष्वस्रीयस्य रामदुर्गवास्तव्यस्य भिषक्चूडामणेः श्रीमत्पण्डितरामेश्वरप्रसादशर्मणः ।

# प्रथमे प्रकोष्ठे

## द्वितीयं कोष्ठकम्

### अथ ज्वराधिकारः

अथास्तिकधुरन्धरः, " ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीय" मिति शिष्टाचारमनुसन्धानस्तत्रभवान्माङ्गलिकः कविर्मध्येग्रन्थं मङ्गलं प्रध्नाति—

**शङ्करचरणसरोजं सुरमुनिमधुपैर्निषेवितं भक्त्या ।**
**प्रज्ञामधुवरलुब्धः समाश्रये त्रिविधतापघ्नम् ॥ १ ॥**

शङ्करेति—सुराश्च मुनयश्चेति त एव मधुपाः=भ्रमरास्तैर्भक्त्या=निरतिशयप्रेम्णा निषेवितम्, तथा त्रिविधाः=आध्यात्मिकादिभेदेन कायिकादिभेदेन वा त्रिप्रकारा ये तापाः= दुःखानि, तान् हन्तीति तादृशं शङ्करचरणसरोजम्= शिवचरणकमलं, प्रज्ञामधुवरलुब्धः प्रज्ञैव मधुवरम्=अमन्दमकरन्दस्तत्र लुब्धोऽहं समाश्रये=सेवे ॥ अत्र पद्ये रूपकमर्थालङ्कारः। पथ्यार्यावृत्तम् । अत्र समासपुनरात्तताभयं चेच्चतुर्थचरणं " त्रितापपापापहं कलये" इत्येवं विपरिवर्त्य पाठ्यम् ॥

इह सर्वेष्वेवायुर्वेदनिबन्धेषु सर्वरोगप्रधानत्वादादौ ज्वरस्यैव निदानचिकित्सादिकं वर्ण्यते । प्रस्तुतग्रन्थकारोऽपि तमेव सम्प्रदायं समाददानः प्रथमं ज्वरचिकित्सां निबध्नाति । तत्प्राधान्यञ्च—

देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली ।
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥ इत्यादिना,
ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ।
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥

इत्यादिना च चरकवाग्भटाद्याचार्यैरुपनिबद्धं द्रष्टव्यम् । तत्र च ज्वरागमनभयमेव तावद्वारयति—

**विष्णोर्नामसहस्रं जपतः शङ्का कुतो ज्वरातङ्कात् ।**
**तस्य कथं ज्वरभीतिर्यस्य च शम्भोः पदे प्रीतिः ॥ २ ॥**

विष्णोरिति—" विष्णुसहस्रनामस्तोत्रं" पठतः शिवचरणकमलयोः प्रीतिं बध्नतश्च जातुचिदपि ज्वराबाधा नोदेतीति स्पष्टम् ।

**लङ्घनमादौ शस्तं त्रातुमलं तन्नरं ज्वरत्रस्तम् ।**
**विधुमिव राहुग्रस्तं दानं वा श्रीहरेर्ध्यानम् ॥ ३ ॥**

लङ्घनमिति—ज्वरे संप्राप्ते प्रथमं यत्कर्तव्यं तदुपदेशोऽयम् । यथा राहुग्रस्तं चन्द्रं धर्मशास्त्राद्युपदिष्टं दानं श्रीहरेर्ध्यानं वा त्रातुं समर्थं तथैव ज्वरत्रस्तं नरमादौ लङ्घनमेव त्रातुं समर्थं प्रशस्तञ्च । उक्तं चान्यत्रापि लङ्घनस्यादौ विधेयत्वं तस्य वैज्ञानिकं फलञ्च—

ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥
आमाशयस्थो हत्वाग्निं सामो मार्गान्पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥ इति ।

**मरिचं तीक्ष्णच्छदकं मधुरा मधुकं शतं तु तैरुदकम् ।**
**पाचनमेतद्दृष्टं सितया मिष्टं ज्वरेष्विष्टम् ॥ ४ ॥**

मरिचमिति—

लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥

—इत्युक्तदिशा पूर्वं लङ्घनरूपं पाचनमुक्तम् । अधुना तु आमदोषे ज्वरे मुख्यभेषजप्रयोगस्य ज्वरप्रकोपकतया निषिद्धत्वात् सामान्यतस्तत्पाचनं निर्दिश्यते—मरिचम्, तीक्ष्णच्छदकम्=" पोदीना " इति ख्यातं सुगन्धपत्रकम्, मधुरा=शतपुष्पा, मधुकम्=यष्टीमधुकम्, एतैर्यथार्हमानैर्जलं निष्क्वाथ्य सितां निक्षिप्य प्रपिबेत् । सर्वज्वरेषु पाचनमेतदिष्यते ।

**बहुलैस्तुलसीपत्रैरूषणमित्रैः कृतः कलाचित्रैः ।**
**क्वाथः सितासनाथः सागरकथनैर्ज्वरोन्माथः ॥ ५ ॥**

बहुलैरिति—दशसंख्याकैस्तुलसीपत्रैः मरिचसहितैः, कला=त्वक्कला "तबाशीर" इति प्रसिद्धा, तया चित्रितैः कृतः क्वाथो ज्वरमुन्मथ्नाति । अयं योगो वैद्यसागरभट्टशर्मभिरुपदिष्ट इति बोद्धव्यम् । अत्र सिता क्वाथं विधायोपरिष्टात्क्षेप्या ॥

**सुरसोपणनिर्यूहः ससितः पानाज्ज्वरं निराकुरुते ।**
**अथवा निम्बकषायो मरिचसहायोऽप्यपाकुरुते ॥ ६ ॥**

सुरसेति—सुरसा=तुलसी, तस्याः पत्राणां मरिचसहितानां निर्यूहः=क्वाथः कृतसिताप्रक्षेपः पानाज्ज्वरं नाशयति । तथा समरिचानां निम्बपत्राणां क्वाथोऽपि तदर्थकारीति योगद्वयम् ।

अथ ज्वरावस्थायां पानयोग्यं जलमुपदिशति—

**पाने क्वथितं पाथः प्रबलतृषायां षडङ्गपानीयम् ।**
**वालाकल्ककसिद्धं सकलपुराणज्वरे सिद्धम् ॥ ७ ॥**

पाने इति—साधारणतः पानीयं ज्वरावस्थायां क्वथितमर्धावशिष्टं पातव्यम् । प्रबलायाम्=मुहुर्मुहुरुद्भवन्त्यां सदाहायां पिपासायां तु षडङ्गपानीयम्= "मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः । शृतशीतं जलं दद्यात्पिपासाज्वरशान्तये ॥ " इत्युक्तप्रकारम्, कार्षिकैर्मुस्तादिभिः प्रस्थमितं जलमभानधिश्रितमर्धावशिष्टमवतारितं पानार्थे प्रदेयम् । पुराणज्वरेषु तु सर्वेषु " नेत्रवाला" " अकरकरा" इति ख्याताभ्यां द्रव्याभ्यां सिद्धं जलं सिद्ध्यति । पद्येऽत्र " तृषा " शब्दो भागुरिमतेनावन्तो ज्ञेयः । अन्यथैवाग्रहश्चेत् " तृषि स्यात् " इति पाठ्यम् ।

अथ क्षुत्प्रतीकारमाह—

**क्षुधि मृदुफलमादेयं पक्वमथार्धोदकं पयः पेयम् ।**
**लवणोषणसंसृष्टा भ्रष्टाश्चापीह मृद्वीकाः ॥ ८ ॥**

क्षुधीति—ज्वरितो बुभुक्षाव्याकुलश्चेन्मृदुफलम् = अङ्गूरदाडिमादिकमादेयम् । अर्धोदकं पक्वं दुग्धं देयम् । किञ्च लवणमरिचभरिताः निर्गतबीजाः अङ्गारेषु निधाय किञ्चित्पक्वा मृद्वीकाः=" मुनक्का " इति ख्याता द्राक्षा अपि ज्वरेऽत्र प्रशस्यन्ते । द्राक्षा सरा तृष्णाज्वरदाहादिप्रशमनी च शास्त्रे स्मर्यते ।

अधुना विशिष्य वातादिज्वरप्रत्यनीकान्प्रयोगानाह—

**विश्वगुडूचीग्रन्थिकनीरम् । मारुततापध्वंसनधीरम् ॥ ९ ॥**

विश्वेति—शुण्ठी-गुडूची-पिप्पलीमूलानां क्वाथो वातज्वरं नाशयति । अक्षरपङ्क्तिश्छन्दः ।

**धान्यकविश्वादेववृहत्यः स्पर्शनतापोत्कर्तनवत्यः ॥ १० ॥**

धान्यकेति—धान्यक-शुण्ठी-देवदारु-कण्टकारीणां क्वाथो वातज्वरघ्नः । स्पर्शनः= वायुस्तत्कृतो यो तापस्तदुत्कर्तनवत्यः ॥

**शृतमथ धानाकुलकसमुत्थम् । शमयति पित्तज्वरमितिवित्त ॥ ११ ॥**

शृतमिति—धाना=धान्यकम्, कुलकम्=पटोलम् एताभ्यां सम्भूतं शृतम्=क्वाथः पित्तज्वरं शमयतीति यूयं वित्त=जानीत । शशिवदनाच्छन्दः ।

**सतिलपलाशैर्जलनलदाब्दैः । शिशिरकषायो ज्वरमरमत्ति ॥ १२ ॥**

सतिलेति—तिलपलाशः=तिलपर्णी, रक्तचन्दनमिति यावत्, तत्सहितैः । जलम्="नेत्रवाला" इति ख्यातम्, नलदम्="खस" इति प्रसिद्धम्, अब्दः=मुस्तकः एतैर्विहितो हिमकषायः पित्तज्वरमरम्=शीघ्रमत्ति=भक्षयति । हिमकषायविधिरग्रिम-श्लोककुञ्चिकातोऽवधारणीयः ।

**गूडूचीस्वरसो, निम्बकल्को, धान्यकजो हिमः ।**
**तिक्ताफाण्टः, पर्पटस्य क्वाथः, पित्तज्वरापहः ॥ १३ ॥**

गुडूचीति—अत्र तिक्ता=कटुका । पर्पटः="पित्तपापड़ा" इति ख्यातः । श्लोकोक्ताः पञ्चामी योगाः पित्तज्वरमपघ्नन्ति । स्वरसादिपरिभाषास्तु शार्ङ्गधरीया अधस्तान्निर्दिश्यन्ते-

अहतात्तत्क्षणाकृष्टाद्द्रव्यात्क्षुण्णात्समुद्धरेत् ।
वस्त्रनिष्पीडितो यः स रसः स्वरस उच्यते ॥
कुडवं चूर्णितं द्रव्यं क्षिप्तं च द्विगुणे जले ।
अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥
द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षेपावापकल्कास्ते तन्मानं कोलसम्मितम् ।
क्षुण्णं द्रव्यपलं सम्यक्षड्भिर्नीरपलैः प्लुतम् ।
निशोषितं हिमः स स्यात्तथा शीतकषायकः
क्षुण्णे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत् ।
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् ।
स स्याच्चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् ॥ इति ।

अत्रायुर्वेदप्रसिद्धाः पञ्चापि कषायाः कविना भङ्गीविशेषेणैकस्मिन्नेव लघुके श्लोके समुपनिबद्धा इत्यहो चातुरी ! । मानं त्वेषां रोगिणो बलाबलं वीक्ष्य न्यूनाधिकतया कल्पनीयम् ।

**वासामृताभयातिक्तैः क्वाथः श्लेष्मज्वरार्तिजित् ।**
**क्षुद्रामृताकणाविश्वैर्विहितोऽपि तथा मतः ॥ १४ ॥**

वासेति—वासा=आटरूषकः, अमृता=गुडूची, अभया=हरीतकी, तिक्तः= "चिरायता" इति ख्यातः, एतैर्विहितः क्वाथः कफज्वरपीडां जयति । क्षुद्रा=कण्टकारी, अमृता, कणा = पिप्पली, विश्वम् = शुण्ठी, एतैर्विहितः क्वाथोऽपि तथाविध एवेति क्वाथद्वयम् ।

क्षुद्रावासाकृष्णाविश्वैः कुष्ठाजाजीशक्रोन्मिश्रैः ।
शाम्यत्येतैर्धात्वापन्नः श्लेष्मोत्पन्नस्तापः किन्न ॥ १५ ॥

क्षुद्रेति—क्षुद्रा, वासा, कृष्णा=पिप्पली, विश्वम्, कुष्ठम्="कूठ" इति ख्यातम्, अजाजी=जीरकः स च श्वेत आदेयः, शक्रः=इन्द्रयवः, एभिर्विहितेन क्वाथेन धातुं समाश्रित्य स्थितोऽपि किं श्लेष्मोत्पन्नस्तापः=ज्वरो न शाम्यति, अपि तु शाम्यत्येव । विद्युन्मालाच्छन्दः ।

मिषिमधुकोषणपुषितवनप्सा, वृद्धतरज्वरविटपिवनप्सा ।
क्वथितनिपीता क्षिपति बलासम्, भृशमुपचरिता पीनसकासम् ॥१६॥
तत्फाणितमपि कर्षति पित्तम्, प्रौढवधूरिव कामुकचित्तम् ।
समदाडिमशार्करयुतमेतद्दमयति दाहं मदयति चेतः ॥ १७ ॥
पित्तरुषा जनितासु च रुक्षु, भ्रमवमनादिषु वितरत मङ्क्षु ।
तदपि पुनस्तरुणीजलमिश्रम्, रसयत दवथुं दवितुमजस्रम् ॥१८॥

मिषीति—त्रिभिः श्लोकैर्विशेषकम् । मिषिः=शतपुष्पा, मधुकम्="मुलेठी" इति ख्यातम्, ऊषणम्=मरिचम्, एभिः पुषिता=मिलिता वनप्सा="गुलबनप्सा" इति ख्याता, वृद्धतराः=अतिशयेन वृद्धिं गता ये ज्वरास्त एव विटपिनः=वृक्षास्तेषां वनमिव वनम्=समूहं प्साति=भक्षयतीति तथाभूता भवति । सा च क्वथिता निपीता च सती बलासम्=कफज्वरं तज्जानन्यानपि रोगान्क्षिपति । सतताभ्यासेन तु सा पीनसम्="आनह्यते शुष्यति यस्य नासा, प्रक्लेदमायाति च धूप्यते च ॥ न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन॥—" इत्युक्तलक्षणं प्रतिश्यायविशेषं कासं चापि नाशयति । तत्फाणितमिति, फाणितम्=शार्करं "शरबत" इति प्रसिद्धम् । वनप्साशार्करं पित्तमपि नाशयति । प्रौढवधूरिति नातीव निगूहितम् । एतदेव वनप्साशार्करं तुल्यमानेन दाडिमशार्करेण युक्तं दाहं दमयति चित्तं च मदयति=हर्षयति । इदं पित्तप्रकोपेन समुत्पन्नासु पीडासु भ्रमवमनादिषु मङ्क्षु=शीघ्रमेव यूयं निपिबत । तदपि=तद्वनप्साशार्करमेव तरुण्याः="गुलाब" इति प्रसि-

छायाः शतपञ्च्याः अर्केण मिलितं सत् दवथुम्=दाहं दवितुम्=नाशयितुं रसयत=आस्वादयध्वम् । वनप्साशार्करविधिरधस्तान्निर्दिश्यते—

वनप्सिकामष्टगुणे निशायां नीरे निधायाथ विपाच्य चुल्ल्याम् ।
अष्टावशेषं शृतमाकलय्य संगालयेद्गाढपटेन युक्त्या ॥
चतुर्गुणां तत्र पचेत्सिताख्यां तन्तूद्गमो राजति यावदस्याम् ।
वनप्सिकाशार्करमेतदाहुः पित्तज्वरे देयमतीव सौम्यम् ॥
(सि. भे. म. मा.)

किञ्च—एवं निशि अष्टगुणे जले निधाय, प्रातर्मन्दवह्निपाकेनाष्टमांशमवशेष्य, वस्त्रेण निर्गाल्य, तच्चतुर्गुणसितां प्रक्षिप्य तन्तूद्गमावधिपाकेन यस्य कस्यापि द्रव्यस्य शार्करं ( शरबत ) सम्पद्यते । त्रिष्वप्येषु श्लोकेषु हिन्दीभाषाप्रसिद्धं चतुष्पदी ( चौपाई ) छन्दो विज्ञेयम् ।

संप्रति सन्निपातचिकित्सितमाह—

**दोषसमूहे लङ्घनमाद्यं मूर्ध्नि च तैलं चन्दनकाद्यम् ।**
**भौतिकवायोः सम्परिहारः किञ्च विबन्धे पञ्चसकारः ॥ १९ ॥**

दोषेति—दोषसमूहे=सन्निपाते प्रथमं लङ्घनं कार्यं तस्य सर्वत्र प्रशस्तत्वात् । शिरसि "चन्दनाद्यं तैलं" मर्दनीयम् । तन्निर्माणविधिश्चायमवधारणीयः—

—श्वेतचन्दनम्, रक्तचन्दनम्, पतङ्गम्, दारुहरिद्रा, अगुरु, कृष्णागुरु, देवदारु, सरलम्="धूपसरल" इति ख्यातम्, कमलपुष्पम्, कुशकाशशरदर्भेक्षुरूपं तृणपञ्चमूलम्, कर्पूरः, कस्तूरी, लताकस्तूरिका="वेदमुश्क" इति प्रसिद्धा, सिह्लकः, कुङ्कुमम्, जातीफलम्, जातीपत्री, लवङ्गम्, एलाद्वयम्, कक्कोलम्, स्पृक्का, पत्रकम्, नागकेशरम्, वालकम्, उशीरम्, जटामांसी, दारुसिता, भीमसेनकर्पूरः, शैलेयम्="छरीला" इत्युक्तम्, मुस्तम्, रेणुका, प्रियंगुः, श्रीवासः, गुग्गुलुः, लाक्षा, नखम्, रालः, धातकीकुसुमानि, ग्रन्थिपर्णम्, मञ्जिष्ठा, तगरम्, सिक्थकम्="मोम" इति ख्यातम्—सर्वाणि समानानि गृहीत्वा, कल्कीकृत्य च, कस्मिंश्चिच्छुद्धकटाहे निक्षिप्य, तत्र तच्चतुर्गुणं तैलं दत्वा, तैलाच्चतुर्गुणमेतेषामेव द्रव्याणां क्वाथं तैलसमानं दुग्धञ्च दत्वा, सर्वमैकध्यं संमिश्र्य विपचेत् । तैलमात्रावशेषे कल्के चाङ्गुल्या वर्तनेन वर्तीवज्जायमाने सिद्धिं विज्ञायावतारयेत् । शीतं च तद्वस्त्रेण गालयित्वा काचकूपीषु रक्षेत् । तदिदं "चन्दनाद्यं तैलम्" । भौतिकेति—सन्निपाते प्रबलबाह्यवातस्य सम्यक् परिहारः कर्तव्यः । किञ्च, विबन्धे सति "पञ्चसकार" चूर्णं सेवनीयम् । तत्तु—

सैन्धवसनामुकिशिवाशुण्ठीशतपुष्पिकाकृतः क्षोदः ।
नाम्ना पञ्चसकारः शकृति विबद्धे समुपयोज्यः ॥ (सि. भे. म. मा.)

इत्युक्तं विज्ञेयम्। अत्र चम्पकमालावृत्तम्।

**शीतविहारात्क्रुद्धसमीरे श्लेष्मविवृद्ध्यात्यन्तमधीरे।**
**रोगिणि युञ्ज्याद्र्द्रकनीरे ह्यभ्रमदभ्रं शीतशरीरे॥ २०॥**

शीतेति—चेत् शीतविहारात्=शीतलवायुसेवनस्नानादिना वायुः कुप्येत्,कफो वर्धेत, तेन च रोगी अधीरो भवेत्, यद्वा—ज्वरार्तस्य शरीरं शीततां व्रजेत्तदेदृशीमवस्थां वीक्ष्या दभ्रम्=बहुलमभ्रकभस्मार्द्रकरसेन प्रयोजयेत। साधारणतोऽभ्रकभस्ममात्रा यावती ततो द्विगुणा देयेत्यर्थः। अभ्रकभस्मविधिः—"सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम्। यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि।" इत्युक्तलक्षणं वज्राभ्रकं गृहीत्वा, तत्खण्डान्संताप्य संताप्य गोदुग्धे निर्वापयेत्। ततस्तद्दलानि पृथक् कृत्वा, कस्मिंश्चित्प्रस्तरपात्रे तण्डुलीय-(चौंलाई) रसस्य त्रीन् भागान् निम्बुकरसस्य चैकं भागं भृत्वाऽत्राभ्रकं दुग्धान्निष्कासितं क्षिप्त्वाऽष्टौ यामानवस्थापयेत्। अपरेद्युर्जलेन क्षालयित्वा विचूर्णयेत्। इदं शुद्धं धान्याभ्रकयोग्यं भवति। ततः कस्मिंश्चित्कम्बलखण्डे तदभ्रकं पादांशशालिधान्यसंयुतं बद्ध्वा दिनत्रयं जले निमज्जयेत्। दिनत्रयान्ते हस्तेन दृढं विमर्द्य कम्बलाद्गलितं श्लक्ष्णं वालुकारहितं च धान्याभ्रकं जलान्निष्कास्य गृह्णीयात्। तदनु घृतकुमारिकारसेन, अर्कदुग्धेन, वटजटाक्वाथेनान्यैर्वा द्रव्यैः पिष्ट्वा पिष्ट्वा पुटान्दद्यात्। निश्चन्द्रतां गतं शुद्धं भस्म संपत्स्यते। इदं शतपुटदानेन "शतपुटितम्" सहस्रपुटदानेन च "सहस्रपुटितम्" प्रसिद्ध्यति।

**मोहरुजादेः स्याद्यदि क्षतिस्तत्र च देया पारदभूतिः।**
**वृद्धबलासै रुद्धगलस्य वक्षसि भूयः स्वेदनमस्य॥ २१॥**

मोहेति— यदि सन्निपातरोगिणो मूर्च्छादेरुत्पत्तिर्भवेत्तर्हि पारदभस्म रससिन्दूरादिकं देयम्। यदि तु प्रवृद्धेन कफेन गलं रुद्ध्येत घुरघुरशब्दयुक्तं च स्यात्तदा तस्य वक्षसि तप्तवालुकादिना मुहुर्मुहुः स्वेदः कार्यः। तथा च कफो विद्रुतो निर्गमिष्यति।

**चन्द्रोदयः कर्षति सन्निपातं करोति वा दुर्बलताविघातम्।**
**क्षौद्रान्वितैरार्द्रकपर्णनीरैः प्रयोजितः साधु भिषक्प्रवीरैः॥ २२॥**

चन्द्रोदयेति—"चन्द्रोदयः"= वैद्यसम्प्रदाये प्रसिद्धो रसः। वैद्यवरैः मधुयुतेनार्द्रकरसेन तद्युतेन नागवल्लीदलरसेन वा सम्यक् प्रयोजितः सन्निपातं नाशयति। दुर्बलताया अपि विघातं करोति।

पूर्वानुपानैः कणया च भुक्ता रसाभ्रयुक्ता मृगनाभिरुक्ता ।
हिताङ्गशैत्ये त्विति वच्मि तथ्यं मल्लालसिन्दूरमपीह पथ्यम् ॥२३॥

पूर्वानुपानैरिति—समधुकेनार्द्रकरसेन, समधुकेन नागवल्लीदलरसेन वा, यद्वा—केवलया पिप्पल्या सार्कं रसाभ्रयुक्ता=पारदभस्माभ्रकभस्मभ्यां सहिता मृगनाभिः=कस्तूरी गुञ्जामिता, रोगिबलाबलं वीक्ष्य यथार्ह न्यूनाधिकतया कल्पितमाना वा अङ्गशैत्ये हितोक्तेति सत्यं ब्रवीमि । अत्राङ्गशैत्ये प्रसिद्धो "मल्लसिन्दूरो" रस"स्तालसिन्दूरो" रसो वापि पथ्यः । किञ्च ग्रन्थकारोपदिष्टदिशा— पारदः ८ तो०, गन्धकः ८ तो०, मल्लः ४ तो०, हरितालम् ४ तो०, एतच्चतुष्टयमेकत्र सम्मेल्य दिनद्वयं वालुकायन्त्रेण साधितः "मल्लतालसिन्दूर"—नामा रसोऽप्यत्र महदुपकरोति । अथ प्रसङ्गतः श्लोकेष्वमीषु समुपदिष्टानां चन्द्रोदयरससिन्दूरतालसिन्दूरमल्लसिन्दूराणां ग्रन्थेऽत्राभिमतो निर्माणविधिः सङ्क्षिप्य निर्दिश्यते—

चन्द्रोदयः—स्वर्णपत्राणि "सोनेके वर्क" इत्याख्यातानि १ तो०, शुद्ध पारदः ८ तो०, शुद्धगन्धकः १६ तो०—त्रयमेकत्र विमर्द्य रक्तकार्पासपुष्परसेन कुमारीरसेन च भावयित्वा दिनत्रयं वालुकायन्त्रेण पाकः ।

रससिन्दूरः—शुद्धपारदः १२ तो०, शुद्धगन्धकः २ तो०, द्वयोः कज्जलीं कूप्यां भृत्वा शुद्धहरितालम् २ तो०, उपरिष्टात्क्षिप्त्वा संमेल्य च द्वादशयामान् वालुकायन्त्रेण विपचेत् ।

मल्लसिन्दूरः— पारदः ९ तो०, रसकर्पूरः ९ तो०, गन्धकः ५॥ तो०, शतमल्लः ४॥ तो०, दिनद्वयं वालुकायन्त्रेण पाकः ।

तालसिन्दूरः— पारदः ६ तो०, हरितालम् १ तो०, शतमल्लः १ तो०, गन्धकः १ तो०, दिनद्वयं वालुकायन्त्रेण पाकः । चन्द्रोदयादिनिर्माणविधाविदमधिकं बोध्यम्—

एतेषु रसेषु बुभुक्षान्तसंस्कारः पारदो विनियुज्यते इति प्रथमः कल्पः । परमयत्ने तथाविधसंस्कारसम्पादनमतीवदुष्करमिति प्रायः सर्व एव हिङ्गुलोत्थपारदमम्लादिवर्गैः संशोध्योपयुञ्जते । एवं यद्यपि बुभुक्षितपारदसम्पादितचन्द्रोदयादिष्विव नाधिकाः गुणा भवन्ति तथापि हिङ्गुलोत्थपारदस्य सर्वत्र निर्दुष्टत्वाभिधानात्तेन चन्द्रोदयादिरसनिर्माणेऽपि न दोषः । एतत्सम्पादनाय प्रथमं काचकूपीम् "आतशी शीशी"नाम्ना प्रसिद्धामादाय, मुल्तानमृत्स्ना-भस्मोर्णालोहचूर्णादिभिः पानीयेन सह शिलायां श्लक्ष्णपिष्टैर्वस्त्रखण्डं विलिप्य तेन कूपीमवलिप्यातपे शोषयेत् । एवं सप्तवारं मृत्कर्पटलेपो विधातव्यः । तदनु विशुष्कायां कूप्यां पूर्वोक्तां संपिष्टपारदगन्धकादिकज्जलीरूपां चन्द्रोदयसामग्रीं भरेत । तत्रेदमवधेयम्—कूप्याश्चतुर्षु भागेष्वेकभागः कज्जल्या भरितः स्याद्भागत्रयन्त्ववशिष्येतेति । अथैकां कृततल-

च्छिद्रां मृत्तिकानान्दीं वहिर्लोहतारैर्वेष्टयित्वा मृत्कर्पटादिभिर्विलिम्पेत् । तस्यास्तलच्छिद्रोपरि अभ्रकखण्डं निधाय तदुपरि कूर्पी निदध्यात् । ततो नान्दीं वालुकया प्रपूरयेत् कूपिकाया नालिकापर्यन्तम् । अनन्तरं नान्दीं आष्ट्रिकोपरि संस्थाप्य मन्दमग्निं तदधो ज्वालयेत् । कज्जल्यां विद्रुतायां कांचिल्लोहशलाकां प्रताप्य कूपीमुखे निक्षिपेत्, तेन मुखलग्नो गन्धको निर्ज्वलिष्यति । एवं प्रत्यर्धघण्टं कुर्यात् । यदा पीतवर्णो धूमः कूपीमुखान्न निःसरेत्तप्तशलाकापातनेऽपि च न प्रतीयेत, यदा च कूप्यां पातितनिःसारितायास्तप्तलोहशलाकाया मुखे लग्नायाः कज्जल्या वर्णो भास्वरारुणो भासेत तदा प्रज्वलत्काष्ठानि निःसार्याग्निं मन्दीकृत्येष्टकाखण्डेन खटिकाखण्डेन वा कूपीमुखं मुद्रयित्वा मुलतानमृत्स्नालिप्तेन वस्त्रखण्डेन लिम्पेद्द्वित्र्याङ्गुलिमितकूपीनलिकापर्यन्तम् । मुद्रायां निशुष्कायां पुनर्वह्निमुद्दीपयेत् । अत्र प्रथमदिने मृदुर्द्वितीयदिने मध्यस्तृतीयदिने च खर इत्येवमग्निक्रमो बोध्यः । चतुर्थदिने वह्निं निर्वाप्य स्वाङ्गशीतां कूपीमुद्धृत्य तदुपरिस्थं मृत्कर्पटादिकमपसारयेत्, जलार्द्रवस्त्रखण्डेन च तां शोधयेत् । ततो मृत्तिकातैल–( किरोसिनतैल )–क्लिन्नसूत्रिकया कूर्पी परिवेष्ट्य सूत्रिकां ज्वालयेत् । निःशेषदग्धायां तस्यां जलार्द्रवस्त्रखण्डेन कूर्पी प्रोञ्छ्य तां खण्डशः कुर्यात् । तद्गलभागे पल्लवरागरम्यश्चन्द्रोदयो ग्राह्यः । कूप्यास्तलभागे श्वेतं सुवर्णभस्म प्राप्स्यते । यदि सुवर्णस्य भस्मसम्पादनेच्छैव स्यात्तदा पुनर्वा-द्धयं चन्द्रोदयकज्जल्यां तन्निक्षिपेत । तेन विशुद्धं पीतवर्णं सुवर्णभस्म भविष्यति । पूर्वोक्तचन्द्रोदयरसे मेलनेच्छायान्तु कूपीतले प्राप्तं भस्म तुलसीरसेन प्रपिष्य पुटेत् । ततः काञ्चनाररसेन त्रिचतुरान् गजपुटान्दत्त्वा पुनस्तुलसीरसेन पुटमेकं दत्त्वा भस्म सम्पाद्यम् । तदिदं भस्म पूर्वोक्तचन्द्रोदयश्चेति द्वयमेकत्र प्रपिष्य रक्षेत् । एवं यथोक्तगुणप्रदश्चन्द्रोदयो भवति । रससिन्दूर–मल्लसिन्दूर–तालसिन्दूरादिष्वपि कूप्यां मृत्कर्पटलेपं वालुकायन्त्रसम्पादनमग्निदानं, गन्धकादिनिरीक्षणं कूपीमुखमुद्रणं च तथैव कुर्यादिति संक्षेपः ।

**मन्दानलैः पिप्पलवल्कसिद्धा पीतालभूतिर्विशदा प्रसिद्धा ।**
**सैकैव वा साभ्ररसा प्रयुक्ता निहन्तुमार्तिं ननु किं न शक्ता ॥२४॥**

मन्दानलैरिति—पीतं हरितालं "तपकिया हरताल" इत्याख्यातं "कलीका चूना" इतिप्रसिद्धस्य हर्म्यादिनिर्माणाय लेपनाय वा प्रयुज्यमानस्य द्रव्यस्य पानीयेन भावयित्वा, चक्रिकां बद्ध्वा, संशोष्य, उपर्यधःस्थापितयोरभ्रकपत्रयोर्मध्ये संस्थाप्य, वदरीदलकल्केन सन्धिरोधं विधाय, हण्डिकामेकां पिप्पलवृक्षत्वग्भस्मना अर्द्धां भृत्वा, तन्मध्ये तदभ्रकसंपुटं निधाय, पुनः पिप्पलत्वग्भस्मनैव हण्डिकामाकण्ठं प्रपूर्य, हस्तेन भस्म सम्यङ्निष्पीड्य, मन्दवह्निना प्रहरमेकं पचेत्तेन " तालभस्म " विशुद्धं सम्पत्स्यते । इयं तालभूतिरेका=केवला पारदभस्माभ्रकभस्मभ्यां युक्ता वा प्रयुक्ता सती आर्तिम्=त्रिदोषजां पीडां

शीताङ्गतां वा निहन्तुं किं न शक्ता ? अपि तु शक्तैव भवेत् । सद्यः फलप्रदोऽयं योगो विशेषतः शीतेऽङ्गे ।

सम्पन्नानि सुयुक्तितः पीततालकुसुमानि ।
परिचरितानि च मात्रया ज्वरविकृतिग्रसनानि ॥ २५ ॥

सम्पन्नानीति–– पीतहरितालं विशोध्य, कुष्माण्डरसेन पिष्ट्वा, "डमरुयन्त्रेण" तस्य पुष्पाणि सम्पादयेत् । अग्नियोगादुड्डीय गताया उपरितनहण्डिकोदरे सँलग्नायास्तालभूतेः " हरताल के फूल " इति संज्ञा । तदेवं सुयुक्तितः सम्पन्नानि तानीमानि पीतहरितालपुष्पाणि ज्वरविकृतौ शीताङ्गे तण्डुलमात्रया परिचरितानि अवश्यमेव शैत्यग्रासीनि भवन्तीति बहुशोऽनुभूतम् । पद्येऽत्र हिन्दीप्रसिद्धं दोहाच्छन्दः ।

मृगमदपारदविष्णुपदसम्मिलितानि च तानि ।
शीतकायताकवलने विद्यन्तेऽनुपमानि ॥ २६ ॥

मृगेति–– तान्येव पीततालपुष्पाणि कस्तूरीपारदभस्माभ्रकभस्मयुक्तानि शीतकायताकवलने=अङ्गशैत्यनाशनेऽनुपमानि=इतरविलक्षणतया चमत्कारीणि भवन्ति । ग्रन्थेऽत्र–पारदभस्मशब्देन " रससिन्दूरा–" ख्यो रसः प्रायेण गृह्यते इति न विस्मर्तव्यम् । अत्रापि पूर्वोक्तमेव दोहाख्यं छन्दः ।

ब्राह्मीमुस्तलवङ्गकुङ्कुमकणामूलोग्रगन्धावचा–
जातीपत्रविडङ्गवङ्गचविकाभृङ्गाजमोदाच्छदाः ।
चाम्पेयातिबलासुवर्णजदलाकल्लानला हिङ्गुलाऽ—
जाजीपौष्करलोकलोहचपलाजातीफलाभ्रामृताः ॥ २७ ॥
कस्तूरीन्द्रवरीमरीचमधुरात्वक्तेजनीतिक्तका
इत्येतैश्चणकोन्मिता सुविहिता द्राक्षामधूदञ्चिता ।
वातश्लेष्मविकारवारणपरा घोरज्वरार्तादरा
सेयं सर्वहिता स्वदेशविदिता "ब्राह्मीवटी" कीर्तिता ॥२८॥

ब्राह्मीति––द्वाभ्यां युग्मम् । अत्र प्रयोगे––ब्राह्मी, मुस्तम्, लवङ्गम्, कुङ्कुमम्=" केसर " इति ख्यातम्, कणामूलम्=पिप्पलीमूलम्, उग्रगन्धा=यवानी, वचा, जातीपत्रम्=" जावित्री " इत्याख्यम् , विडङ्गम्, वङ्गम्=वङ्गभस्म, चविका=चव्यम्-भृङ्गम्=" तज " इति प्रसिद्धम्, अजमोदा, छदः=" तेजपात " इत्याख्यम्, चाम्पेयः=

नागकेशरः, अतिवला="कंघी" इत्याख्या, सुवर्णजदलानि="सोने के वर्क" इत्याख्यानि-आकल्लः, अनलः=चित्रकः, हिङ्गुलं शुद्धम्, अजाजी=जीरकः, पौष्करम्=पुष्करमूलम्, लोकः=शुण्ठी, लोहम्=लोहभस्म, चपला=पिप्पली, जातीफलम्, अभ्रम्=अभ्रकभस्म, अमृता=गुडूची, कस्तूरी इन्द्रः=इन्द्रयवः, वरी=शतावरी, मरीचम्, मधुरा=शतपुष्पा, त्वक्=दारुसिता, तेजनी="तेजवल" इत्याख्या, तिक्तकः=कैरातः, द्राक्षा, मधुचेति अष्टात्रिंशद्द्रव्याणि । तत्र–कुङ्कुम-वङ्ग-स्वर्णपत्र-हिङ्गुल-लोहा-भ्रकभस्म–कस्तूरीवर्जं सर्वाणि द्रव्याणि पृथक्प्रपिष्य पटपूतान्येकत्र मेलयेत् । ततः–कुङ्कुमादीन्यपि खल्वे संपिष्टानि निक्षिपेत् । तदनु निर्गतबीजानां "मुनक्का" इतिप्रसिद्धद्राक्षाणां कल्के सर्वं सम्मेल्य मधु दत्वा, वटीर्बद्ध्वा स्वर्णपत्रैर्यद्वा रजतपत्रैर्वेष्टयेत् । सेयं-वातश्लेष्मविकारेषु, मौक्तिकादिज्वरेषु, प्रसोष्यमाणासु प्रसूतासु च स्त्रीषु, किंबहुनाऽनेकत्र दुःसाध्यरोगेष्वस्मद्देशे प्रयुज्यमाना, प्रत्यक्षचमत्कारा नाम्ना 'ब्राह्मीवटी'–ति प्रसिद्ध्यति । पद्ययोरनयोर्वृत्त्यनुप्रासश्चमत्कारी । शार्दूलविक्रीडितं छन्दः ।

**पक्वमथोदशमूलं दोषचयप्रतिकूलम् ।**
**तत्तु षडूषणमित्रं तज्जयि चेत्किमु चित्रम् ॥ २९ ॥**

पक्वमिति–दशमूलं प्रसिद्धम्—

श्रीफलः, सर्वतोभद्रा, पाटला, गणिकारिका ।
श्योनाकः, पञ्चभिश्चैतैः पञ्चमूलं महन्मतम् ॥
शालपर्णी, पृश्निपर्णी, वार्ताकी, कण्टकारिका ।
गोक्षुरः, पञ्चभिश्चैतैः पञ्चमूलं कनिष्ठकम् ॥
उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम् ।—

—इत्युक्तम् । तदिदं क्वथितनिपीतं दोषचयस्य=वातादिदोषसमूहस्य प्रतिकूलम्=नाशकं भवति । तदेव षडूषणमित्रम्=पिप्पलीपिप्पलीमूल-चव्य-चित्रक-शुण्ठी-मरिचेतिद्रव्यषट्केन "षडूषण" इति प्रसिद्धेन युक्तं दोषचयं नाशयतीति किमु वक्तव्यम् । अत्र पद्ये पादान्तगोऽनुप्रासः । चित्रपदावृत्तम् "भौगिति चित्रपदा गः" इतिलक्षणात् ।

**श्रीसुमशुक्तिकषायः पीत इहाप्यसहायः ।**
**संशमनस्त्रिमलस्य ज्ञातमिदं नहि कस्य ॥ ३० ॥**

श्रीसुमेति— श्रीसुमम्=लवङ्गम् । तस्य शुक्तेः=तोलद्वयमितस्य केवलः क्वाथस्त्रिदोषप्रशमनो भवतीति कस्य न ज्ञातमपितु सर्वस्यापि ज्ञातम् । अत्रापि पूर्ववद्वृत्तमलङ्कारश्च ।

पर्णार्णसा वर्णितकृष्णवर्णा तूर्णं निगीर्णा हिमचर्मणा चेत् ।
"हिरण्यगर्भाभिधपोट्टली" सा हिरण्यरेतस्यत एतदङ्गे ॥ २१ ॥

पर्णेति— चेत्, हिमचर्मणा=शीतगात्रेण पुरुषेण वर्णितकृष्णवर्णा=प्रशस्तश्यामरूपा सा=वैद्यसंप्रदाये प्रसिद्धा हिरण्यगर्भाभिधपोट्टली= "हेमगर्भपोट्टलीरसः" पर्णार्णसा= नागवल्लीदलरसेन तूर्णम्=शीघ्रं निगीर्णा स्यात्तदा सैतदङ्गे=रोगिदेहे हिरण्यरेतस्यते= हिरण्यरेता इवाचरति, वह्निरिवोष्माणं जनयतीत्यर्थः । "हिरण्यगर्भपोट्टली"-प्रकारः— पारदं ४ भागाः, गन्धकः २ भागौ, सुवर्णभस्म १ भागः, ताम्रभस्म ३ भागाः— पूर्वं पारदः सुवर्णताम्रभस्मभ्यां सह प्रपिष्य, ततस्तत्र गन्धकं दत्त्वा, कज्जलीं विधाय, सप्ताहं कुमारीरसेन विमृद्य, गुटिकां बद्ध्वा, चतुर्गुणिते कौशेयवस्त्रे किञ्चिद्गन्धकं दत्त्वा तत्र तां निधाय पोट्टलिकां बध्नीयात् । ततश्चीनमृद्भाजने दोलावत्तां लम्बयित्वोपर्यधो गन्धकेना- च्छाद्य मन्दाग्निना यामं पचेत् । गन्धके विद्रुत्य घनतां प्राप्ते पोट्टलिकां निष्कास्य दग्धवस्त्र- गन्धकादिकमपनीय गुटिकां गृह्णीयात् । सेयं "हिरण्यगर्भपोट्टली" ।

कणामूलं व्योषं भुजगगरलं शृङ्गिकसखं
विडङ्गं श्रीसंज्ञं दरदमिति पिष्ट्वा घनरसैः ।
निबद्धा संसिद्धा मरिचसदृशी साभ्यवहृता
प्रकर्षेद्दुष्कर्षं त्रिमलजममर्षं "विषवटी" ॥ २२ ॥

कणामूलमिति—पिप्पलीमूलम्, शुण्ठी, मरिचम्, पिप्पली, सर्पविषम्, शुद्धं शृङ्गि- कविषं "सींगीमोहरा" इत्याख्यम्, विडङ्गम्, लवङ्गम्, शुद्धं हिङ्गुलमिति सर्पविषवर्जमष्ट- द्रव्याणि समानमानानि यथायथं पिष्टानि पटपूतानि खल्वे निक्षिप्य मुस्तक- क्वाथेन घर्षेत् । सर्पविषमुपरिष्टान्निक्षिपेत् । तदेवं प्रपिष्य मरिचाभां वटीं बध्नी- यात् । सेयं "विषवटी" इति संसिद्धा भक्षिता दुष्कर्षम्=असाध्यप्रायमपि त्रिमलजम्= त्रिदोषजममर्षम्=संरम्भं प्रकर्षेत्=प्रणाशयेत् । सर्पविषमाहितुण्डिकेभ्यः सर्पोप- जीविभ्यः प्रायः प्राप्यते । पद्येऽत्र चतुर्थचरणे वृत्त्यनुप्रासः । शिखरिणी वृत्तम् ।

त्र्यूषणताप्याकल्लकजं श्लेष्मजयि स्यात्साद्रकजम् ।
भुक्तमिदं चेत्सक्षरणं तर्हि रजःस्याद्भूरिगुणम् ॥ २३ ॥

त्र्यूषणेति—शुण्ठी, मरिचम्, पिप्पली, स्वर्णमाक्षिकभस्म, आकल्लकमिति सर्वं पिष्ट्वा कृतं चूर्णमार्द्रकरसेन भुक्तं कफं जयति । इदमेव यवक्षारसहितं बहुगुणं भवति । चूर्ण- मिदं—सन्निपातग्रस्ते रोगिणि, कफविवृद्ध्यावरुद्धे घुर्घुरायमाणे च गलेऽन्तसमये रक्तिद्वय-

मितं न्यूनाधिकं वार्द्रकरसेन प्रयोज्यम् । घण्टात्रयं घण्टाचतुष्टयं वा यावदवश्यं कफशान्तिर्भवति । म्रियमाणः कदाचनजीवेदपि । प्रत्यक्षचमत्कारोऽयं योगः कुब्जिकाकर्तुः ।
स्वर्णमाक्षिकभस्मविधिः— स्वर्णमाक्षिके चतुर्थांशं गन्धकं दत्त्वैरण्डतैलेन प्रपिष्य चक्रिकाः कार्याः । ताश्च शरावसम्पुटे रुद्ध्वा गजपुटे विपचेत् । एवं त्रिचतुरपुटदानेन विशुद्धं रक्तवर्णं भस्म भवेत् । पद्येऽत्र पादान्तगोऽनुप्रासः । " स्यान्मणिबन्धं चेद्भमसाः " इतिलक्षणलक्षितं मणिबन्धं छन्दः ।

मधुरसा मधुरा मधुपर्णिका मरिचकं मधुकं च महौषधम् ।
मगधजेति च सप्तमकारका ज्वरहराः खलु दीपनपाचनाः ॥२४॥

मधुरसेति— मधुरसा=द्राक्षा, मधुरा=शतपुष्पा, मधुपर्णिका=गुडूची, मरिचम्, मधुकम्=" मुलेठी " इति ख्यातम् , महौषधम्=शुण्ठी, मगधजा = पिप्पली— एते सप्त मकारा मिलिता ज्वरहरा भवन्ति, दीपनाः पाचनाश्चापि सन्ति । एषां क्वाथः सेव्यः । अत्रमकारानुप्रासश्चेतोहरः । द्रुतविलम्बिताख्यं छन्दः, " द्रुतविलम्बितमाह नभौ भरौ " इतिलक्षणात् ।

समं मरीचैस्तुलसीदलानि क्षीरेऽथ नीरेऽपि परिप्लुतानि ।
विपाच्य पूतं शुचिशर्कराढ्यं मनोहरं "चाय"मिदं वदामः॥२५॥

सममिति— एकविंशतिस्तुलसीदलानि मरिचान्यपि तावन्ति पूर्वं नीरे विपाच्य क्षीरं मेलनीयमुपरिष्टाच्छुद्धशर्करा सिता वा प्रक्षेप्या । तदिदं–चेतोहारि " देशीचाय" इति लोके प्रसिद्ध्यति । प्रतिश्याये तज्जनिते ज्वरे च पेयमिदम् । उष्णतोत्पादनाय कर्तव्यकार्येषु स्फूर्तिजननाय च भारतीयासामप्रान्तेऽन्येषु कतिपयप्रान्तेषु विदेशेषु च समुत्पद्यमानस्य कस्यचिद्वृक्षस्य कषायकटुकरसानां शुष्कपत्राणां पूर्वोक्तविधया निर्मायाङ्गलैस्तद्भाषाख्यायिभिःकृततत्संसर्गैर्भारतीयैः कैश्चिदन्यैरपि प्रत्यहं बहुकृत्वः पेपीयमानस्य क्वाथविशेषस्य "चाय" इति संज्ञा ।विदेशीयैः प्रचारितं, व्यसनभूतं, मदजनकं, शुक्रहानिकरं तन्न पेयमिति बहूनां मतम्। उपजातिवृत्तम्

तिक्तामृतानिम्बदलानि पिष्ट्वा जले समाप्लाव्य च पावयित्वा ।
तद्भानुना मन्दकृशानुना वा शुष्कं बुधाः "सिद्धकुनैन"माहुः॥२६॥

तिक्तेति—तिक्तः=किरातः, अमृता=गुडूची, निम्बपत्राणि चेति भङ्गावज्जलेन शिलायां पिष्ट्वा तत्कल्कं योग्यजले संमेल्य पटपूतं विधाय सूर्यातपे शोषयेत् । यद्वा–कटाहे निक्षिप्य मन्दवह्निना शोषयेत । तदिदं सिद्धं " देशीकुनैन " इति ख्यातिमायाति । ज्वरे सेव्यमिदम् । अयमपरोऽपि प्रकारस्तन्निर्माणस्य—सर्वाङ्गगुडूची २ प्रस्थौ,

किरातः २ प्रस्थौ, करञ्जमज्जा १ प्रस्थः, त्रयमेतद्विचूर्ण्य ६ प्रस्थमिते जले समाप्लाव्य चतुः पञ्चाप्यहानि समुपेक्षेत । ततो हस्तेन सम्यग्विमर्द्य पटपूतं तज्जलं मन्दाग्निना विशोषयेत् । क्षारवन्निम्नस्थं " कुनैनं " भविष्यति । आंग्लैः प्रचारितं " कुनैनं " ( Quinine ) तु " सिनकोना " ( Cinchona ) इति प्रसिद्धस्य वृक्षस्य त्वक्सारभूतं, यस्योद्यानद्वयं दारजिलिङ्गप्रान्ते " मुंगपू " " मुनसङ्ग " स्थानयोर्वर्तते । ब्रह्मप्रान्ते, जावाद्वीपे यूरोपीयदेशेषु च बहूनि सन्ति । इदं वटिकारूपादिभिरनेकैः प्रकारैरुपयुज्यते । संक्षेपतस्तद्यथा –( १ ) सलफेट आफ कुनैन ६० ग्रेन ( ३० रक्तिकाः ) एक्सट्रैक्ट आफ कलमिया ३० ग्रेन ( १५ रक्तिकाः ) द्वयमेतत्संमेल्य ३० वट्यो विधेयाः । रुग्णोद्वेगपरिहाराय तारपत्रलेपोऽपि कर्तुं शक्यते । एकैका वटी घण्टात्रयान्तरेण ज्वरागमनतः पूर्वं देयोपरिष्टाच्च सद्योजलम् । चेच्छीतबाधा न स्यात्तर्हि वनप्साशार्करं देयम् । ( २ ) सलफेट आफ कुनैन ४ ग्रेन, डाइल्युटेड सलफ्युरिक एसिड १० बिन्दवः, सीरप आफ आरेंज ( नारङ्गशार्करम् ) यद्वा--सीरप आफ लेमन ( निम्बुशार्करम् ) १ड्राम, स्वच्छजलम् १ औन्स---एतानि सर्वाणि संमेल्यैका मात्रा भवति । इदं "कुनैन मिक्सचर" नाम्ना व्यवह्रियते । इदमपि ज्वरागमतः पूर्वं घण्टात्रयान्तरेणोपयोज्यम् । ( ३ ) सिनकोनाफेब्रीफ्यूज ६० ग्रेन, निम्बुरसः १ फ्ल्यूड ड्राम-द्वयमेतत्संमेल्य रक्तिप्रमाणा वटिकाः कार्याः । मधुना गुडेन वा संनीय शीतज्वरादिषु सेव्यन्ते । ( ४ ) कुनैनम् १ औन्स, कर्पूरः १॥ मा०, पीपरमेण्टम् ६ रक्तिकाः, अर्कमूलत्वक् १॥ मा०, शुद्धं हिङ्गुलम् ४ र०, मल्लः २ र०, सर्वमिदं गुडूचीस्वरसेन प्रपिष्य गुञ्जाप्रमाणा वट्यो विधेयाः । इयं वटी "विषमज्वरघ्नी" इति प्रसिद्ध्यति । ( ५ ) कुनैनम् १ तो०, वंशरोचना १ तो०, सूक्ष्मैलाबीजानि १ तो०, प्रवालभस्म १ तो०, टार्टरिक एसिड, ( आमलकीसत्त्वम् ) १ तो०, सर्वमेतत्तरुणीकुसुमार्केण प्रपिष्य गुञ्जाद्वयमिता वट्यः कार्याः । शीतज्वरागमनतो घण्टाद्वयपूर्वमेका वटी " गावजवाँ " इति ख्याताया क्वाथेन केवलेन जलेन वा देया । सेयं " शीतज्वरहरी " । कुनैनमेतद्विदेशाद्वटिकाबद्धमप्यायाति । वस्तुतस्तु—इदं विदेशीयं कुनैनं न लाभप्रदम् । सम्यगुपचाराभावाद्येषां ज्वरो नावतरति तेषां किञ्चिदुपकरोत्यपि, परमनेकेषां हानिमेव करोति । अत्रहि तिक्तरसस्य प्राधान्यं यद्गुणा दोषाश्च भगवता चरकेणेत्थं कथ्यन्ते— "तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः क्रिमिघ्नो मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनस्त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसामज्जालसीकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणो रूक्षः शीतो लघुश्च । स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यात्खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिशुक्राण्युच्छोषयति, स्रोतसां खरत्वमुत्पादयति, बलमादत्ते, कर्षयति, ग्लप-

यति, मोहयति, भ्रमयति, वदनमुपशोषयति, अपरांश्च वातविकारानुपजनयति" इति (च० सू० अ० २६)। दृश्यन्ते ह्येतत्सेविनः प्रायो नानामयजुष्टाः। अतो नाधिकमात्रयेदमुपयोज्यम्। उपयोगे वा दुग्धपानं बाहुल्येन विधेयम्। परन्तु जाग्रत्सु स्वदेशीयौषधरत्नेषु विदेशीयेभ्यो हानिकारकौषधेभ्यः स्पृहयतां प्रवृत्तिः शोच्या गर्हणीया चेत्यलम्।

यद्भारतीयभिषजां भवनेषु भा'ति'
तद्भेषजं बहुगुणं भज भूमिभ'क्त' !।
यच्चास्रपित्तदवथुज्वरकीटका'स'-
श्वासादिकान्गमयति द्रुतमत्यय'स्वम्' ॥ ३७ ॥

यदिति—हेभूमिभक्त! "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी," "यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्" इत्यादिभावैर्भ्रियमाणहृदयस्य ते मनागपि स्वदेशीयवस्तुषु विश्वासो जागर्ति चेत्तदा भारतीयवद्यानां भवनेषु भासमानं रक्तपित्त-दवथु-ज्वर-कीट-कास-श्वासादीनामत्ययकारकं बहुगुणं भेषजं भज। किं तदिति जिज्ञाससे चेत्—प्रस्तुतश्लोकस्य चतुर्णामपि पादानामन्त्याक्षराणि संमेल्य ततो निष्पन्नं "तिक्तसत्त्वम्" इति नाम विद्धि। तिक्तसत्त्वम्="चिरायते का सत्त" इति लोके प्रसिद्ध्यति। अत्र श्लोके "प्रोक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणलक्षितं वसन्ततिलकावृत्तम्।

तद्भेषजं निगिल निर्बलतासु ता'सु'
येनापयाति निखिलज्वरमेहबा'धा' ।
श्रीशेषसुश्रुतमुखैर्मुनिभिः समा'स'-
द्वारेण नः समुपदिष्टमिदं हि त'त्त्वम्' ॥ ३८ ॥

तदिति—तासु = प्रसिद्धासु ज्वरमेहादिजन्यासु निर्बलतासु तत् = भूरिगुणं प्रसिद्धं भेषजं निगिल, हन्त! येन ते निखिलानां ज्वरमेहादिमहारोगाणां बाधा शीघ्रमेवापयायात्। स्वमनसैव परिकल्प्य वयमेवं ब्रूम इति मैवं भ्रमीः। इदं तत्त्वं हि नः=अस्मभ्यं श्रीचरकसुश्रुतादिभिर्मुनिप्रवरैरेव संक्षेपतः समुपदिष्टमस्ति। तद्भेषजज्ञानाय बहुताम्यसि चेत्—पूर्वपद्यवदत्रापि चतुर्णां पादानामन्त्याक्षराणि संमेल्य "सुधासत्त्वम्" इति सिद्धं नाम विद्धि। सुधासत्त्वम्="गिलोयका सत्त" इति प्रसिद्धम्। इदं सुधासत्वं वस्तुतः सुधासत्वमेव। एतस्य भुवनमनोहारिणो गुणानिशम्य कस्य चित्ते आनन्दातिरेको न जायेत। वयमिह तेषु तेषु रोगेषु प्रयोगाय सुधासत्त्वानुपानानि निर्दिशामः—१-अर्शोरोगे नवनीतघृतेन

सुधासत्त्वं लिह्यात् । २—नैर्बल्ये गव्येन ससितेन धारोष्णदुग्धेन सेवेत । ३—अरुचौ दाडिमरसेन, ४—वमने लाजाभिः,५—पाण्डौ घृतमधुभ्यां यथार्हमानाभ्यां दुग्धेन वा,६—जीर्णज्वरे ससितेन घृतेन, ७—दाहे ससितेन जीरकेण, ८—पित्तज्वरे पित्तरोगे वा शुद्धशर्करया "बूरा" इति ख्यातया, ९-ज्वरे मधुना, १०—कुष्ठे एरण्डतैलेन, ११—क्षये ससिताभ्यां मधुघृताभ्याम्, १२—मन्दाग्नौ गोरक्षमुण्ड्याः क्वाथेन, १३—गुल्मे शुण्ठ्या, १४—प्रदरे लोध्रेण १५—हिक्कायां मधुना, १६—कामलायां द्राक्षारसेन, १७-प्रमेहे गव्यदुग्धेन त्रिफलया वा ससितया, १८—वायुरोगे घृतेन सेवेतेति दिक्प्रदर्शनम् । तन्मात्रा—साधारण्येन माषकद्वयमिता ।

प्रक्षिप शृङ्गिकचूर्णं करतलतुलितं द्विमुष्टिमादिरायाम् ।
स्थापय कूपीजठरे नूनमुपेक्षस्व तत्पुनः पक्षम् ॥ ३९ ॥
दृढवासोभिः पावय योजय पश्चा"ज्वरामृतं" तदिदम् ।
सलिलं तत्र सहायं मात्रा तस्यैव विन्दवः सप्त ॥ ४० ॥

प्रक्षिपेति—विशुद्धं शृङ्गिकविषं कर्षमितं द्विपलमिते उत्तममद्ये, डाक्टरसंज्ञैः पाश्चात्यवैद्यैः प्रचारिते "रेक्टीफाइड" ( Rectified ) इति प्रसिद्धे मद्येवा काचकूपीगते प्रक्षिप्य, कूपीं संमुद्रय, पक्षमेकमुपेक्ष्य, पुनर्दृढवासोभिः= "मोमिया" इति प्रसिद्धैः गाढवस्त्रैरास्रावयेत । तदिदं "ज्वरामृतम्"नाम महाप्रभावमौषधं सिद्ध्यति । कस्मिंश्चित्काचचषके शुद्धं जलं द्वित्रितोलमितमादाय तत्र सप्तविन्दुतो द्वादशविन्दुपर्यन्तं यथार्हं ज्वरामृतमिदं निक्षिप्य ज्वरे योजयेत् । गीतिश्छन्दः । युग्मम् ।

वलक्षतालभस्मकं पृदाकुपर्णमध्यगम्
बलासकासनाशकं ज्वरार्तिशासकं भज ॥ ४१ ॥

वलक्षेति—"गोदन्ती हरताल" इति प्रसिद्धं श्वेततालं कुमारीरसेन भावयित्वा, गजपुटे विपाच्य भस्म विधेयम् । तदिदं नागवल्लीदलेन वल्लमितं भुक्तं कफं, कासं, ज्वरञ्च नाशयति । पद्येऽत्र नगस्वरूपिणीत्यपरपर्यायं प्रमाणिका छन्दः ।

ज्वराबलत्वकासदोपरोपशोपितोऽसि चेत् ।
भजस्व जीवनीप्रवालतालविद्रुमाद्विकम् ॥ ४२ ॥

ज्वरेति—"सञ्जीवनी वटी" प्रवालभस्मेति द्वयम्; श्वेततालभस्म, प्रवालभस्मेति द्व्यं वोक्तरोगेषु भजस्वेति योगद्वयम् ।

"सञ्जीवनी वटी" विधिः—विडङ्गम्, शुण्ठी, पिप्पली, हरीतकी, आमलकम्, विभीतकः, वचा, गुडूची, भल्लातम्, शुद्धं शृङ्गिकविषम्—एतानि समानानि गोमूत्रेण प्रपिष्य गुञ्जाभा गुटिकाः कार्याः। आर्द्रकादिभिः संसेव्येत। "प्रवालभस्म"—प्रवालमुपर्यधो निहितघृतकुमारीमांसं हण्डिकायां रुद्ध्वा महागजपुटे विपचेत्। एकेनैव भस्म भवेत्। अपक्वतायान्तु पुनः पुटं दद्यात। यद्वा सितामुपर्यधो दत्त्वा पुटं दद्यात्।

यदि खादेज्ज्वरी पर्णे स्वर्णमुक्तार्कजं रजः ।
तदा तस्यापसरति हिक्का रुकायतः क्षणात् ॥ ४३ ॥

यदीति—ज्वरे हिक्कोपद्रवे सति स्वर्णभस्म-मुक्तापिष्टि-ताम्रभस्मानि संसेव्यानि नागवल्लीदलेन। मात्रा तु कल्पनीया। स्वर्णभस्मविधिरुक्तः। मुक्तापिष्टिस्तरुणीकुसुमार्केण कार्या। ताम्रभस्मोपदेक्ष्यते।

हृदि ग्रस्तेऽपि च ग्रस्ते समस्तेऽङ्गे मलोरगैः ।
मुक्तासूताभ्रकस्तूरीहिरण्यजरजो भजेत् ॥ ४४ ॥

हृदीति—हृदि ग्रस्ते=रक्तवहनासमर्थे सति, "हार्ट फैल"—( Heartfail ) शङ्कायामिति यावत्। समस्तेऽङ्गे रोगसर्पैर्ग्रस्ते सति मुक्तापिष्टिरससिन्दूराभ्रकभस्मकस्तूरीस्वर्णभस्मेति पञ्चकं मधुना भजेत।

छिन्नासत्त्वकमौक्तिकाभ्रककणातालप्रवालैः कृता
पुष्पार्केण वटी नटीव मनसामामोददात्री परा ॥
कासश्वासनिरासरासरसिका सा वासिकावारिभि-
र्नाम्ना "संशमनी" ज्वरार्तिदमनी स्याज्जीवनी चौजसाम् ४५॥

छिन्नेति—छिन्नासत्त्वकम्=गुडूचीसत्त्वम्। पुष्पार्कः="गुलावका अर्क" इति ख्यातस्तेन पिष्ट्वा वटी विधेया। सेयं नाम्ना "संशमनीवटी" सिद्धयति। कासादिनाशाय वासारसेन सेव्या, ज्वरार्तिदमनाय तु मधुना। ओजसां जीवनी सैषा वटी हृदयास्पन्दने धमनीवैकल्यकालेऽपि प्रयोज्या। पद्येऽत्र शार्दूलविक्रीडितं छन्दः, अनुप्रासश्चेतोहर उपमा च।

ज्वरेषु रे सावधिकेषु तेषु मुक्तान्त्रिकागन्तुजसन्ततेषु ।
पक्वं पयः साम्बु रसाः फलानां साबूनि दानानि मतानि चैव॥४६॥

ज्वरेष्विति—सावधिकेषु=कञ्चित्कालमवधीकृत्य स्थितेषु तेषु=प्रसिद्धेषु मुक्तान्त्रिकागन्तुजसन्ततेषु=मौक्तिकः—"पानीझरा" "मोतीझरा" "मन्थरज्वरः" इत्यादिशब्दैर्व्यपदिश्यमानः सूक्ष्ममौक्तिकाभपिडकायुक्तः सन्निपातज्वरविशेषः, आन्त्रिकः—"एण्टेरिकफीवर" "टाइफाइडफीवर" (Enteric fever or Typhoid fever) इत्याख्यातः, आगन्तुजाः—विषाभिषङ्गादिभिर्जाताः श्वसनकश्लेष्मकग्रन्थिकादयः सन्ततः—"सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात्" तादृशः, यं पाश्चात्याः "मेलेरियल रेमिटण्ट फीवर" (Malarial Remittent fever) इत्याहुः। एतेषु सर्वेषु ज्वरेषु साम्बु=सजलं पक्वं पयः=दुग्धं फलानाम्=अङ्गूरदाडिमादीनां रसाः "साबूदाना" इति प्रसिद्धानि च प्रयोज्यानि पथ्यत्वेनेति शेषः। यद्यपि सन्ततज्वर एव मौक्तिकज्वरस्तथापि पृथगुक्तिः सूक्ष्ममौक्तिकाभपिडकायुक्तस्यैव "मोतीझरा" इति संज्ञाभिधानाय। श्लोकेऽस्मिन्नुपजातिवृत्तम्।

**निम्बामृताधान्यमहौषधानां क्वाथः स्मृतस्तत्र सलोकनाथः।**
**संजीवनी चाथ विवृद्धदोषे लवङ्गनीरं प्रबलास्यशोषे॥ ४७॥**

निम्बेति—तत्र=सर्वेषु सन्ततादिज्वरेषु, निम्बादीनां क्वाथो लोकप्रसिद्धलोकनाथरसयुक्तो देयः। यद्वा—केवलो लोकनाथ एव मधुना त्रिसन्ध्यं योज्यः। दोषबाहुल्ये सति पूर्वोक्तसंजीवनीसहितो लोकनाथः। पिपासायान्तु लवङ्गपानीयं देयमिति।

अथ "लोकनाथरस" प्रक्रिया—शुद्धपारदः २ भागौ, शुद्धगन्धकः २ भागौ, द्वयोर्मसृणां कज्जलीं कृत्वा, पारदाच्चतुर्गुणासु पीतकपर्दिकासु (कौड़ी) भृत्वा, एकभागं सौभाग्यं गोदुग्धेन प्रपिष्य तेन कपर्दिकामुखानि रुन्ध्यात्। ततोऽष्टभागशङ्खखण्डानुपर्यधो दत्त्वा कपर्दिकास्ताः सुधालिप्तयोः शरावयोर्मध्ये रुद्ध्वा मृत्कर्पटाभ्यां विलिप्य महागजपुटे विपचेत्। स्वाङ्गशीतं समुद्धृत्य सम्पुटस्थं द्रव्यं गृह्णीयात्। सोऽयं "लोकनाथः"।

**बिल्वाम्बुमुस्ताभिषविश्वतोयं तत्रातिसारे सविषं प्रपेयम्।**
**मुक्तान्त्रिके धान्यकपञ्चकं वा विरेचनं वा लघु बद्धविट्के॥४८॥**

बिल्वेति—तत्र=सन्ततादिज्वरेषु अतिसारे जाते सति बिल्वादीनां क्वाथोऽतिविषाचूर्णसहितः पेयः। तत्र—अम्बु="नेत्रवाला" इति प्रसिद्धम्। मौक्तिकज्वरे आन्त्रिकज्वरे वातिसारे सति तु "धान्यकं नागरं मुस्तं वालकं बिल्वमेव च" इति चक्रदत्तोक्तं धान्यपञ्चकं क्वथितं पेयम्। बद्धविट्के तु लघु विरेचनं देयम्।

**मुक्ताप्रवालजरजः प्रबलोष्मवेगे**
**शुभ्राथवा तुवरिका बहुशः प्रयोज्या॥**

श्वासे तु सोषणकशुक्तिरजांसि चाथ
कासे प्रवाललितः किल लोकनाथः ॥ ४९ ॥

मुक्तेति—प्रबलोष्मवेगे=ज्वरे ऊष्मणो बाहुल्ये सति मुक्ताप्रवालयोः पिष्टं प्रयोज्यम् । अथवा शुभ्रा=वंशरोचना, तुवरिका=स्फटिका च बहुशः प्रयोज्या । स्फटिका च वह्नौ भ्रष्टा ग्राह्या । ज्वरे श्वासयुक्ते सोषणकानि=समरिचानि, शुक्तिरजांसि=मुक्ताशुक्तिभस्मानि देयानि । कासयुक्ते ज्वरे तु प्रवालसहितो लोकनाथरसः प्रयोज्यः । वसन्ततिलकावृत्तम् । अनुप्रासः ।

कनकच्छदसंयुक्ता मुक्ता मुक्ताज्वरेषूक्ता ।
मधुराज्वरसंहारि श्रीसुममण्डूकपर्णिकावारि ॥ ५० ॥

कनकेति—मौक्तिकज्वरेषु स्वर्णपत्रसहिता मुक्ता, केवला मुक्ता वा, केवलं स्वर्णपत्रं वा प्रदेयम् । किञ्च-श्रीसुमम्=लवङ्गम्, मण्डूकपर्णिका=ब्राह्मी तयोर्जलमपि मन्थरज्वरहारि । अत्रोद्गीतिश्छन्दः ।

पर्पटतिक्तकशुंठीमुस्तपटोलामृताकणावारि ।
तृष्णादाहविदारि ज्वरसंहारि क्षुधाकारि ॥ ५१ ॥

पर्पटेति—स्पष्टम् । सर्वज्वरविषयको मन्थरज्वरविषयकश्च योगः । पथ्यार्यावृत्तम् । अनुप्रासोऽलङ्कारः ।

ब्राह्मीश्रीसुमशुंठीजातीपत्रीफलानि पिष्टानि ।
सलिले निश्चितदिवसैर्दुर्ज्वरमुत्तारयन्त्यहो दृष्टम् ॥ ५२ ॥

ब्राह्मीति—जातीपत्री="जावित्री" इति ख्याता । तत्फलम्="जायफळ" इति प्रसिद्धम् । ब्राह्म्यादीनि जले पिष्ट्वा कदुष्णीकृत्य पानाय दत्तानि यावन्ति दिनानि दुर्ज्वरमर्यादा तावद्भिरेव दिनैस्तं नाशयन्ति । ज्वरो न वर्धते न च पीडयतीति भाव । मौक्तिकज्वरेऽप्ययं योगोऽवचार्यः । गीतिश्छन्दः ।

पिड़कानुद्गमे मुक्ता मुक्ताख्ये श्लाघिता ज्वरे ।
सेवा सुमाम्भसाम्मुक्ता मुक्तानां किन्तु पञ्चकम् ॥ ५३ ॥

पिड़केति—मुसलवन्यश्चित्रकाव्यभेदोऽयम् । मुक्ताख्ये ज्वरे पिड़कानुद्गमे=मौक्तिकाभसूक्ष्मपिड़कानामदर्शने सति, मुक्ताः=अविद्धमौक्तिकानि प्रशस्ताः । लवङ्गजलानां सेवा शस्ता । किन्तु मौक्तिकानि पञ्चैव देयानि ।

मुसलबन्धविन्यासः

| पिड़कानुद्गमे | मुक्ता | स्ये श्लाघिता ज्वरे। |
|---|---|---|
| सेवास्तुमाम्भसा | | नां किन्तु पञ्चकम् ॥ |

स्वेदागमे शीतगात्रे मौक्तिकादर्शने पुनः ।
सेवयेद्देवकुसुमैः कस्तूरीमकरध्वजौ ॥ ५४ ॥

स्वेदागमे इति—देवकुसुमैः=लवङ्गकायेन । मकरध्वजः=चन्द्रोदयः । स्पष्टमन्यत् ।

अयमेव विधिः प्रायः कार्यः श्वसनकादिषु ।
जीवाणुजन्येष्वन्येषु ज्वरेष्वपि चिकित्सकैः ॥ ५५ ॥

अयमेवेति—अयमेव=लवङ्गकायेन कस्तूरीमकरध्वजसेवनरूपो विधिर्जीवाणुजन्येषु = भूवायुजलदोषतःसमुत्पन्नसूक्ष्मकीटजन्येषु श्वसनकादिषु = " न्युमोनिया " ( Pneumonia ) प्रभृतिषु, अन्येषु=आन्त्रिकग्रन्थिकश्लेष्मकसन्धिकाक्षेपकेष्वपि ज्वरेषु कार्यः ।

एतेषु द्वयोर्विशेषमाह—

आमोक्षं लङ्घनं युक्तं श्लेष्मकोरःप्रदाहयोः ।
अथवात्ययिके दुग्धं मृद्वीकादि च युज्यते ॥ ५६ ॥

आमोक्षमिति—ज्वरनिवृत्तिपर्यन्तं श्लेष्मके= " इन्फ्लुयेंझा" ( Influnza ) इत्याख्याते, उरःप्रदाहे=" न्युमोनिया "-भिधे च लङ्घनं युक्तम् । अनयोरन्नसम्बन्धः सर्वथा परिहार्य इत्यर्थः । आत्ययिके=अन्नप्राप्तये हाहा कुर्वति रोगिणि तु पक्वं दुग्धं मृद्वीकाद्गूरादिफलान्यपि दातुं शक्यन्ते ।

सौराष्ट्रिकामिलितमभ्रकमेकगुञ्जं
विध्वंसयेच्छ्वसनकादिविकारपुञ्जम् ।
सद्यः समुत्खनति फुस्फुसदाहमूलं
पानाच्छृतं समधु सिंहमुखस्य मूलम् ॥ ५७ ॥

सौराष्ट्रिकेति—सौराष्ट्रिका=स्फटी । सा च शोणा वह्निफुल्ला चादेया । श्वसनकादीत्यादिना श्लेष्मककफज्वरयोर्ग्रहणम् । फुस्फुसदाहः="न्यूमोनिया"ज्वरः । सिंहमुखः=आटरूपकः ।

समं पत्रैर्द्वित्रैः सुरकुसुममिश्रैर्विलसिते
महाकासश्वासज्वरगदविनाशक्षमबले।
त्रिदोषघ्ने भत्ने श्वसनकसपत्ने बहुगुणे
किमन्यस्मिन्यत्ने सति "गगनरत्नेऽ"गदपतौ ॥ ५८ ॥

सममिति—सुरकुसुममिश्रैः=पञ्चलवङ्गसहितैर्द्वित्रैः पत्रैः=नागवल्लीदलैः सह विलसिते, महाकासादिविनाशके, त्रिदोषापसारके, भत्ने=पुराणे, पुराणस्यैव गुणाधिक्यदर्शनादितिभावः। तथा श्वसनकसपत्ने="न्युमोनिया"-ज्वरशत्रुभूते, बहुगुणे, अगदपतौ=भेषजाधिपे गगनरत्ने=विशुद्धाभ्रकभस्मरत्ने विद्यमानेऽन्यस्मिन्यत्ने किम्, न किमपीति। शिखरिणीवृत्तम्। अनुप्रासो मनोरमः।

अपामार्गक्षारान्तरितसितफेनाश्मशकलं
शनैश्चुल्लीयन्त्रे लघुघटकरुद्धं परिपचेत्।
अयं मल्लो नानानिलकफरुजानां विघटक-
स्तथा कासश्वासश्वसनकविकासव्यथयिता ॥ ५९ ॥

अपामार्गेति—सितफेनाश्मा=श्वेतमल्लस्तत्खण्डं शुद्धमादाय, अपामार्गभस्मना भृतार्धायां हण्डिकायां धृत्वा, हण्डिकाशेषं पुनर्भस्मनाऽऽपूर्य, हण्डिकामुखमवरुध्य चुल्ल्यां मन्दाग्निना यामं विपचेत्। पक्वोऽसौ मल्लो यथोक्तगुणप्रदः। अनुपानं नागवल्लीदलादि कल्प्यम्। मल्लस्योपर्यधोऽभ्रकपत्रं दातव्यमन्यथोड्डयिष्यते इति शङ्का।

मल्लस्तालमरालपादमिलितस्तोलैस्त्रिभिस्तोलितः
सार्द्धप्रस्थकठिल्लकाम्बुनि पुनः सप्ताहमामर्दितः।
भूयःसर्षपसोदरः श्वसनके काकोदरः कीर्तितः
सोऽयं नून"मचिन्त्यशक्ति"रिति च ख्यातिं प्रयाति क्षितौ॥६०॥

मल्ल इति—मल्लः="संखिया" इति प्रसिद्धः, तालम्=हरितालम्, मरालपादः=हिङ्गुलम्। प्रत्येकस्य शुद्धस्यैकैकस्तोलको ग्राह्यः। तदिदं त्रयं सार्द्धैकप्रस्थे कारवेल्लस्वरसे सप्ताहं विमर्द्य सर्षपसमाना वटीर्बध्नीयात्। द्विसन्ध्यं त्रिसन्ध्यं वैकैका सितया सह देया। भोजनमत्र वर्जितम्। क्षुधि तृषि च केवलं "चाय-" पानं शस्तम्। अनेन वेगे शान्ते शृङ्गभस्माभ्रकञ्च समं कल्पितमात्रया प्रदेयम्। सोऽयं "न्यूमोनिया-" ज्वरे रामबाण इवाव्यर्थः। "अचिन्त्यशक्तिः" इति नाम्ना लोके प्रसिध्यति। अस्मिन्प्रयुक्ते कश्चिद्दौर्भाग्यग्रस्त एव म्रियते इति बहुशः परीक्षितः कुञ्चिकाक्तो रसः। अत्र अनुप्रासश्चेतोहरः।

मदनबीजबलीशजलोहजैर्द्विपिचुभिः पृथगेकपिचून्मितैः ।
गगनदारुसितासुमजातिकाफलदलत्रुटिचन्द्रमरीचकैः ॥ ६१ ॥
शशियुजा मकरध्वजरञ्जितै रवियुजा फणिफेनसमन्वितैः ।
मदनजेन रसेन सुपेषितैःपुनरनातपमध्यविशोषितैः ॥ ६२॥
विजयते हरिमन्थसहोदरो रसवरो बहुरोगहरो नृणाम् ।
श्वसनकस्तुतिदोषविनाशन"श्चलबलासमलाशपलाशनः" ॥ ६३ ॥

मदनेति—त्रिभिः श्लोकैर्विशेषकम् । धत्तूरबीज–गन्धक–पारद–लोहभस्मनां प्रत्येकस्य तोलकद्वयम्, अभ्रकभस्म–दारुसिता–लवङ्ग–जातिपत्री–जातिफलैला–भीमसेन-कर्पूर–मरिच–मकरध्वजानां प्रत्येकमेकैकस्तोलकः, अहिफेनस्य द्वादश तोलकाः । सर्वमे-तद्धत्तूरपत्ररसेन विमर्द्य चणकसमाना वटीः कुर्यात् । सोऽयं रसः " महावातराजः " इति नाम्ना "चलबलासमलाशपलाशनः" इति नाम्ना वा व्यवह्रियते । तस्यैतस्य लोको-त्तरान्गुणानिशस्य कस्तावन्न प्रशंसेत् । अनुपानभेदेनानेकेषां रोगाणां नाशकोऽप्यसौ " न्यूमोनिया " ज्वरेऽतीसारे च विशेषतो महीयते । शतैरुपायानां दुरुपक्रमाऽपि प्रबला पार्श्वार्तिरस्योपयोगादर्धघण्टामात्रेण शाम्यतीति सपणबन्धं ब्रूमः । कुञ्चिकाकर्तुरयं प्रयो-गोऽनेकशो दृष्टचमत्कारः परीक्षितश्च श्वसनके । पद्येष्वेषु द्रुतविलम्बितं छन्दः । अनुप्रासस्तु कवेरस्य दास एव ।

मल्लः कृष्णलवङ्गशृङ्गिकसखः खर्जूरिकासङ्गतो
जातीकोपकरीरशुङ्गसहितःश्वेताहिफेनान्वितः ।
गुञ्जाभो वटदुग्धभावितवपु"र्वातेभसिंहो" रसः
कासश्वासबलासनाशनविधौ दक्षोऽस्ति खण्डेन सः ॥६४॥

मल्लइति—शतमल्ल–मरिच–लवङ्ग–शृङ्गिकविष–खर्जूरफलमज्ज–जातीफल–करीराङ्कु-राणां प्रत्येकं षण्माषकाः, अहिफेनस्य सितायाश्च प्रत्येकं तोलकः । सर्वमिदं वटदुग्धेन विमर्द्य रक्तिमाना वटीर्विदध्यात् । अयं "वातेभसिंहो" रसः "न्यूमोनिया" ज्वरेऽतीव प्रशस्यते शुद्धशर्करानुपानेन । तैस्तैरनुपानैरनेकरोगेषूपकुर्वाणस्यास्य गुणविवरणलोभं न संवृणुम इति ते गुणा विव्रियन्ते—कासे, श्वासे, सन्निपाते च मधुना सेवेत । मृत्यावासन्ने गुञ्जाद्वयमिताभ्यां श्वेतकत्थाकल्काभ्यां सह सेवनेनाचेतनोऽपि सक्रद्ब्रूयादेव । हिक्कायां मूलकबीजैः सेवेत । अतीसारे लघुहरीतक्या शतपुष्पया जीरकेण वा । रक्तप्रदरे मधुना

घृतेन वा । शिरोऽर्त्तौ छिक्कया सह संपिष्य नस्यं देयम् । आध्माने रसमेतं जग्ध्वा नाभौ मूषकविष्ठां लिम्पेत् । शीतज्वरे गुडेन । पित्तज्वरे सितया । क्लैब्ये किलाटकेन (दुग्धपेटकेन) । अपथ्यजे सौत्राके गुलाबगुलकन्देन सितया च जले समाप्लाव्य । स्तम्भनाय जातीफलकस्तूरीभ्याम् । कुञ्चिकाकर्तुरयं योगः ।

करिकेसरकाश्मीरकणाकृष्णमरीचकैः ।
साकल्लकैर्दारुसिताजातीदलफलान्वितैः ॥ ६५ ॥
प्रत्येकं कार्षिकैर्धेनुरोचनाकोललालितैः ।
मौक्तिकाम्बरकस्तूरीशाणसंवलितैर्वटीम् ॥ ६६ ॥
विधाय बदराकारां गोस्तनीप्रसृतद्रवैः ।
प्रातः सायं श्वसनके मौक्तिकादिषु चेष्यते ॥ ६७ ॥

करीति—करिकेसरः=नागकेसरः, काश्मीरम्=कुङ्कुमम्, कणा=पिप्पली । धेनुरोचनाकोललालितैः=षण्माषकमितगोरोचनायुक्तैः । मौक्तिकाम्बरकस्तूरीशाणसंवलितैरिति अविद्धमुक्तानामम्बरस्य कस्तूर्याश्च प्रत्येकं माषकत्रयं ग्राह्यम् । सर्वं द्रव्यसंभारं यथार्हं निक्षिप्य विकुट्य च प्रक्षालिताभिर्निर्बीजीकृताभिश्च "मुनक्का" इत्याख्याभिर्द्राक्षाभिरर्धकुडवमिताभिः ( ऽ= ) सह यामचतुष्टयं पिष्ट्वा क्षुद्रबदराकारा वटीर्बध्नीयात् । द्विसन्ध्यमेकैका प्रदेया । अयं योगः प्राधान्यतो मौक्तिकज्वरे चमत्कुर्वाणोऽपि "न्यूमोनिया" प्रभृतिष्वप्यप्रतिषिद्धः । परीक्षितः । अत्राम्बरम्=स्वेन नाम्नाख्यातम् ।

अथ "न्यूमोनिया" ज्वरनाशकाँल्लेपादीन्वाह्यप्रयोगानभिधत्ते—

तैलेन नारायणनामकेन जतूनतार्पीनभवेन वापि ।
अभ्यज्य पार्श्वे लवणैः सुखोष्णैः संस्वेदयेद्दारुणपर्शुकार्तौ ॥६८॥

तैलेनेति—दारुणपर्शुकार्तौ="न्यूमोनिया" अन्यायां "पसलीका दर्द" इति प्रसिद्धायामसह्यपीडायां नारायणाख्यतैलेन, पाश्चात्यभिषक्प्रचालितेन जैतूनतैलेन तार्पीनतैलेन वा पार्श्वभागावभ्यज्य=विलिम्प्य सुखोष्णैर्लवणैः स्वेदयेत् । "नारायणतैलम्" आयुर्वेदस्य प्रसिद्धं वस्तु । जैतूनतैलन्तु—(Olive oil) नाम्ना डाक्टरवैद्येषु प्रसिद्धम् । तार्पीनतैलमपि(oil of Turpentine) नाम्ना व्यवह्रियते । इदं तैलद्वयं तद्विक्रेतृभ्यः प्राप्यते । नारायणतैलविधिः—बिल्वत्वक्, अग्निमन्थत्वक्, अरलुकः, निम्बत्वक्, गन्धप्रसारिणी= "खींप" इति ख्याता, अश्वगन्धा, कण्टकारी, बृहती कण्टकारी, पाटला, बला, अतिबला, गोक्षुरः, पुनर्नवा—एतेषां त्रयोदशद्रव्याणां प्रत्येकस्य षट् तोलकान् गृहीत्वा यथायथं विकुट्य तत्र सार्धद्विचत्वारिंशत्प्रस्थं जलं दत्त्वा, निष्क्वाथ्य, अर्धांशमवशेष्य वस्त्रेण गालयेत् ।

शतावर्यां सपादप्रस्थायामपि दशप्रस्थमितं जलं दत्त्वा, निष्क्वाथ्याधांशमवशेष्य वस्त्रेण गालयेत् । इदं क्वाथद्वयं गव्यं दुग्धं च दशप्रस्थमिति त्रीण्यत्र द्रवद्रव्याणि सम्पादयेत् । ततः—शतपुष्पा, देवदारु, जटामांसी, शैलेयम्, वचा, रक्तचन्दनम्, तगरम्, कुष्ठम्, सूक्ष्मैला, शालिपर्णी, पृष्ठपर्णी, मुद्गपर्णी, माषपर्णी, रास्ना, अश्वगन्धा, पुनर्नवा, सैन्धवम्—एतेषां सप्तदशद्रव्याणां प्रत्येकस्य सार्धैकतोलकं गृहीत्वा, विचूर्ण्य च रात्रौ मृत्पात्रे जलेन प्लावयेत्प्रातश्च तत्कल्कं कुर्यात् । ततश्चेमं कल्कं स्वच्छकटाहे निधाय तत्र सार्धप्रस्थद्वयमितं तिलतैलं दत्त्वा, पूर्वोक्तं क्वाथद्वयं दुग्धञ्चापि तत्रैवावाप्य शनैः शनैर्विपचेत् । यदा तैलद्रव्ये प्रस्थमात्रमिव जलमवशिष्येत तदा तैलं चुल्हीतोऽवतार्य स्वाङ्गशीतं तद्वस्त्रेण गालयित्वा युक्तितो जलं वर्जयित्वा तैलमात्रं गृह्णीयात् । क्वाथे सति काळुष्ये तैलशोधनपत्रेण शोधयेदिति तदिदं प्रसिद्धं " नारायणतैलम् " ।

**वातामतार्पीनजतूनसञ्ज्ञि ससार्षपं वै विलसाख्यतैलम् ।**
**करोत्युरःशूलममूलमुग्रमभ्यञ्जनादेव मयेति दृष्टम् ॥ ६९ ॥**

वातामेति—वादामतार्पीनजैतूनतैलसञ्ज्ञि सार्षपतैलयुक्तञ्च " तैल विलसा " इति प्रसिद्धं तैलं पार्श्वयोरभ्यञ्जनादुरःशूलममूलं करोति । सर्वाण्येतानि तैलानि तद्विक्रेतृभ्यः प्राप्यन्ते ।

**पटुं सगोधूमतुषं कदुष्णीकुर्वीत युक्त्या तवकेऽग्नियोगात् ।**
**तत्पोट्टलीं साधु विधाय वस्त्रे त्वरं तया स्वेदयतु प्रयत्नात् ॥७०॥**

पटुमिति—पटुम्=लवणम् । गोधूमतुषाणि=" गेहूंका चापड " इति प्रसिद्धानि । स्वेदनकाले पोट्टल्युपयुक्तमन्यद्रव्यं तवके कदुष्णं भवेत् । पोट्टलीस्थे शैत्यं गते पुनरुष्णं कुर्यादुष्णञ्च स्वेदने समुपयुञ्जीतेत्येषा युक्तिरवधार्या । स्पष्टमन्यत् ।

**लेपोऽप्युरःशूलहरः कुपीलोर्दृष्टस्तथा शम्बरशृङ्गजातः ।**
**ऐलेयशुण्ठीविषरूमगुन्द्रैः सहिङ्गुकैस्त्वत्र महाप्रभावः ॥ ७१ ॥**

लेप इति—कुपीलोः=" कुचला " इति ख्यातस्य लेपोऽप्युरःशूलं हरति । शम्बरो विकटविषाणो मृगविशेषः "बारहसींगा" इति ख्यातस्तच्छृङ्गजो लेपोऽपि तदर्थकारी । ऐलेयम्=" एलिया, मुसव्वर " इति लोके प्रसिद्धं कृष्णच्छायं कुमारीस्वरसजन्यं किञ्चन द्रव्यम्, शुण्ठी, विषम्=शृङ्गिकम्, रूमगुन्द्रः=" मस्तगी " इतिख्यातः, हिङ्गु चेत्येतैर्विहितो लेपः पर्शुकार्तौ महान्तं प्रभावं दर्शयति । लेपेऽत्र गव्यघृतमपि क्षेप्यम् । इति लेपत्रयमुक्तम् ।

पुनर्ज्वरविशेषनाशकान्योगानाह—

श्लेष्मके वा श्वसनके सन्धिके दण्डके पुनः ।
एका सञ्जीवनी शस्ता किं पुनर्गगनान्विता ॥ ७२ ॥

श्लेष्मके इति—श्लेष्मकः="इन्फ्लुयेञ्जा" ( Influenza ) इतिख्यातः । अतिघोरमहामारीरूपेण हि प्रादुरभूदेष ज्वरः सं० १९७५–१९७६ वर्षयोः, येन समग्रेऽपि भूमण्डले लक्षशो मृता मनुजाः । श्वसनक उक्तः । सन्धिकः= " रियुमाटिक फिवर " ( Rheumatic fever) इति प्रसिद्धः । दण्डकः=" डेंग्यू " ( Dengue ) इति प्रसिद्धः । सर्वेष्वेषु केवला सञ्जीवनी, अभ्रकयुक्ता वा सञ्जीवनी वटी प्रशस्यते । एतेषां लक्षणादिविषये विशेषं जिज्ञाससे चेद्गणनाथसेनकृतं " सिद्धान्तनिदानम् " पश्य ।

क्षुद्रामूलशृतं वारि श्लेष्मकारिनिरूपितम् ।
सक्षौद्रं शृङ्गवेराम्बु शौण्डीसिद्धं च दुग्धकम् ॥ ७३ ॥

क्षुद्रेति—कण्टकारीमलक्काथः, समधुक आर्द्रकरसः, पिप्पलीसिद्धं दुग्धञ्चेति त्रयमेतच्छ्लेष्मकज्वरे हितम् ।

क्षुद्रामृतानागरवासिकाभिः कृतः कषायश्चपलासहायः ।
ज्वरं त्वरं वातबलासजातं हन्त्येतदक्ष्णोर्विषयं प्रयातम् ॥७४॥

क्षुद्रेति—चपला=पिप्पली । वातबलासजातो ज्वरः=दण्डकज्वरः । शिष्टं स्पष्टम् ।

सक्षौद्रो विहितः क्काथो वनप्सामधुकोषणैः ।
सन्ध्यस्थिकटिपृष्ठोरःपार्श्वपीडां नियच्छति ॥ ७५ ॥

सक्षौद्र इति—वनप्सामधुयष्टीमरिचानां समधुः क्काथः दण्डकज्वरजन्यां सन्ध्यादिपीडां नाशयति ।

अथ जनपदोद्ध्वंसिनःसांसर्गिकज्वरविशेषस्य "प्लेग" ( Plague ) इति ख्यातस्य ग्रन्थिकज्वरस्य चिकित्सितं विवक्षुस्तद्भयवारणाय पूर्वमेवेतिकर्तव्यतां समुपदिशति—

चन्द्रगैरिकयोर्वट्यो निम्बुनीरेण कल्पिताः ।
द्विसन्ध्यं गिलितास्तोयैर्ग्रन्थिकत्रासनाशिकाः ॥ ७६ ॥

चन्द्रेति—चन्द्रः=कर्पूरः । गैरिकम्="गेरूँ" इति ख्यातम् ।

द्व्यक्षं मल्लाहिफेनाभ्यां पिष्ट्वा लशुनजै रसैः ।
तत्र तूलं समाप्लाव्य तत्प्लोतान्पद् प्रकल्पयेत् ॥ ७७ ॥

ग्रन्थावेकतमं दत्त्वा पलाण्डुफलवल्कलैः।
उष्णैराच्छाद्य बध्नीयात्प्रतिहोरं विवर्तयेत् ॥ ७८ ॥
ग्रन्थिरेवं कृते नूनमहोरात्रेण भिद्यते।
ज्वरो विरमति क्षिप्रं नरोऽपि सुखमश्नुते ॥ ७९ ॥

द्व्यक्षमिति—लशुनरसेन मल्लाहिफेनयोस्तोलद्वयं पिष्ट्वा, तूलमाप्लाव्य, तस्य षट् प्लोतान् "फोहा" इत्याख्यान्प्रकल्प्य, तदेकतमं ग्रन्थेरुपरि दत्त्वा, तं पुनरुष्णैः पलाण्डुफलवल्कलैराच्छाद्य पटेन बध्नीयात्। घण्टामात्रेणेदं विपरिवर्त्य पुनस्तथैव कुर्यात्। एवमेकाहेन ग्रन्थिर्भिद्यते ज्वरश्च शाम्यति। अत्र पलाण्डौ फलत्वोक्तिः फलसादृश्यात्। वस्तुतोऽसौ कन्दः।

कृत्वालवालमभितो ग्रन्थिं तत्रार्कजं पयः।
भृत्वा विवर्तयेत्तेन ग्रन्थेर्लोपो विधीयते ॥ ८० ॥

कृत्वेति—आलवालम्=परिधिं माषादिचूर्णेन कुर्यात्। स्पष्टमन्यत्।

चन्द्रश्चन्दनमैलेयं रक्तमर्काङ्घ्रिवल्कलम्।
मखतूम-मुरेमक्की-पपीता-जदवारकम् ॥ ८१ ॥
दरूनज अकरवी तथा जहरमोहरा।
नादेयं नारिकेलञ्च सर्वमेतद्विचूर्णितम् ॥ ८२ ॥
विभाव्य तरुणीतोयैः कृता माषमिता वटी।
तैरेव भक्षिता षोढा मन्थ्याद्ग्रन्थिकमुल्बणम् ॥ ८३ ॥

चन्द्र इति—रक्तम्= "केसर" इति प्रसिद्धम्। अर्काङ्घ्रिवल्कलम्=अर्कमूलत्वक्। मखतूम–मुरेमक्की–जदवार–दरूनज अकरवी–जहरमोहरा खताई इत्येतानि यावनानि (यूनानी) औषधानि। पपीता="एरण्डककड़ी," "रेंड खर्बूजा" इति लोके प्रसिद्ध्यति, तस्य च मज्जा ग्राह्यः। नादेयं नारिकेलम्="दरियाई नारियल" इति ख्यातम्। तरुणीतोयैः=" गुलावजल " इति प्रसिद्धैः शतपत्रिकार्कैः। तैरेवेति तरुणीतोयैः। षोढा अहोरात्रे षड्वारान्। यावनायुर्वेदसिद्धोऽप्ययं योगो दृष्टप्रभावत्वादिहोक्तः। एवमन्येषामपि केषाञ्चनोपन्यासो दृष्टफलत्वादेवेति न किञ्चिद्दूष्यति।

करञ्जतुलसीनिम्बरविपल्लवजा गुडाः।
निषेधयन्ति नियमाज्जीवाणुजनिताञ्ज्वरान् ॥ ८४ ॥

करञ्जेति—जीवाणुजनितान् = जनपदोध्वंसिनः सांसर्गिकज्वरान्ग्रन्थिकश्लेष्मकादीन्।

षोडशांशशृतं वारि सकलज्वरहारि चेत् ।
किमन्यैरौषधैः किंवाऽऽहूतैर्नानाचिकित्सकैः ॥ ८५ ॥

षोडशांशेति—अयं शृतपानीयोपयोगो वैद्यरहितबहिर्ग्रामवासिनां महान्तमुपकारमादध्यात्कचिदपि ज्वरेऽप्रतिषिद्धत्वात् ।

मिथ्याहिमोपलशिलाशकलानि मूर्ध्नि
बध्नीत तीक्ष्णतरवेगवति ज्वरे यः ।
रुङ्मोहदाहमुखशोषवमिप्रलाप–
तृष्णाभ्रमैः स विपुलैरपि मुच्यते ना ॥ ८६ ॥

मिथ्येति—तीव्रवेगे ज्वरे रोगिणो मूर्ध्नि " वर्फ " इति ख्यातस्य कृत्रिमहिमोपलस्य शकलानि बध्नीत, ततो रुगादिनाशः स्यादिति सारः ।

संव्यानेनोष्णपानीयधौतनिष्पीडितेन वै ।
तीव्रज्वरवतो जन्तोरङ्गप्रोञ्छनमुत्तमम् ॥ ८७ ॥

संव्यानेनेति—पूर्वमुष्णजले समाप्लावितेन,तदनु निष्पीडितेन संव्यानेन="अँगोछा" इति ख्यातेनोत्तरीयवस्त्रेणाङ्गानां प्रोञ्छनमपि तीव्रज्वरे हितं भवति ।

अजापयःप्लुतप्रोतधारणं मस्तकोपरि ।
तथैवोष्मापहं शीततैलानां तालुनि स्थितिः ॥ ८८ ॥

अजेति—तीव्रोष्मणि ज्वरेऽजादुग्धार्द्रप्रोतधारणमपि हितं भवति । किञ्च—शीततैलानाम्=चन्दनादितैल–काहूतैलादीनां तालूपरि धारणमपि तादृशमेव । अत्रेदं बोध्यम्—यावज्ज्वरमार्दवं भवेत्तावदेव शीतक्रिया कार्या, अन्यथा सहसा ज्वरमोक्षः स्यात्तेन च शीताङ्गताभीतिः ।

अयि तापातुर ! तृष्णामूर्च्छादाहभ्रमाभिभूताङ्ग ! ।
मर्दय मलयजतैलैरधिपतिशाखातलं गाढम् ॥ ८९ ॥

अयीति—तृष्णामूर्च्छादाहभ्रमयुते तीव्रज्वरे चन्दनतैलेन रोगिणोऽधिपतिसंज्ञकं मर्मस्थानं, शाखातलम्=करचरणतलञ्च मर्दनीयम् । अधिपतिमर्मलक्षणं तु—

आन्तरो मस्तकस्योर्ध्वे शिरासन्धिसमागमः ।
रोमावर्तोऽधिपो नाम मर्म सद्यो जहात्यसून् ॥ इति ।

—अष्टाङ्ग० शा० अ० ४-३६ ।

संप्रति मसूरिकाज्वरप्रतीकारमाह—

**आदिमध्यावसानेषु निम्बस्यैकस्य सेवितः ।**
**रसः कषायः कल्कश्च मसूरीज्वरमार्जकः ॥ ९० ॥**

आदीति—भूवायुजलदोषतः समुत्पन्नं किञ्चिद्विषं जानपदिकीं सांक्रामिकीं मसूरिकां समुत्पादयेत् । तस्याश्च त्रैविध्यम्—बृहन्मसूरिका-( स्माल् पॉक्स- Smal Pox ) लघुमसूरिका-( चिकेन पॉक्स Chicken Pox )-रोमान्तिका-( मीज़ल्स्-Measles )-भेदात् । आद्या- " शीतला," " माता, " " चेचक " इत्यादिनामभिः, मध्या- "आकडाकाकड़ा" इति नाम्ना, अन्त्या तु- " बोदरी," " ओरी " इत्यादिनामभिर्व्यवह्रियते । सर्वासामासाम्—

"तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ।
त्वचि शोथः सवैवर्ण्यो नेत्ररागश्च प्रायशः ॥"

इति पूर्वरूपमुक्तम् । तत्र—आदौ दिनत्रयं निम्बस्य रसः, मध्ये दिनत्रयं तस्य क्वाथः, अवसाने च दिनत्रयं तत्कल्कः सेव्यः इति नवदिनैर्ज्वरमुक्तिस्तथा भवति । क्वचित्तु—सप्ताहं सप्ताहमेकैकं विधिरित्येकविंशतिदिवसैः पूर्णं नैरुज्यम् । आगामिमसूरिकाक्रमणवारणाय भारतीयवैद्यैराविष्कृता, बाह्वादिचर्मण्युत्कीर्यमाणा "कृतकमसूरिका"-पि वर्षशतात्पूर्वमिह सुप्रचलिताऽऽसीत् । सेदानीं विलुप्तप्राया । अधुना तु-"विलियम् जेनर" नाम्ना केनचिदाङ्ग्लजनेन खृस्ताब्दे १७९६ प्रवर्तितः, बाहुचर्मोत्कीर्ये गोमसूरिकारसप्रवेशनरूपः, " वैक्सिनेशन-" ( Vaccination ) नामा कश्चिदन्य एव पाश्चात्यवैद्यैः परीक्षितो विधिः क्रियते । किन्तु-नायं भाविमसूरिकाप्रतिषेधविधिश्चिरं तिष्ठतीति बहुशो दृश्यते ।

**मसूरिकाप्रशमनी ब्राह्मी वा हिलमोचिका ।**
**दशमूलं, पटोलादिः, शौचं कीटापसारणम् ॥ ९१ ॥**

मसूरिकेति—हिलमोचिका=वास्तूकम् " बथुवा " इति ख्यातम् । दशमूलमुक्तम् । पटोलादिः—पटोलपत्रम्, इन्द्रयवः, देवदारु, त्रिफला, मुस्तम्, मृद्वीका, मधुयष्टी, गुडूची, आटरूषकः, मधु चेति । ब्राह्मी-हिलमोचिका-दशमूल-पटोलादीनां हिमकषाया देयाः । शौचम्=रुग्णागारवस्त्रादीनां स्वच्छतापादनम्, कीटापसारणम्=मसूरिकाविषस्यापहारकम् । शुद्ध्या विषस्य विसर्पणपरिहारात् ।

औषधं शीतलः क्वाथः, पानं वै शीतलं जलम् ।
शीतलास्तोत्रपाठश्च, शीतलाशमनं मतम् ॥ ९२ ॥

औषधमिति—शीतलः क्वाथः=पटोलादिहिमः । शीतजलस्य=शृतशीतस्य जलस्य पानं विधेयम् । शीतलास्तोत्रपाठश्चेति सर्वमेतत् शीतलां शमयति । शीतलास्तोत्रं काशीखण्डोक्तं भावप्रकाशे द्रष्टव्यम् ।

मण्डूकपर्ण्याः प्रथितः कषायो मस्तिष्कमूलामयनाशनाय ।
पेयस्तथाऽऽक्षेपकसूदनाय संज्ञाविहीनस्य च चेतनाय ॥९३॥

मण्डूकपर्ण्या इति—ब्राह्मीकषायो मस्तिष्कमूलामयान्, आक्षेपकम्, चेतनाराहित्यं च नाशयति । मस्तिष्कमूलामयाः= " हिस्टीरिया " प्रभृतयः, पक्षाघातादयो वातरोगाः उन्मादादयो मानसविकाराश्च । आक्षेपकः=जीवाणुजन्यः संज्ञाहृद्घोरो ज्वरः "सेरिब्रो-स्पायिनल फीवर " ( Cerebro-spinal fever ) इत्याख्यातः ।

मरीचविश्वाविषमुष्टिकानि सौभाग्यकृष्णाविषसंयुतानि ।
रसैस्तुलस्याः परिभावितानि गुटीकृतानि ज्वरनाशनानि ॥९४॥

मरीचेति—विषमुष्टिकम्= "कुचीला" इत्याख्यातम् । तच्च शुद्धमादेयम् । सौभाग्यम्=टङ्कणं "सुहागा" इति प्रसिद्धम् । विषम्=शृङ्गिकं शुद्धम् । गुट्येषा जीर्णज्वरादिनाशायोपयोक्तव्या ।

शुक्रेण शोणस्फटिका विपक्वा ज्वरं निगृह्णाति वनप्सिकेव ।
पक्वा तथा सैव च मल्लगर्भा सश्वासकासं ज्वरमुत्क्षिणोति ॥९५॥

शुक्रेणेति—वनप्साक्वाथो यथा ज्वरनाशकस्तथैवाग्निसंफुल्ला रक्तस्फटिकापि । अष्टतोलकमितां स्फटिकां चूर्णयित्वा, तदर्धचूर्णं मृत्करके समावाप्याङ्गुल्या गाढं निष्पीड्य मध्ये मल्लसमावेशयोग्यं गर्तं कृत्वा, तत्र मल्लचूर्णं धृत्वोपरि शेषं स्फटिकाचूर्णं समावाप्य तथैव दृढतरं निष्पीड्य, मुखं संमुद्रय पुटेत् । मल्लचूर्णं तोलकमितमादेयम् । सेयं मल्लगर्भा स्फटिका कासश्वासाभ्यां सहितमपि ज्वरं नाशयति ।

तिक्तातिक्तजयन्तीतुलसीपीयूषपर्पटस्वरसैः ।
भावितमेकादशधा गगनं जीर्णज्वरापहं सिद्धम् ॥ ९६ ॥

तिक्तेति—तिक्ता=कटुकी, तिक्तः=कैरातः, जयन्ती=अग्निमन्थः; तुलसी=प्रसिद्धा, पीयूषम्=गुडूची, पर्पटः=" पित्तपापडा " इति ख्यातः । एषां स्वरसैरेकादशधा भावितमभ्रकभस्म जीर्णज्वरमपहन्ति । अभ्रकभस्मविधिरुक्तो वक्ष्यते च ।

त्रिकटुसर्षपटङ्कणहिङ्गुलं सकटुकापिचुमन्दकवल्कलम् ।
यवसुधाघनलोहितचन्दनं समसमं रसभस्म नियोजयेत् ॥ ९७ ॥
तदिति खल्वतले परिपेषयेद्भवति स "ज्वरसंहरणो" रसः ।
झटिति कृन्तति जीर्णतरं ज्वरं तमिति कोऽपि कदाप्युपदिष्टवान् ९८

त्रिकट्विति—पिचुमन्दकवल्कलम्=निम्बत्वक्, यवः=इन्द्रयवः,सुधा=गुडूची, घनः =मुस्तकः । समसमम्=सर्वैस्तुल्यं रसभस्म=रससिन्दूरम् । सर्वेषामौषधानां यावन्मानं तावदेव केवलस्य रससिन्दूरस्येति तत्त्वम् । कोऽपीति–हरनन्दराय रूइया संस्कृतकालेजायुर्वेदाध्यापकचरेणायुर्वेदाचार्येण श्रीश्यामलालमहोदयेन समुपदिष्टोऽयं "ज्वरसंहार"-रसः । भारतप्रसिद्धवैदुष्यवैभवानां स्वर्गतमहामहोपाध्यायश्रीद्वारकानाथसेनकविराजमहानुभावानामयं प्रयोग इत्यस्मद्गुरुसंप्रदायः ।

प्रस्थैकं रामसेनस्य सार्द्धप्रस्थाऽमृता मता ।
निम्बवल्कानि तावन्ति पचेत्तोयाढकद्वये ॥ ९९ ॥
जाते क्वाथे समुत्तार्य पावयित्वा पुनः पचेत् ।
पङ्कीभूते ततस्तत्र क्षुण्णान्येतानि निक्षिपेत् ॥ १०० ॥
करञ्जमज्जा मरिचं चपला वंशरोचना ।
सुधासत्त्वं पृथक्कोलं कृत्वा तस्य वटीः श्रयेत् ॥ १०१ ॥
सर्वाञ्ज्वरानिमा वट्यः पुराणान्धातुगानपि ।
निहन्युरचिरादेव बहुशस्ताः परीक्षिताः ॥ १०२ ॥

प्रस्थैकमिति—रामसेनः= " चिरायता " इति ख्यातः, अमृता=गुडूची । रामसेनादीनां त्रयाणां चतुःप्रस्थमितानामाढकद्वयमिते=८ प्रस्थमिते जले क्वाथं विधाय, पटेन पावयित्वा पुनर्विपाचयेत् । गाढतामापन्नं समुत्तार्य करञ्जमज्जादीनि चूर्णितानि पटपूतानि च पृथक् कोलमितानि=षण्माषकप्रमाणानि निक्षिप्य वटीर्बद्ध्वा सेवेत । बहुशः परीक्षिता इमा वट्यः सत्यं लाभप्रदाः ।

किराततिक्तकक्काथप्रस्थे मत्नकणापलम् ।
मन्दाग्निना पचेत्तावद्यावत्क्काथक्षयो भवेत् ॥ १०३ ॥
संशोष्य चपलास्तासां पञ्च लिह्यात्समाक्षिकाः ।
जेमन्ति ता ज्वरं जीर्णं, शीर्णं लोकः फलं यथा ॥ १०४ ॥

किरातेति—प्रत्नकणापलम्=पुराणपिप्पलीनां पलम् । यथा—लोकःशीर्णम्=पक्वं फलं जेमति तथैवैताः पिप्पल्यो जीर्णज्वरं जेमन्ति=भक्षयन्ति, नाशयन्तीति यावत् । उपमा, अनुप्रासश्च ।

माषः शुण्ठ्या, यवान्यास्तु शाणः,स्यादमृताक्षिकी ।
कणास्तिस्र इति द्रव्यं रात्रौ वारिणि निक्षिपेत् ॥ १०५ ॥
प्रातः पिष्ट्वा, विनिस्राव्य, कदुष्णीकृत्य तज्जलम् ।
पिवेत्ससैन्धवं मासं जीर्णज्वररुजातुरः ॥ १०६ ॥

माष इति—शाणः=चत्वारो माषकाः । आक्षिकी=तोलकमिता । तिस्रः=त्रिसंख्याकाः । विनिस्राव्य=पटेन पावयित्वा । स्पष्टमन्यत् ।

पक्त्वा गुडूचिकाप्रस्थं सलिले त्रिचतुर्गुणे ।
कृत्वा रसक्रियां तत्र कणैलावंशरोचनाः ॥ १०७ ॥
प्रक्षिप्य वटिकास्तस्य कार्या वदरसन्निभाः ।
निपेव्याः सलिलेनैव जनैर्जीर्णज्वरापहाः ॥ १०८ ॥

पक्त्वेति—रसक्रिया=पुनःपाकेन गाढतापादनम् । कणा,एला, वंशरोचना चेत्येताः स्वयं कल्पमानमानाः प्रक्षेप्याः ।

विश्वौषधकणाधात्रीद्विनिशाकुष्ठचित्रकैः ।
सपथ्यासैन्धवैरेभिः पृथगेकैकभागिकैः ॥ १०९ ॥
छिन्नोद्भवानिम्बपर्णभागद्वयसमन्वितैः ।
जीमूतनवभागाढ्यैश्छगलीमूत्रभावितैः ॥ ११० ॥
वटिकाः पञ्चपञ्चाशद्रोगान्दुष्टज्वरादिकान् ।
वातपित्तकफोत्पन्नान्घ्नन्ति नानानुपानतः ॥ १११ ॥
मुहुर्मुहुर्ज्वरे देया जलैस्ता वदरोपमाः ।
तिमिरं तिरयन्त्येतास्तोयेनाञ्जनतस्त्वरम् ॥ ११२ ॥
आस्रावं कदलीनीरैः, शुक्रं छागलदुग्धतः ।
मथ्नन्ति महिलाक्षीरैर्लेपात्पक्ष्मगतान्गदान् ॥ ११३ ॥

विश्वौषधेति—विश्वौषधम् = शुण्ठी, कणा=पिप्पली, धात्री=आमलकी, द्विनिशेति= हरिद्राद्वयम्, छिन्नोद्भवा=गुडूची, जीमूतः=मुस्तकः। यथोक्तमौषधजातमजामूत्रेण पिष्ट्वा वटिका विधेयाः। अनुपानभेदात्सर्वज्वरघ्न्यः। जलेन घृष्ट्वाऽञ्जनतस्तिमिरम्=रात्र्यन्धतां "रतौंधिया" इति ख्यातां तिरयन्ति=नाशयन्ति। आस्रावः=नेत्राज्जलनिर्गमस्तं कदली-पत्रस्वरसेन घृष्ट्वाञ्जनतः। शुक्रम्=नेत्रगतं पुष्पं "फूला" इति ख्यातमजादुग्धेन घृष्ट्वाञ्ज-नतः। पक्ष्मगतान्=नेत्रलोमाधारपालीगतान् गदान् महिलाक्षीरैः=स्त्रीदुग्धेन घृष्ट्वाञ्ज-नान्नाशयेत्।

विदिता रसशास्त्रेषु वटी याऽऽनन्दभैरवी।
सर्वज्वरकृता भीतिर्न स्यादस्याः प्रभावतः ॥ ११४ ॥

विदितेति—रसशास्त्रेषु="रसेन्द्रसारसंग्रहा"-दिग्रन्थेषु। यस्या विधानमिदम्— विशुद्धशृङ्गिकविषम्, शुण्ठी, मरिचम्, पिप्पली, गन्धकः, टङ्कणम्, ताम्रभस्म, धत्तूरबी-जानि, शुद्धं हिङ्गुलम्—एतानि समानानि भृङ्गारसेन प्रपिष्य वटी विधेया।

एलामृतासत्त्वकणाशुभायुता सपुष्पसारा गिलिता द्विरक्तिका।
जीर्णज्वरे वैद्यकशास्त्रसम्मता बहुप्रशस्ताऽस्ति"वसन्तमालिनी" ११५

एलेति—शुभा=वंशरोचना, पुष्पसारः=मधु। वैद्यकप्रसिद्धायाः योगतरङ्गिण्यादिषु प्रोक्तायाः "वसन्तमालिन्याः" केवलमनुपानप्रदर्शनमिदम्। तन्निर्माणविधिरयमवधार्यः— स्वर्णभस्म तद्दलानि वा १ भा०, मुक्ता २ भा०, विशुद्धं हिङ्गुलम् ३ भा०, मरि-चम् ४ भा०, खर्परभस्म तदभावे यसदभस्म ८ भा०—सर्वमिदं सूक्ष्मं विचूर्ण्य, तत्र षोडशांशं दुग्धोत्थनवनीतं दत्त्वा मर्दयेत्। तदनु निम्बुरसेन स्नेहक्षयावधि मर्दनं विधाय वटीर्बध्नीयात्। अत्र, नवनीतविषये षोडशांशत्वोक्तावपि तावदेव तद्देयं यावता द्रव्यस्य स्निग्धता स्यात्। अन्यथा स्नेहक्षयःकृच्छ्रेण भवेदित्यस्मन्मतम्।

कुमारिकाम्भःप्लुतमच्छतालकं पक्वं त्रिबिल्वं, सतदर्धहिङ्गुलम्।
समुष्टिफेनं, सयुगाम्रवेल्लजं, दत्त्वा विमर्द्य नवनीतशुक्तिकाम्॥ ११६॥
निम्बम्बुना, स्नेहलयो हि यावता, विशोष्य छायासु निषेविताःपुनः।
तद्वद्गुणा भाति तथानुपानतःसैषापरा कापि"वसन्तमालिनी" ११७॥

कुमारिकेति—"गोदन्ती" इति प्रसिद्धं शुभ्रतालं कन्यारसेन पिष्ट्वा पुटे पक्त्वा त्रिपलमितं तद्भस्म ग्राह्यम्। तत्र—सार्द्धपलं शुद्धहिङ्गुलम्, पलं समुद्रफेनम्, द्विपलं च मरिचं

दत्वा, तोलकद्वयमितं क्षीरोत्थनवनीतं निक्षिप्य, निम्बुनीरेण स्नेहक्षयावधि विमर्द्य "वसन्तमालिनी"- विधिना रसोऽयं सम्पादनीयः । जीर्णज्वरे पूर्वोक्तानुपानेन सेवनीयः ।

**सरत्नभूतिः सिततालभूतिः सहिङ्गुलापादितलोहभूतिः ।**
**कन्याम्बुपिष्टा सविषाऽथ भुक्ता रक्तं बलं वर्धयतीति दृष्टम् ॥११८॥**

सरत्नेति—रत्नमत्र मौक्तिकं प्रवालं वा । तद्भस्मना हिङ्गुलयोगनिष्पन्नलोहभस्मना च सह श्वेततालभस्म कन्यारसेन पिष्ट्वा अतिविषया सह भोक्तव्यम् । ज्वरमुक्तौ सत्यामयं योगो रुधिरबलवर्धकोऽस्तीति । हिङ्गुलापादितलोहभूतिरग्रे वक्ष्यते ।

**शुक्लं मल्लं पयसि दिवसान्विंशतिं भावयेत**
**यामानष्टावलसदहनैरिष्टिकायन्त्रमध्ये ।**
**पक्त्वा पश्चादहिदलगतः सेवनीयो ज्वरादौ**
**मन्दाक्रान्तानिलकफरुजा किं न तत्सेवनात्स्यात् ॥११९॥**

शुक्लमिति—गव्यदुग्धे विंशति दिवसान् श्वेतमल्लं भावयेत् । ततः काञ्चित्पुराणामिष्टिकाम् ="ईट" इति ख्यातामादाय, तत्र मल्लसमावेशयोग्यं गर्तं निर्माय, गर्ते मल्लमवस्थाप्य, लघुना ताम्रपात्रेण गर्तं पिधाय संमुद्रय च, चुल्ल्यामिष्टिकां निधायाहोरात्रं मन्दवह्निना पक्त्वा तन्दुलमितो नागवल्लीदलेन संसेव्यः । पाकसमये यन्त्रोपरि पानीयस्य तत्प्लुतकर्पटस्य वा धारणं न विस्मर्तव्यम् । तदस्य सेवनादनिलकफरुजा मन्दाक्रान्ता=मन्दमाक्रान्तमाक्रमणं यस्याः सा किं न स्यात्, स्यादेवेति । मन्दाक्रान्तावृत्तम् । "उदाहरणे लक्ष्याभिधायिशब्दयोगः प्रौढिः" इति लक्षणलक्षितः प्रौढिः काव्यगुणः । यद्वा मुद्रालङ्कारः ।

**गुडूचीनिम्बत्वक्सुरसुमकणामूलचपलाऽ-**
**भयाशुण्ठीकट्वीजलदनलदैश्चन्दनयुतैः ।**
**मिलत्कैरातार्धैः सलिललुलितैर्यन्त्रनिभृतैः**
**सदर्कं निष्कास्य ज्वररुजि पलं पायय सखे ॥ १२० ॥**

गुडूचीति—जलदः=मुस्तकः, नलदम्=उशीरम् "खस" इत्याख्यम् । अत्र गुडूच्यादिसर्वसंभारार्धं किरातं निक्षिप्य, जलेऽहोरात्रमाप्लाव्य यन्त्रेणार्कं निष्कास्य पलमात्रया ज्वरे पाययेत् । शिखरिणीवृत्तम् ।

**करञ्जनिम्बभूनिम्बैरमृताम्बुदपर्पटैः ।**
**अर्को निष्कासितो युक्त्या ज्वरं तिरयति त्वरम् ॥ १२१ ॥**

करञ्जेति—भूनिम्बः=" चिरायता " इति ख्यातः। सुगममन्यत्।

त्रिफलायाश्च बलायाः स्वादुफलायास्तथैव चपलायाः।
स्नेहस्तथामृताया दृष्टो जीर्णज्वरारातिः ॥ १२२ ॥

त्रिफलाया इति—स्वादुफला=द्राक्षा। त्रिफला–बला–स्वादुफला–चपला–मृतानामन्यतमेन सिद्धं घृतं जीर्णज्वरनाशकं भवतीति पञ्च योगाः।

वनप्सामधुकं द्राक्षा गोजिह्वा कण्टकारिका।
श्लेष्मातको वासकश्च शृङ्गी भार्गी गुडूचिका ॥ १२३ ॥
उन्नाभश्चेति सर्वेषां कषायः शर्करायुतः।
प्रतिश्यायज्वरश्वासकासश्लेष्मगलार्त्तिजित् ॥ १२४ ॥

वनप्सेति—गोजिह्वा="गावजवां" इति लोके। श्लेष्मातकः=" ल्हिसोडा " इति ख्यातः। शृङ्गी=" काकडासींगी " इत्याख्या। भार्गी=" भाडंगी " इति प्रसिद्धा। उन्नाभः=अनेनैव नाम्ना प्रसिद्धं निष्कण्टकबदरीफलम्।

गोजिह्वोन्नाभमृद्वीकावनप्सामधुकामृताः।
यष्टिसत्त्वकलाजूफाकासिन्यञ्जीरसंज्ञकाः ॥ १२५ ॥
मिपिः शाहतराख्यश्च खतमी काकमाचिका।
प्रत्येकं शाणिकैरेभिः शर्करासहितैर्हिमः ॥ १२६ ॥
प्रतिश्यायशिरःपीडाज्वरकासविनाशकः।
एषामेव कषायोऽपि पूज्यते यावने मते ॥ १२७ ॥

गोजिह्वेति—कला=" खूबकला, " जूफा, कासनी, अञ्जीरम्, शाहतरा, खतमी–एतानि स्वनामभिरेव लोके प्रसिद्धानि। काकमाची=" मकोय " इति प्रसिद्धा। शाणिकैः=चतुर्माषकमितैः।

करञ्जतुलसीनिम्बधत्तूरादित्यपल्लवैः।
सवेल्लजैः कृता वट्यो हसन्ति शिशिरज्वरम् ॥ १२८ ॥

करञ्जेति—सवेल्लजैः=समरिचैः। हसनमत्र विजये लाक्षणिकम्। तेन शिशिरज्वरं विजयन्ते इत्यर्थः।

सुरसानिम्बभङ्गार्कपल्लवानां वटीं भज।
विषमज्वरजां बाधां यदि बाधितुमिच्छसि ॥ १२९ ॥

सुरसेति—सुरसा=तुलसी । सुरसादीनां नूतनपल्लवैर्वटी विधेया । एतदौषधं सेवमानस्य ज्वरागमनकालावधि लङ्घनमुचितमित्युपदेशः ।

पक्वधत्तूरदलजा वटिकाः समवेल्लजाः ।
हिमज्वरं हरन्त्याशु द्रविणानीव दस्यवः ॥ १३० ॥

पक्वेति—द्रवीणानीवेत्युपमा । वेल्लजम्= मरिचम् ।

हारशृङ्गारपत्राणां रसःपीतः समाक्षिकः ।
अधरीकुरुते शीतज्वरं बहुरुजाङ्कुरम् ॥ १३१ ॥

हारेति—हारशृङ्गारः="हारसिंगार" इति लोके प्रसिध्यति ।

यवानिकाहिफेनयोर्द्विमाषिकैकगुञ्जयोः ।
सुपिष्टयोर्निषेवणं हिमज्वरघ्नमुच्यते ॥ १३२ ॥

यवानिकेति—यवानिका द्विमाषिका, अहिफेनमेकगुञ्जमिति क्रमः । प्रमाणिकापरपर्यायं नगस्वरूपिणीच्छन्दः ।

कणाच्छमल्लहिङ्गुलैः कठिल्लकाम्बुमर्दितैः ।
"महाज्वराङ्कुशो" रसो निवर्हते हिमज्वरम् ॥ १३३ ॥

कणेति—अच्छमल्लः=श्वेतमल्लः । कठिल्लकः=" करेला " इत्याख्यः । हिङ्गुलमत्र पञ्चविंशतिवृन्ताकसिद्धमादेयं तस्यैव बहुगुणत्वात् ।

प्रफुल्ललोहितस्फटीकरञ्जमल्लवेल्लजैः ।
पटोलकाम्बुना कृता सुसर्षपोपमा वटी ॥ १३४ ॥
पयोभुजाऽशिता मता "हिमज्वरार्त्तिसूदनी" ।
यथाहिफेनपिप्पलीकुपीलुकल्पिता गुटी ॥ १३५ ॥

प्रफुल्लेति—अग्नौ भ्रष्टा रक्तस्फटिका ग्राह्या । पयोभुजा=दुग्धसेविना । अशिता=भुक्ता । यथाहिफेनेत्युपमया द्वितीयो योगः प्रदर्शितः ।

रसेन्द्रो बलिः पिप्पली तालविश्वे विषं वेल्लजं वानरी ब्रह्मदर्भा ।
सह क्षौद्रकैर्दन्तिबीजं च पिष्ट्वा वटी निम्बुनीरैर्भवेत्साऽमृताख्या १३६

रसेन्द्र इति—पारद-गन्धक-पिप्पली-शुण्ठी-शृङ्गिकविष-मरिच-कपिकच्छुबीजा-जमोदा-मधु-जयपालानां प्रत्येकमेकैकस्तोलको ग्राह्यः । सर्वमिदमध्यर्धप्रस्थनिम्बुरसेन पिष्ट्वा चणकवद्वटी विधेया । "अमृतगुटी" सेयं तुलसीपत्रेण शीतज्वरं नाशयन्त्यपि

तैस्तैरनुपानैः प्रायोऽनेकरोगेषूपयुज्यते। कानिचिदनुपानानीहापि निर्दिशामः—पुंस्त्वपुष्ट्यै नागवल्लीदलेन, कासनाशाय सितावुद्बुदेन ( बतासा );कामवृद्धये श्लेष्मातकमज्ज्ञा, वीर्यवृद्धये आर्द्रकस्वरसेन, जलोदरेऽर्धमाषकमितलौहभस्मना गोमूत्रेण च, शूले मरिचेन, चातुर्थिकज्वरे पिप्पलमूले स्थित्वैकेन लवङ्गेन, हिक्कायां दारुसितया, प्रमेहे गव्यघृतेन, ग्रन्थिवाते प्रपुन्नाटक-( पंवाड़ )-बीजैः। स्पर्शविदितायां " कालाजीरी," " मालकांगनी" इत्याख्यातद्रव्याभ्यां सेवेत। यथोक्तफलदेयं वस्तुतोऽमृतगुटीति कुञ्चिका। पद्येऽत्र-भुजङ्गप्रयातं छन्दः। अनुप्रासस्तु प्रायः सर्वत्र ।

विषाकल्लकव्योषपथ्यासुमानां वटी कल्पिता हंसपादान्वितानाम् ।
भवेच्छ्लेष्मवातोपघाताय शीतज्वरश्वासकासादिनाशाय वा सा १३७

विषेति—विषम्=शुद्धं शृङ्गिकम्, व्योषम्=शुण्ठीमरिचपिप्पल्यः, सुमम्=लवङ्गम्, हंसपादः=हिङ्गुलम्। आर्द्रकस्वरसेन सर्वं सम्भारं विमर्द्य मरिचाभाः वटीः कुर्यात्। परीक्षिताः।

सुधासत्त्वादक्षमेकं पिचुरेकस्तु मल्लतः ।
द्वौ कर्षावहिफेनस्य दश ते मरिचस्य च ॥ १३८ ॥
चत्वारः स्फटिकायाः स्युस्त्रयोदश करञ्जतः ।
संपिष्यैतद्वटीर्बद्ध्वा भक्षयेद्विषमज्वरी ॥ १३९ ॥

सुधेति—सुधासत्त्वात् = गुडूचीसत्त्वात्। अक्षम्=कर्षः। पिचुः=कर्षः। ते=कर्षाः। विषमज्वरी=शीतज्वरादियुक्तो मानवः।

सा क्षारोदरपिहिता गजपुटपक्वा मनःशिला मङ्क्षु ।
नागदलादौ गिलिता जीर्णं चातुर्थकं जयति ॥ १४० ॥

सेति—सा=प्रसिद्धा शुद्धा च। क्षारोदरपिहितेति—कस्मिंश्चिच्छरावे कलिकाचूर्णं तदुपरि सार्धकर्षमितां स्वर्जिकां चास्तीर्य तद्गर्भे कर्षमितां मनःशिलां निधाय, तदुपरि पुनस्तावदेव स्वर्जिकाचूर्णं कलिकाचूर्णं चास्तीर्य, शरावसंपुटं कृत्वा, सन्धिरोधं विधाय गजपुटे विपचेत्। तद्भस्म नागदलादौ भक्षणेन चातुर्थकम्= मध्ये दिनद्वयं विश्रम्य चतुर्थदिने पुनः प्रवर्तमानं विषमज्वरविशेषं नाशयति। अयं चातुर्थकः—"क्वार्टन् फीवर" (Quartan fever) इति पाश्चात्त्यैराख्यातोऽधुना प्रायो विरल एव।

मनोह्वानिम्बफलयोः कठिल्लाम्बुनि पिष्टयोः ।
वट्यो वेलाज्वरं दग्धुमीशा ईशः स्मरं यथा ॥ १४१ ॥

मनोह्वेति—मनोह्वा= मनःशिला। वेलाज्वरम् = सततादिकम्। ईशाः= समर्थाः।

दरदं कृष्णमरिचं सविषं विषतिन्दुकम्।
प्रत्येकं पाणितलकं कोलैकं जयपालतः॥ १४२॥
सम्पिष्याहिदलाम्भोभिः कुर्यान्मुद्गनिभा वटीः।
दद्यात्त्रुटिरजःक्षौद्रैर्ज्वरवारणहेतवे॥ १४३॥

दरदमिति—दरदम्=हिङ्गुलम्, विषम्=शृङ्गिकम्, विषतिन्दुकम्="कुचिला" इति ख्यातम्। पाणितलकम् = कर्षप्रमाणम्। कोलम्= टंकद्वयप्रमाणम्। अहिदलाम्भोभिः= नागवल्लीदलरसैः।

द्विगुणकुपीलुविमिश्रै रसबलिपथ्योषणाकणामूलैः।
क्रिमिरिपुजरणक्षारैस्तुल्यैस्तुलसीसुमोषणोदारैः॥ १४४॥
वटिका निम्बुकवारा ज्वरसंहाराय माषकोन्मानाः।
सेव्याः श्लेष्मसमीरानलजविकारापहारकरणाय॥ १४५॥

द्विगुणेति— पारद- गन्धक- हरीतकी- पिप्पली-पिप्पलीमूल- विडङ्ग-जीरक- यवक्षार- तुलसीपत्र-लवङ्ग- मरिचानि तुल्यमानानि ग्राह्याणि। सर्वस्माद्द्विगुणः शुद्धः कुपीलुरिति सर्वं निम्बुनीरेण विमर्द्य माषमिता वटीर्बध्नीयात्। ज्वरादिषु प्रयोजयेत्। अनलजविकारः=अग्निमान्द्यादिः। श्लोकयोर्गीतिश्छन्दः। अनुप्रासः।

अथ दशमूलारिष्टं जठरश्वयथुज्वरादिजिद्दृष्टम्।
तद्गुणममृतारिष्टं यकृदभिवृद्धौ भिषग्भिरादिष्टम्॥ १४६॥

अथेति—"दशमूलारिष्टम्"=अनेनैव नाम्ना प्रसिद्धम्। "अमृतारिष्ट"-मपि स्वेन नाम्ना ख्यातम्। तयोर्विधानमिदम्-पूर्वमुक्तस्य दशमूलाख्यगणस्य द्रव्याणां प्रत्येकस्य-पृथक्पञ्चपलानि, चित्रकम् २५प०, पुष्करमूलम् २५प०, लोध्रम् २०प०, गुडूची २० प०, आमलकम् १६ प०, यवासकः १२ प०, खदिरसारः ८ प०, विजयसारः ८ प०, हरीतकी ८ प०, कुष्ठम् २ प०, मञ्जिष्ठा २ प०, देवदारु २ प०, विडङ्गम् २ प०, मधुकम् २ प०, भार्ङ्गी २ प०, कपित्थः २ प०, बिभीतः २ प०, पुनर्नवा २ प०, चव्यम् २ प०, जटामांसी २ प०, प्रियङ्गुः २ प०, सारिवा २ प०, कृष्णजीरः २ प०, त्रिवृता २ प०, रेणुका २ प०, रास्ना २ प०, पिप्पली २ प०, पूगफलम् २ प०, शठी २ प०, हरिद्रा २ प०, शतपुष्पा २ प०, पद्मकम् २ प०, नागकेशरः २ प०, मुस्तम् २ प०, इन्द्रयवः २ प०, कर्कटशृङ्गी २ प०, जीवकः २ प०, ऋषभकः २ प०, मेदा २ प०, महामेदा २ प०, काकोली २ प०, क्षीरकाकोली २ प०, ऋद्धिः २ प०, वृद्धिः २ प०,

-सर्वमेतदष्टगुणे जले विपाच्य, चतुर्थांशं क्वाथमवशेष्य कस्मिंश्चिद्भाण्डे" अमृतवान-" संज्ञके भरेत्। तत्रैव-चतुःषष्टिपलमितां द्राक्षां चतुर्गुणे जले विपाच्य त्रिपादशेषं तत्क्वाथं क्षिपेत्। तत्रैव च द्वात्रिंशत्पलमितं मधु, चतुःशतपलमितं गुडम्, धातकीपुष्पाणि त्रिंशत्पलमितानि निक्षिप्य-कक्कोलम् २ प०, ह्रीवेरम् २ प०, चन्दनम् २ प०, जातीफलम् २ प०, लवङ्गम् २ प०, दारुसिता २ प०, एला २ प०, पत्रम् २ प०, नागकेशरः २ प०, पिप्पली २ प०- सर्वमेतद्विचूर्ण्य निक्षिपेत्। शाणमाना कस्तूरिकापि क्षेप्या। ततो भाण्डस्य मुखं मुद्रयित्वा, भूमौ निखनेत्। पञ्चदशभिर्दिनैर्निष्कास्य वस्त्रेण गालयित्वा, सति मालिन्ये कतकफलं निक्षिप्य तेन निर्मलीकृत्य यद्वा यन्त्रे भृत्वा तदीयमर्कमाकृष्य यथायथं सेवेत। तदिदं "दशमूलारिष्टम्"। "अमृतारिष्ट"-विधिरयम्-अमृता (गुडूची) १०० प०, शतमूली १०० प०-द्वयमेतच्चतुर्द्रोणे जले पक्त्वा पादावशेषितं कृत्वा शीते पटपूते च तस्मिन् गुडं ३०० पलमितम्, जीरकः १६प०, पर्पटः २प०, सप्तपर्णम् ( सतौना )१ प०, शुण्ठी १ प०, मरिचम् १ प०, पिप्पली १ प०, मुस्तम् १ प०, नागकेशरः १ प०, कटुका १ प०, अतिविषा १ प०, इन्द्रयवः १ प०—सर्वमेतन्निक्षिप्य भाण्डस्य मुखं मुद्रयित्वा भाण्डं भूमौ निखनेत्। मासादूर्ध्वं निष्कास्य वस्त्रेण गालयित्वा यथायथं प्रयुञ्ज्यात्।

ज्वरादीत्यादिना कासश्वासादीनां परिग्रहः। अमृतारिष्टं यत्र ज्वरे यकृद्वृद्धिस्तत्र विशेषात्प्रयोज्यम्। यकृन्नाम बृहत्तमः प्रधानतमश्च ग्रन्थिरीपदूर्म आशयो वा शरीरे इति प्रत्यक्षशारीरे गणनाथमहोदयाः। रोगकृतात्र तद्वृद्धिः।

**लोकेश्वररसरसनादशनादथवेषुपुङ्खकल्कस्य।**
**प्लीहज्वरयोर्वृद्धिर्नश्यति सिद्धिर्यथा कृतघ्नस्य॥ १४७॥**

लोकेति—लोकेश्वररसः=लोकनाथरसस्तस्य रसनात्=आस्वादनात्। अथवा, शरपुङ्खकल्कस्याशनात्=भक्षणात्। प्लीहा नाम निःस्रोतस्कग्रन्थिषु मुख्यो बृहत्तमश्च ग्रन्थिरुरोगुहायां वामानुपार्श्विकभागे वर्तमानः इति प्रत्यक्षशारीरम्। तस्य वृद्धिर्ज्वरादिरोगवशाज्जायते। तत्रेदं योगद्वयम्। यथा-कृतघ्नस्य सिद्धिर्नश्यतीत्युपमा।

**क्षयज्वरोदरातुरो गुदाङ्कुरोपपीडितः**
**सकासकामकामलामलावरोधबाधितः।**
**पयोऽशनो जनो मनो दधातु वाम्लपित्तकी**
**कफार्दितश्च "वर्धमानपिप्पलीरसायने" ॥ १४८॥**

क्षयेति—क्षयज्वरोदरैरातुरः, गुदाङ्कुरैः=अर्शोभिरुपपीडितः, कासेन सहिताः सकासकास्ते च ते आमकामलामलावरोधास्तैर्बाधितः। आमशब्देन लक्षणया तज्जन्या आमवातशोथग्रहणीप्रभृतयो रोगा गृह्यन्ते । तथा-अम्लपित्तकी=अम्लपित्तरोगी कफादितश्च जनः पयोऽशनः=अन्नं परित्यज्य केवलं दुग्धभुक् सन् वर्धमानपिप्पलीरसायने मनो दधातु । तत्क्रमश्चायम्—प्रथमदिने १० पिप्पलीर्दुग्धेन सेवेत, द्वितीयदिने २०, तृतीये ३०, एवं दशवृद्धया दशमे दिने १०० यावद्गत्वा तथैव क्रमशो दशन्हासेनापनयेत्। अर्थात्- प्रथमदिने ९०, द्वितीये दिने ८०, तृतीये ७० इत्येवम् । अयमुत्तमः कल्पः। षड्वृद्धया दीयमानो मध्यमः। त्रिवृद्धया दीयमानः कनिष्ठः। अयत्वे पुनः कनिष्ठ एवं प्रशस्यते । शार्ङ्गधरभावप्रकाशादिषु त्वन्यथापि कल्पो दृश्यते । अत्र- पञ्चचामरं छन्दः । भागेकृते तु-नगस्वरूपिण्याख्यमपि ।

यदा युनक्त्ययोमलं हि लोकनाथतस्तदा
सकालखण्डमुद्धरेत्त्वरं दुरन्त्रजं ज्वरम् ।
यकृद्धृदन्त्रफुप्फुसामयेषु लोहपर्पटी
करोति सिंहचेष्टितं यथासुरेषु धूर्जटिः ॥ १४९ ॥

यदेति—लोकनाथरसेन सह मण्डूरसेवनं कालखण्डम्=यकृत्तद्वृद्धिसहितं ज्वरं तथा दुरन्त्रजम्=दुष्टान्त्रजन्यमान्त्रिकज्वरमपि नाशयति । यकृदामये=ज्वरे यकृद्वृद्धौ, हृदामये= हृद्रोगे हृदयस्य रक्तवहनासामर्थ्ये "ट्युबर्क्युलोसिस" ( Tuberculosis ) इत्यादिनवीनव्याधौ च, अन्त्रामये = ग्रहण्यादौ, फुप्फुसामये=यक्ष्मणि च "लोहपर्पटी" सिंहचेष्टितं करोति । "लोहपर्पटी"—पारदः २ भा०, गन्धकः २ भा०, लोहभस्म १ भा० —एतेषां कज्जलीं कृत्वा, अङ्गारेषु लोहदर्व्यां गालयित्वा गोमयोपरिविन्यस्तकदलीपत्रपातनेन विधेया ।

प्रभूततापविस्तरे हिमोत्करेऽपि वा ज्वरे
मलक्रुदुद्भवैर्नवैरुपद्रवैर्भयङ्करे ।
सुरत्नगर्भपोट्टलीरसोऽनुपानतो हितः
कृतान्तकोपमप्यधो विधातुमीश्वरो मतः ॥ १५० ॥

प्रभूतेति—यस्मिञ्ज्वरेऽत्यधिकस्तापो भवेत्, शैत्यं वाधिकं भवेत्, वातादिदोषप्रकोपजन्या नवनवाश्च विकाराः समुद्भवेयुस्तत्र "रत्नगर्भपोट्टलीरसः" प्रयोक्तव्यः । स हि रुग्णे क्रुद्धस्य यमस्यापि कोपमधः कुर्यात् । तद्विधिः—रससिन्दूरः, हीरकभस्म, स्वर्णभस्म, रजतभस्म, नागभस्म, लोहभस्म, ताम्रभस्म, मुक्ताभस्म, प्रवालभस्म,

स्वर्णमाक्षिकभस्म, शङ्खभस्म, तुत्थभस्म—एतानि प्रत्येकं तोलकमितानि, मरिचम् ७ तोलकमितम्–इति सर्वमेतद्विचूर्ण्य, चित्रकक्वाथेन सप्ताहं विमर्द्य तेन पीतवराटिकाः पूरणीयाः । तासां मुखान्यर्कदुग्धपिष्टेन टङ्कणेन मुद्रयित्वा, मृत्पात्रे ताः निधाय, मृत्पात्रं मृत्कर्पटावगुण्ठितं कृत्वा पुटेत् । ततः–स्वाङ्गशीतं समुद्धृत्य निर्गुण्डीस्वरसेना-र्द्रकरसेन च सप्तधा सप्तधा भावयित्वा, चित्रकक्वाथेनैकविंशतिवारं भावयेत्, गुञ्जाप्रमाणा वटीः कुर्याच्च । सोऽयं "रत्नगर्भपोट्टली"–रसः । अथात्र प्रसङ्गागतानां भस्मनां विधिः—वज्रभस्म—हीरकं प्रताप्य प्रताप्यैकविंशतिवारमश्वमूत्रे निर्वापयेत् । तदनु–त्रिवर्षारूढकार्पासमूलत्वचं त्रिवर्षारूढनागवल्लीदलरसेन पिष्ट्वा तद्गोलके शुद्धं हीरकं निधाय गजपुटे पचेत् । एवं सप्तभिः पुटैर्हीरकभस्म सम्पद्यते । रजतभस्म—उत्तमरजतस्य तनूनि पत्राणि वह्नौ प्रताप्य त्रिधा त्रिधा तैले, तक्रे, गोमूत्रे, कुलत्थक्वाथे, काञ्जिके च निर्वाप्य शोधयेत् । ततो निम्बूकाम्बुनि त्रिःसप्तकृत्वो निर्वापयेत् । ततस्तद्विचूर्ण्य समानेन पीत-तालेन सह निम्बूकाम्बुना पिष्ट्वा, चक्रिकाः कृत्वा गजपुटे पचेत् । एवं दशपुटदानेन रजतभस्म भविष्यति । नागभस्म—नागम्="सीसा" इति ख्यातं लोहदर्वीस्थमग्नौ विद्राव्य त्रिधा त्रिधा तैलादिषु निर्वापयेत् । एवं विशुद्धं नागं खर्परे गालयित्वा तत्र चिञ्चात्वक्चूर्णम्–पिप्पलत्वक्चूर्णं च प्रक्षिप्य प्रक्षिप्य महानिम्बकाष्ठदण्डेन घर्षयेत् । भस्मीभूतं च तद्गृहीत्वा तत्र चतुर्थांशां मनःशिलां दत्त्वा वासारसेन पुटेत् । एवं षष्टिपु-टदानेन विशुद्धं नागभस्म सम्पत्स्यते । लोहभस्म ताम्रभस्म च वक्ष्यते । स्वर्णमाक्षिक-भस्मोक्तम् । शंखभस्म—शङ्खखण्डान्यामं काञ्जिके प्रस्वेद्य कुमारीरसेन गजपुटे पचेत् । एवं त्रिचतुःपुटदानेन भस्म भवेत् । इत्थमेव कपर्दिकाया भस्मापि भवति । मुक्ताप्रवा-लयोर्भस्म कुमारीरसतो गजपुटदानेन भवति ।

> **प्रवालसौमसत्त्वयोः प्रसूननीरपिष्टयोः**
> **कृता वटी पटीयसी ज्वरापहारकर्मणि ।**
> **प्रवाल एव केवलः सितोपलादिसङ्गतः**
> **क्षयज्वरोपतापमेधयज्ञकर्मकर्मठः ॥ १५१ ॥**

प्रवालेति—प्रवालः=विद्रुमः, सौमसत्त्वम्=गुडूचीसत्त्वम् । एतयोस्तरुण्यर्कसंपिष्ट-योर्वटी ज्वरापहारकर्मणि पटीयसी । सितोपलादिचूर्णयुक्तः केवलः प्रवाल एव वा क्षय-ज्वरोपतापयोर्मेधः=हिंसनमेव यज्ञकर्म तत्र कर्मठः=कार्यकरः, आचार्यो वेति । सितोपला ( मिश्री ) १६ तो०, वंशरोचना ८ तो०, पिप्पली ४ तो०, एलाबीजानि २ तो०, दारुसिता १ तो०—सर्वमेतद्विचूर्णयेदित्येतत "सितोपलादि चूर्णम्"।

सहैरण्डत्वचा पिष्टं सविषं विषखर्परम् ।
कर्णमूलादिगे शोथे प्रदिह्यादिह बुद्धिमान् ॥ १५२ ॥

सहेति—एरण्डत्वक्, शुद्धशृङ्गिकम्, विषखर्परः=पुनर्नवाभेदः "विषखपरा" इति लोके प्रसिद्धः। एतानि पिष्ट्वा कर्णमूलादिगते शोथे प्रदिह्यात्=लिम्पेत्। कर्णमूलादिगतः शोथस्तु—"सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥" इत्युक्तः, सिद्धान्तनिदानोक्ते कर्णमूलिकज्वरे जायमानो वा केवलो वापि वेदितव्यः।

अरण्यजीरकारिष्टकाकमाचीपुनर्नवाः ।
श्वयथुं सलिलैरुष्णैर्लोपयन्ति प्रलेपतः ॥ १५३ ॥

अरण्येति—अरण्यजीरकः="कालाजीरी" इति लोके, अरिष्टः=निम्बस्तत्पत्राणि, काकमाची="मकोय" इति प्रसिद्धा, पुनर्नवा="गदापूर्ना" "साटा" इत्यादिनामभिः प्रसिद्धा वर्षाभूः। एतान्यप्युष्णजलेन पिष्ट्वा प्रलिप्तानि कर्णमूलादिगतं शोथं नाशयन्ति। शोथेऽत्रावस्थादिकं वीक्ष्य जलौकाभिः रक्तावसेचनमपि कार्यमिति।

चन्दनागुरुलाक्षाद्यमुष्णशीतोभयज्वरे ।
तैलमङ्गारकं वापि मर्दनाज्ज्वरमर्दनम् ॥ १५४ ॥

चन्दनेति—चन्दनाद्यं तैलमुष्णज्वरे पित्तनिमित्तके, अगुर्वाद्यं शीते वातकफहेतुके, लाक्षाद्यन्तूभयज्वरे इति क्रमः। अङ्गारकं तैलन्तु प्रायः सर्वेषु ज्वरेषूपयुज्यते। चन्दनादितैलमुक्तम्। अगुर्वाद्यतैलस्य विधिः—अगुरु, कुष्ठम्, तगरम्, पत्रम्, नलदम्, शैलेयम्, कत्तृणम्, रेणुका, स्थौणेयकः, चोरकः, एला, त्रिफला, वराङ्गम्="तज" इतिप्रसिद्धम्, गुग्गुलुः, तमालपत्रम्, सरलः, शल्लकी, देवदारुः, अग्निमन्थः, बिल्वः, अरलुकः, काश्मर्यम्, पाटला, पुनर्नवाद्वयम्, कण्टकारीद्वयम्, शालिपर्णी, पृश्निपर्णी, माषपर्णी, मुद्गपर्णी, गोक्षुरः, एरण्डद्वयत्वक्, शोभाञ्जनम्, वरुणत्वक्, अर्कत्वक्, करञ्जः, लोध्रः, गन्धशठी, पुष्करमूलम्, मञ्जिष्ठा, पीतचन्दनम्, महानिम्बत्वक्, अश्मन्तकः, मातुलुङ्गः, शिग्रुः, बिम्बी, रक्तचन्दनम्, मेषशृङ्गी, जटामांसी, अम्लिका, नारङ्गत्वक्, भल्लातः, सारिवाद्वयम्, मूर्वा, पाठा, धान्यकम्, अजमोदा, कालाजाजी, कुठेरकः, पर्णासः, अपामार्गः, मरुवकः, सुतृणम्, आर्द्रकम्, पिप्पली, सर्षपः, अश्वगन्धा, रास्ना, लम्बालुः, वचा, बला, अतिबला, गुडूची, शतपुष्पा, नाकुली, गन्धनाकुली, अतिविषा, ज्योतिष्मती, चित्रकः, अम्लचाङ्गेरी, बदरम्, कुलत्थः, माषः—यथालाभमेतेषां द्रव्याणामन्येषां चोष्णवीर्याणां क्वाथं कारयेदेतेषामेव च पादिकं कल्कम्। ततः शुद्धकटाहे पूर्वं कल्कं तदुपरि क्वाथसमानं तैलं तदुपरि च

क्वाथं निक्षिप्य, सुरा–सौवीरक–तुषोदक–मैरेय–मेदक–दधिमण्डारनाल–कट्वराणि प्रत्येकं क्वाथसमानि निक्षिपेत् । योग्यवह्निना विपाच्य च तैलं वस्त्रादिना विशोध्य सुखोष्णेन तेन ज्वरितस्य मर्दनादिकं कुर्यादिति । तैलेऽस्मिन् प्रसङ्गागतानां सुरादीनां लक्षणानीमानि— १–सुरा–"परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः"। २–सौवीरकम्–"यवैस्तु निस्तुषैः पक्वैः सौवीरं सन्धितं भवेत्" । ३–तुषोदकम्—" तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः " । ४–५–मैरेयमेदकौ— " सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना । तदधो जगलो ( मैरेयम्) ज्ञेयो मेदको जगलाद्घनः" । ६– दधिमण्डः=दध्नो जलम् । ७–आरनालम्= "आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः।" ८–कट्वरम्=सस्नेहदधिद्रवः । अथ लाक्षाद्यतैलप्रकारः— लाक्षा, हरिद्रा, मञ्जिष्ठा—एतेषां कल्कं विधाय, कटाहे निक्षिप्य, तदुपरि तच्चतुर्गुणं तैलं दत्त्वा तैलात्षड्गुणमारनालं च निक्षिप्य विपचेत् । तैलमात्रावशेषे सिद्धिः । अथाङ्गारकतैलविधिः—मूर्वा, लाक्षा, हरिद्रा, दारुहरिद्रा, मञ्जिष्ठा, इन्द्रवारुणी, बृहती, सैन्धवम्, कुष्ठम्, रास्ना, जटामांसी, शतावरी—एतेषां समानमानानां कल्कं विधाय, तत्र चतुर्गुणं तैलं दत्त्वा, तैलाच्चतुर्गुणं चारनालं निक्षिप्य पचेत् । किञ्चात्र तैलाच्चतुर्गुणं जलमपि देयं वीर्याधानार्थम् । तदुक्तम्— " क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र वीर्याधानार्थमानपेत् । " इति । इत्थमेव लाक्षाद्यतैलेऽपि बोध्यम् ।

> **भक्तो बिल्वतले शुचिः शुचितमे निर्माय मूर्तिं मृदा**
> **पूजामन्त्रजपाभिषेकनवनैर्मृत्युञ्जयं तोषयेत् ।**
> **तुष्टो दास्यति मङ्गलं हिमतरश्चन्द्रोल्लसच्छेखरो**
> **गङ्गेशो गिरिशो गिरीन्द्रतनयाभर्ताशुतोषः शिवः ॥ १५५ ॥**

भक्त इति—विविधैरोषधप्रयोगैरप्यसाध्येषु सर्वज्वरेषु दैवव्यपाश्रया चिकित्सा विधेयेति मत्त्वा परमात्मनि दृढं विश्वसन् शुचितमे बिल्वतले स्थित्वा शुचिर्भूत्वा मृत्युञ्जयस्य भगवतः शङ्करस्य मृण्मयीं मूर्तिं निर्माय भक्तियुक्तेन चेतसा तं तोषयेत् । "त्र्यम्बकं यजामहे०" इति महामन्त्रस्य जपो विधेयः । स हि भगवानाशुतोषत्वाज्झटिति प्रसद्य रोगिणः पापं प्रशमय्यावश्यं मङ्गलं दास्यतीति न मनाक् संशीतिलेशः । यतो हि—भगवान् शिवश्चन्द्रेणोल्लसन् शेखरो यस्य तादृशः, गङ्गाया ईशः, गिरौ=हिमालये शेते, गिरीन्द्रतनयायाः=पार्वतराजपुत्र्या भर्ता चास्ति, अतएव हिमतरः=सातिशयशीतलः । हिमं वस्तु सेवमानस्योपतापशान्तिः प्रत्यक्षदृष्टा । भगवांस्तु शैत्याकरस्य चन्द्रस्य मूर्ध्नि धारणात्, शीतलाया गङ्गायाः स्वामित्वात्, शीतले हिमालये शयनात्, शीतल-

हिमालयोत्पन्नत्वेन शीतलायाः श्रीगौर्या भर्तृत्वाच्चात्यन्तं हिम इति तच्छरणं प्रपन्नस्योपतापशान्तौ कियान् विलम्बः स्यात् ? । स्वयं पूजादिकं विधातुमसमर्थस्तु ब्राह्मणद्वारा पूजादिकं कारयेत् । अत्र—शिवविशेषणानां तापहरणसामर्थ्याभिप्रायगर्भत्वेन परिकरालङ्कारः । " अलङ्कारः परिकरःसाभिप्राये विशेषणे " इति तल्लक्षणात् । वृत्त्यनुप्रासलाटानुप्रासौ शब्दालङ्कारौ । शार्दूलविक्रीडितं छन्दः ।

## इति ज्वराधिकारः



## अथातिसाराधिकारः



अथ रुग्विनिश्चयक्रमेणातिसारचिकित्सितं विवक्षुर्वैद्यप्रवरोऽस्मत्सुहृत् दैववशादपथ्यसेवनादिभिः समुत्पन्नानां रोगाणां विविधसिद्धौषधैर्विनाशवद्रोगोत्पादकनिदानपरिवर्जनाद्युपदेशद्वारा सार्वजनिकस्वास्थ्यसंरक्षणमपि वैद्यानामावश्यकं राष्ट्रियञ्च कर्तव्यमिति विभावयन्यादृशेनाचारेणातिसारोत्पत्तिशङ्का न स्यात्तमाह—

हितं लघु मितं जन्तुरदन्सत्यं वचो वदन् ।
व्यायाममाचरन्गच्छेन्नातिसारापदां पदम् ॥ १ ॥

हितमिति—हितम्=भगवच्चरकाद्युपदिष्टमेकान्ततः सुखावहं लघु=अगुरु मितम्=स्वल्पञ्चादन्=भोजनं कुर्वाणः, सत्यं वचो ब्रुवाणस्तथा व्यायामं कुर्वन् जन्तुरतिसारविपत्तिं न प्राप्नुयात् ।

अथ "आमपक्वक्रमं हित्वा नातिसारे क्रिया मता" इत्याद्युक्तत्वात्प्रथममामातिसारचिकित्सां वक्ति—

आमे सशूले साटोपे सविष्टम्भेऽतिसारिणे ।
लङ्घनं पाचनञ्चोक्तं बलिने तु विरेचनम् ॥ २ ॥

आमे इति—सशूले, साटोपे=रुजापूर्वकोदरक्षोभसहिते, सविष्टम्भे=मलाप्रवृत्तिसहिते आमे=आमातिसारेऽतिसारिणे प्रथमं लङ्घनं तदनु धान्यपञ्चकादिपाचनञ्चोक्तम् । बलिने तु वक्ष्यमाणमन्यद्वा योग्यं विरेचनं प्रदेयम् ।

एकमेरण्डजं तैलं पलमर्धपलं पिबेत् ।
उष्णं पयस्तदनु वा सुखं तद्ध्यामपातनम् ॥ ३ ॥

एकमिति—केवलमेरण्डतैलं "कास्टर आयल" ( Castor oil ) इत्याख्यातं द्वित्रतोलमितं विरेच्यामं पातयति। नात्र मनाक्कष्टं भवति। यद्वा—एरण्डतैलं पीत्वा तदनूष्णं पयः=दुग्धं पानीयं वा पेयम्। नेदं त्वरितमेव पातव्यं किन्तु घण्टानन्तरं तथा कार्यमित्युपदेशः।

**नक्तमम्बुनि निक्षिप्तं प्रातः पिष्टं च नागरम्।**
**उष्णीकृतं सलवणं परमामनिवारणम् ॥ ४ ॥**

नक्तमिति—नागरम्=शुण्ठी। लवणमत्रोपरिष्टात्प्रक्षेप्यम्। आमनिवारणमिति-शुण्ठी आमं विपाच्यामातिसारमपहन्ति।

**मिषिर्मधुकमार्कण्ड्यौ सिता गन्धश्च चूर्णिताः।**
**आमातिसारजठरग्रहणीषु परं हिताः ॥ ५ ॥**

मिषिरिति—मिषिः=शतपुष्पा, मधुकम्=यष्टिमधु, मार्कण्डी=सनामुकी "सनाय" इति ख्याता। शिष्टं स्पष्टम्। गन्धकः शुद्धो ग्राह्यः।

**अथवा कथितः शुण्ठीपुटपाकोऽत्र पाचनः।**
**पीतस्तथैव संपक्वदाडिमीफलजो रसः ॥ ६ ॥**

अथवेति—अत्र=आमातिसारे। शुण्ठीपुटपाकः—शुण्ठीचूर्णं किञ्चिद्घृताभ्यक्तमेरण्डपत्रैः परिवेष्ट्य, दोरकैर्बद्ध्वा, बहिर्मृदं विलिप्य मन्दवह्निना विपचेत। ततस्तच्चूर्णमुद्धृत्य तत्र समानां सितां संमेल्य प्रातर्मात्रया सेव्यम्। यद्वा—एरण्डमूलजरसेन शुण्ठ्याः कल्कं निर्माय, एरण्डपत्रैरेव वेष्टयित्वा, दोरकबद्धं मृल्लिप्तं च विपचेत्। अङ्गारवर्णां मृदं दृष्ट्वा, वह्नेः समुद्धृत्य, मृदादिकमपनीय पलप्रमाणे तद्रसे कर्षं मधु निक्षिप्य सेवेत। सम्पक्वदाडिमीफलं पटमृल्लिप्तं विपाच्य तद्रसो मधुसंयुतः सेव्य इत्येष दाडिमीपुटपाकः। किञ्च—तत्कालाकृष्टकुटजत्वचं तण्डुलवारिणा पिष्टां, चतुष्पलमितां जम्बूपल्लवेष्टितां सूत्रेण बद्धां गोधूमपिष्टेन परिवेष्टितां मृल्लिप्तां च विपाच्य मधुयुतं तद्रसं पिबेदिति कुटजपुटपाकोऽपि सर्वानतीसाराञ्जयेत।

**शतभागशृतं वारि सृतिहारि यथोदितम्।**
**ह्रीबेरशृङ्गवेराभ्यां पक्वं चापि तथामतम् ॥ ७ ॥**

शतेति—शतभागशृतम्=शतपलेषु पाकेन पलमात्रमवशेषितम्। सृतिहारि=अतिसारवारकम्। ह्रीबेरम्="नेत्रवाला" इत्याख्यातं तत्पक्वं पयस्तथा शृङ्गवेरम्=शुण्ठी तत्पक्वमपि जलमतिसारमपहन्ति।

शतपुष्पा तुल्यसिता सार्धभ्रष्टा विचूर्णिता ।
अतिसारविपर्यस्ता प्रशस्ता ग्रहणीगदे ॥ ८ ॥

शतपुष्पेति—सार्धभ्रष्टा=पक्वापक्वभागद्वययुक्ता । विपर्यस्ता=विपरीता, नाशकरीति यावत् । किञ्च—खर्वा हरीतकी शुण्ठी चेत्युभयं घृतभ्रष्टम्, शतपुष्पार्धभ्रष्टा, सौवर्चलञ्चेति चूर्णं घण्टान्तरेण माषकमितं मुहुः सेव्यम् । इदमप्यामपातने मलबन्धने च प्रशस्यते । दुर्जलजनितेऽतिसारे तु विशेषतो महीयते ।

वस्त्रबन्धाद्धृतजलं घनं दधि हितं मतम् ।
सहायो जीरकस्तत्र मोचं वा लोध्रमोदनम् ॥ ९ ॥

वस्त्रेति—दधि वस्त्रे बद्ध्वा नागदन्तिकायामवलम्ब्य सर्वं तज्जलं प्रच्याव्यम् । ततस्तन्निर्जलं घनं दधि भर्जितजीरकं वा कदलीफलं वा लोध्रं वौदनं वा संमिश्र्य भोक्तव्यम् ।

जलदमिपिविषाम्भोधातकीबिल्वविश्वैः
शृतमतिसृतिवारि प्रौढदोषप्रहारि ।
चुलुकयति विकारं शोणभासातिसारं
जलनिधिमिव सद्यः कुम्भयोनिर्मुनीन्द्रः ॥ १० ॥

जलदेति—जलदः=मुस्तकः, मिपिः=शतपुष्पा, विषा = अतिविषा, अम्भः = वालं "नेत्रवाला" इति ख्यातम्, धातकी="धायके फूल" इति प्रसिद्धा, बिल्वः=स्वनाम्ना ख्यातः, विश्वम्=शुण्ठी—एतैः कृतं शृतम्=क्वाथोऽतिसारं वारयति बहून्दोषांश्चापहरति । अयं प्रयोगः शोणभासोपलक्षितं रक्तातिसारं विकारमगस्त्यो मुनिः समुद्रमिव सद्यश्चुलुकयति=चुलुकेन पिबति, नाशयतीति यावत् । अत्रोपमानुप्रासश्चालङ्कारौ ।"ननमयययुतेयं मालिनी भोगिलोकैः" इत्युक्तं मालिनी छन्दः ।

बिल्वाम्बुमुस्तमधुरास्थलपद्मपाकैः
पक्वं जलं धवलशर्करया समेतम् ।
आमास्रपूयकफविस्रमलातिसारं
हन्यात्प्रभाकरविभेव तमःप्रसारम् ॥ ११ ॥

बिल्वेति—अम्बु=बालम, मधुरा=शतपुष्पा, स्थलपद्मपाकः="गुलावगुलकन्द" इति प्रसिद्धः । स च बिल्वादीनां क्वाथं विधायोपरिष्टात्प्रक्षेप्यः । तन्निर्माणविधिरयम्—गुलावपुष्पेषु द्विगुणां त्रिगुणां वा सितां प्रक्षिप्य, हस्तेन सम्यग्विमर्द्य किञ्चित्तत्र घृतं दत्वा वर्षं चत्वारिंशद्दिनानि वा सूर्यातपे निदध्यात् । सिद्धौ सत्यामेलाचूर्णं सम्मेल्यो-

प्रयुञ्जीत । इत्थमेव स्वस्वोपादानद्रव्यगुणयुता नैकविधानां पुष्पाणां सुमनःकन्दा भवन्तीति । उपमानुप्रासावलङ्कारौ । वसन्ततिलकावृत्तम् ।

भङ्गाहिफेनपिशुनेश्वरबोलरालै-
र्जातीफलैश्च सह खाखसवल्कलानि ।
तज्जाम्भसैव वटिकाः परिपिष्य बद्धा
आफूकिनामपि हरन्त्यतिसारमाशु ॥ १२ ॥

भङ्गेति—पिशुनम्=कुङ्कुमम । ईश्वरबोलम्="ईसपगोल" इति प्रसिद्धम् । खाखसवल्कलानि="पोस्त, छोंतरा" इत्याख्यातानि । तज्जाम्भसा=खाखसफलवल्कलजलेन । आफूकिनाम्=अहिफेनसेविनाम् "अफीमची" इत्याख्यातानामपि, किमुतान्येषाम् । अर्थापत्तिरलङ्कारः ।

विहितं चूर्णं समसितमिदमधिखल्वं प्रपिष्य सितरालम् ।
प्रस्रवदसृगतिसारातङ्कविदाराय किमु नालम् ॥ १३ ॥

विहितमिति—श्वेतरालं तुल्यसितया युक्तं रक्तातिसारं हन्ति । मात्रा षण्मापकमिता ।

खर्जूरीफलमेकं क्षीरनिमग्नं निरस्थिकं कृत्वा ।
भृत्वा तत्र च माषं बहुलाबीजं फलञ्च जातीजम् ॥ १४ ॥
अहिफेनञ्च तदर्धं तत्पुटपाकप्रकारतः पक्त्वा ।
बद्ध्वा द्वादश गुडिकाः सृतिसंहृतये भजन्त्वजापयसा ॥१५॥

खर्जूरीति—खर्जूरीफलं "छुहारा" इतिख्यातमर्धयामावधि क्षीरे निमज्ज्य तदन्तःस्थमस्थि निःसारयेत् । तस्मिन् स्थूलैलाबीजानि माषमितानि, जातीफलं माषमितम्, अहिफेनं माषार्धमितं च प्रपूर्य पुटपाकविधया पक्त्वा सर्वद्रव्यस्य द्वादशसंख्याका वटिकाः कार्याः । ताश्च छागीदुग्धेन संसेव्याः । इयं वटी अतिसारं संहरति षड्भिर्दिनैः ।

दरदधूर्तकबीजविषैः समं भुजगफेनमितीहकृता वटी ।
सुविदिता भुवि"कल्पलते"ति सा किमतिसाररुजं न नियच्छति १६

दरदेति—दरदम्=विशुद्धहिङ्गुलम्, धूर्तकबीजानि धौतानि, विषम्=शृङ्गिकं तच्चापि शुद्धम् । त्रिभिस्तुल्यमहिफेनमिति सर्वं पिष्ट्वा वटिका विधेया । सेयं "कल्पलता" इति प्रसिद्ध्यति । किमतिसारमेषा न विहन्ति, अपितु निहन्त्येव । द्रुतविलम्बितं छन्दः ।

विश्वाखाखसवल्कबिल्वमधुराः सर्वार्धसच्छर्कराः
संक्षुद्याश्मतले सुचूर्णितमिदं खादेद्भृशं मानवः ।
द्वित्रैरेव दिनैः समस्तसरणं संशोषयेत्सर्वशः
सर्वेषामतिसारवारणमिदं चूर्णं प्रतीतं न किम् ॥ १७ ॥

विश्वेति—शुण्ठीखाखसवल्कलबिल्वशतपुष्पाणां यावन्मात्रं तदर्धं सिताया इति सर्वं विचूर्ण्य सर्वेष्वेवातिसारेषु सेवेत । शतपुष्पाखाखसवल्कलेऽर्घभ्रष्टे ग्राह्ये ।

मिषिमायाफलाफूकजीरकैश्चन्द्रभागिकैः ।
शुभामलकबब्बूलगुन्द्रैरक्षिमितैः पृथक् ॥ १८ ॥
दाडिमीपुष्पखदिरश्रीफलैस्त्रिगुणैर्वटी ।
चणाभा दाडिमाम्भोभिर्बद्धा रुन्द्धेऽतिसारकम् ॥ १९ ॥

मिषीति—मायाफलम्=“ मांजूफल ” इति प्रसिद्धम् । चन्द्रभागिकैः=पृथगेकैकभागिकैः । शुभा=वंशरोचना, आमलकं प्रसिद्धम्, बब्बूलगुन्द्रः=“कीकर का गोंद” इति प्रसिद्धो निर्यासविशेषः—एतैरक्षिमितैः=पृथक् द्विभागिकैः । खदिरः=कत्थम् । श्रीफलम्=बिल्वम् । दाडिमाम्भोभिः=दाडिमीफलरसैः ।

भूतिर्भुजङ्गफेनस्य लीढा बाढं समाक्षिका ।
घोरातिसारसरितां रोधनी परमा मता ॥ २० ॥

भूतिरिति—नवीनपिप्पलकिसलयगतमहिफेनं पुटविपक्वं मधुना देयम् । एतद्भक्षकयानाहशङ्कापि नास्ति । मात्रा—रक्तिद्वयमिता ।

पुष्पजातीफलाफूकतैलं पातालयन्त्रतः ।
च्युतं सर्वातिसारघ्नमिति मित्रमुखाच्छ्रुतम् ॥ २१ ॥

पुष्पेति—पुष्पम्=लवङ्गम् । सर्वमौषधसंभारं कूप्यां भृत्वा तन्मुखे लोहतारगुलिकां निवेश्य पातालयन्त्रतस्तैलं च्यावयेत् ।

खाखसाख्यानि सप्तैव त्रीणि चिञ्चाफलानि च ।
नीरे निक्षिप्य संमर्द्य तन्नीरं पाचयेत्पटात् ॥ २२ ॥
सिताचतुष्पलं तत्र दत्त्वा कृत्वा च शार्करम् ।
तत्पुनर्मात्रया पीतं सर्वातीसारवारकम् ॥ २३ ॥

खाखसेति—चिञ्चाफलानि=अम्लिकाफलानि । सप्तेति त्रीणीति च संख्या ।

**सखे खाखसान्धेनुदुग्धासहायान्फलेन्द्रानवीनच्छदान्सोपणान्वा ।**
**मृदित्वाम्बुमग्नान्पुनः पावितं तज्जलं पीतमञ्जोऽतिसारापहारि ॥२४॥**

सखे इति—सखे इति सम्बुद्धिः । तत्र तत्र पद्येषु मित्राणां रोगिणां छात्राणां प्रियायाश्च सम्बोधनं ग्रन्थकर्तुः शैली । धेनुदुग्धा="कचरी" इति प्रसिद्धा, सा च मारवी प्रशस्यते । तत्सहितान्खाखसान्, यद्वा–सोपणान् = समरिचान् फलेन्द्रायाः=जम्ब्वाः "जामुन" इति ख्याताया नवीनच्छदान्पिष्ट्वा, जले समाप्लाव्य, पटपूतं तज्जलं पिबेत् । इदमञ्जः=शीघ्रमतिसारमपहरतीति योगद्वयम् । भुजङ्गप्रयातं छन्दः ।

**मिषिर्जीरकं तिन्तिडीकं पृथक्ते निशेशांशिका दाडिमी तु द्विभागा ।**
**सिता पञ्चभागा कृतं चूर्णमेतद्भवेद्रोचकञ्चातिसारप्रमाथि ॥ २५ ॥**

मिषिरिति— मिषिजीरके भर्जिते आदेये । तिन्तिडीकम्=" ढांसरिया " इत्युक्तम् । निशेशः=चन्द्रस्तदंशिकाः, पृथगेकैकभागिका इत्यर्थः । दाडिम्या बीजानि "अनारदाना" इत्याख्यातान्यादेयानि । अतिसारप्रमाथि=आमातिसारवारकम् ।

**वत्सकातिविषाविल्ववालवारिदसाधितः ।**
**कषायो हन्त्यतीसारं सामशूलं सशोणितम् ॥ २६ ॥**

वत्सकेति—वत्सकः=कुटजत्वक् । वारिदः=मुस्तकः ।

**जातीफलमहिफेनं मोचरसाख्यं सविल्वमित्येतत् ।**
**पुटपाकरीतिपक्वं सकलातीसारसूदने सत्यम् ॥ २७ ॥**

जातीफलेति—निगदव्याख्यातः । गीतिश्छन्दः ।

**सबीजाः सप्त मृद्वीका एकमाम्रास्थि चोत्तमम् ।**
**माषार्धमहिफेनस्य सर्वं संक्षुद्य यत्नतः ॥ २८ ॥**
**सप्त तस्य वटीर्बद्ध्वा प्रातरेकां निषेवयेत् ।**
**एताः सप्तैव शक्ताः स्युर्मलानामवरोधने ॥ २९ ॥**

सबीजा इति—अनिस्सारितबीजाः "मुनक्का" इति ख्याता द्राक्षाः सप्तसंख्याका ग्राह्याः । आम्रास्थि=आम्रफलान्तर्बीजमज्जा । सर्वसम्भारस्य केवलं सप्तैव गुटिकाः कार्याः ।

**ससितं पिबतो मण्डं लिहतो मधुना विषाम् ।**
**सगुडं भर्जितं बिल्वं खादतो नोदरामयः ॥ ३० ॥**

ससितमिति—सितायुतौदनपानीयपानं, मधुमिश्रितातिविषावलेहः, गुडसहितभर्जितबिल्वभक्षणमित्येते त्रयो योगाः । उदरामयः=अतिसारादिः ।

**यथा सूतिहरं भ्रष्टखाखसामलयो रजः ।**
**उदुम्बरपयोबद्धा विजायवटिका तथा ॥ ३१ ॥**

यथेति—सूतिहरम्=अतिसारघ्नम् । खाखसामलयोस्तवके भर्जनं विधेयम् । उदुम्बरः="गूलर" इति प्रसिद्धस्तदुग्धबद्धा भङ्गावटी । तथा=अतिसारघ्नी । योगद्वयम् ।

**नागरं श्रीफलं मुस्तमाम्रजम्बूफलास्थिनी ।**
**भर्जिता पुनरेवैते मिषिखाखसजीरकाः ॥ ३२ ॥**
**समैरेतैः कृतं चूर्णं शीलयेत्समशर्करम् ।**
**तेन घोरातिसारार्त्तिर्विशिष्य खलु नश्यति ॥ ३३ ॥**

नागरमिति—श्रीफलम्=बिल्वम् । आम्रजम्बूफलास्थिनी=आम्रजम्ब्वोः फलान्तर्बीजमज्जानौ । मिषिखाखसजीरका एव पुनर्भर्जिता इति सम्बन्धः ।

**समवटशुङ्गोशीरैर्जम्बूसहकारपल्लवैः स्वरसः ।**
**चूर्णं वापि कषायः क्षौद्रसहायो न किं कुरुते ॥ ३४ ॥**
**छर्दिं ज्वरमतिसारं तृष्णां मूर्च्छां च शोणितस्रवणम् ।**
**नमयति नृपतेर्नीतिं प्रकृतेः सत्याग्रहो यद्वत् ॥ ३५ ॥**

समेति—वटाङ्कुरोशीरजम्बूपल्लवाम्रपल्लवानां तुल्यभागानां स्वरसो वा चूर्णं वा समधुः क्वाथो वेति योगत्रयं किं न कुरुते ? सर्वमेव कर्तुं शक्नोति । यत्करोति तत्स्वयं नामग्राहमाह—छर्दिमित्यादि । शोणितस्रवणम्=मुखनासाशिश्नादिद्वारे रुधिरनिर्गमम्, रक्तपित्तमिति यावत । नमयतीति—एतान् रोगान् योगा इमे तथा नमयन्ति, यथा सत्याग्रहग्रहिलाः प्रजा नृपतेर्दुरभिसन्धिनानुचितरूपेण प्रवर्तितां करयोजनादिदुर्नीतिं नमयन्ति । अत्रेदमाकूतकम्—दुरदृष्टवशाद्यदा कश्चिद्देशः केनचिदपरदेशेन विजीयते, तदा विजेतृदेशीया विजितदेशे तथा नामात्याचरन्ति यथा तद्देशस्य भाषायां भूषायां वेषे भावे भेषजे भोजने वीरत्वे वित्ते च किमपि नावशिष्येत । हन्त ! मनाङ्निक्षिप्यतां चक्षुरास्माकीने पवित्रे भारते वर्षे एव । यो हि देशः कदाचिद्ब्रह्मर्षिभी राजर्षिभिर्वैश्यप्रवरैः शूद्रसत्तमैश्च स्वधर्मपरायणैः पावितोऽभूत , स एवाधुना विदेशीयैर्विधर्मिभिः क्रियमाणां नानाविधां कदर्थनां सहते ! यत्र वन्यधान्यसमृद्धा जना निरीतयो नामापि न जानन्ति स्म दुःखस्य, तत्र कोटिशो मानवा न चर्मपूरं स्तृणन्ति नचोदरपूरं भुञ्जते । शस्त्रास्त्राण्यपहृत्य

क्लीवीकृता वराका—दूरेऽस्तु वलप्रदर्शनं—किञ्चिद्ब्रुवन्तोऽपि गुलिकावेधं काल्यन्ते पशुमारं च मार्यन्ते । प्रत्यब्दमर्बुदानि रूप्यकाणि तैस्तैः कूटप्रबन्धैः पारेसमुद्रं नीयन्ते । कस्तत्र प्रतिषेधमाचरेत् , केवलं निःशब्दं रोदितु !" यस्य देशस्य योजन्तुस्तज्जं तस्यौषधं हितम् " इति जानन्तोऽपि विदेशीयौषधेभ्यः कोटिशो रूप्यकाणि दातुं विवशीक्रियामहे । आयुर्वेदीयौषधेभ्यः साहाय्यं याचमाना अपि तच्चिकित्सायाः " साइन्स "-विरुद्धतादिघोषणपुरस्सरं धिक्क्रियामहे । तदेवंविधे व्यतिकरे दुर्दमानां दमननीतिं नमयितुं भूयोऽपि भारतस्य प्राक्तनं श्रेयो विधातुञ्च नास्ति कश्चन निरस्त्राणामस्माकं महात्मगान्धिप्रवर्तितं सत्याग्रहं मुक्त्वा साधीयानुपाय इत्यलं प्रसक्तानुप्रसक्त्या ।

करोतेर्विन्दतेर्हौ यद्रूपं तत्साधितं जलम् ।
ज्वरातिसारसंहारकारणं सद्भिरुच्यते ॥ ३६ ॥

करोतेरिति—करोतेर्हौ रूपं " कुरु " इति, विन्दतेश्च हौ रूपं " विन्द " इति, उभयोः संयोगेन निष्पन्नं " कुरुविन्द " इति । कुरुविन्दः=मुस्तकस्तत्साधितं जलं ज्वरातिसारयोरुभयोः संहारं करोति ।

खादन्कर्पूरवटिकां लिहंश्च कुटजाष्टकम् ।
जेमन्दध्योदनं जन्तुर्जयेद्घोरां मलस्रुतिम् ॥ ३७ ॥

खादन्निति—कर्पूरवटिकासेवनं, कुटजाष्टकस्यावलेहनं, योगद्वयेऽपि पथ्यरूपेण दध्योदनजेमनञ्च घोरमतिसारं नाशयति । क्वचित्तु केवलदधिभक्तभोजनेनाप्यतिसारशान्तिर्भवन्ती दृश्यते। "कर्पूरवटिका— " विशुद्धहिङ्गुला—हिफेन—मुस्तके—न्द्रयव—जातीफल—कर्पूरान्सम्मर्द्य जलेन वटिका विधेयाः । " कुटजाष्टकावलेहः " इत्थं निर्मातव्यः:— कुटजत्वक्="कूड़ेकीछाल" इति ख्याता, सा चार्द्रा शतपलमिता ग्राह्या। तत्र द्रोणमितं जलं दत्वा, विपाच्य, पादावशिष्टे तत्क्वाथे—लज्जालुः=" लजवन्ती" इति प्रसिद्धा, धातकी, विल्वम्, पाठा, मोचरसः, मुस्तम् , प्रतिविषा—इत्येतेषां पृथक्पलमितं चूर्णं दत्वा पुनर्विपचेत् । तत्र दर्वीप्रलेपं विज्ञाय सिद्धिं विद्यात् । तमिमं "कुटजाष्टकावलेहम्" जलेन, छागदुग्धेन मण्डेन वा सेवेत ।

विहितं शार्करं जम्ब्वाः श्रीफलस्यामलस्य वा ।
विद्यादतिसृतेः सेतुं हेतुं च मनसो मुदाम् ॥ ३८ ॥

विहितमिति—जम्ब्वादीनां पृथक्त्रिविधं शार्कर—( शर्बत )—मतिसारवारणमाह्लादजनकञ्च ज्ञेयम् ।

निवर्तन्तेऽतिसाराद्या आजक्षीररसोदये ।
गुणोदये यथा दोषाः क्लेशा ज्ञानोदये यथा ॥ ३९ ॥

निवर्तन्त इति—यथा गुणानाम्=शान्त्यादीनामुदये दोषाः=क्रोधादयो निवर्तन्ते, यथा च ज्ञानोदये क्लेशाः="अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः" इति योगदर्शनोक्ताः पञ्च निवर्तन्ते, तथैव आजक्षीररसोदये=दुग्धपाकविधिना परिपक्वे छागीदुग्धे सेव्यमानेऽतिसारादयो रोगा अपि निवर्तन्ते । मालोपमालङ्कारः ।

चलदलकिसलयकल्को वत्सकवल्कोत्थितस्तथा क्षोदः ।
कुचिलाफूककणाभिर्बद्धा वटिकापि हन्त्यतीसारम् ॥ ४० ॥

चलेति—चलदलः=पिप्पलवृक्षस्तस्य किसलयानाम्=नूतनपत्राणां कल्कः । वत्सकवल्कः=कुटजत्वक् " कुड़ेकी छाल " इति प्रसिद्धा, तदुत्थितः=तन्निर्मितः क्षोदः=चूर्णम् । अत्र-कल्कचूर्णवटिकारूपेण योगत्रयमुक्तम् । गीतिश्छन्दः ।

यदि ते सरणाशङ्कि शरीरं पिब जातीफलनागरनीरम् ।
स्तम्भनमिह यदि वाञ्छसि तूर्णं निगिल तदा गङ्गाधरचूर्णम्॥४१॥

यदीति—यदि क्षणे क्षणे शरीरे मलप्रवृत्तिशङ्का जायेत तर्हि तत्र जातीफलशुण्ठ्यौ जलेन घृष्ट्वा शीतलमेव तज्जलं पेयम् । यदि शीघ्रमेवातिसारं स्तम्भयितुमिच्छसि तर्हि " गङ्गाधरचूर्णम् " निगिल=भक्षय । तल्लघु यथा—मुस्तम् , इन्द्रयवः, बिल्वम् , लोध्रम् , मोचरसः, धातकीपुष्पाणि—एतानि षड् द्रव्याणि संचूर्ण्य गुडमिश्रिततक्रेण पाययेत् । वृद्धगङ्गाधरचूर्णम्—मुस्तम्, अरलुकः, शुण्ठी, धातकीपुष्पाणि, लोध्रम्, ह्रीबेरम् , बिल्वम्, मोचरसः, पाठा, इन्द्रयवः, कुटजत्वक्, आम्रबीजमज्जा, प्रतिविषा, लज्जालुः—एतानि संचूर्ण्य, मधुसहितेन तण्डुलजलेन सेवेत । अत्र पद्ये तथा वक्ष्यमाणेषु चतुर्षु चतुष्पदी ( चौपाई ) छन्दः ।

त्रुटिकरमध्ययुजो मिषिमुष्टेः समसितयापि रजस्तव तुष्टेः ।
कारणमिह भवति द्यति चेदं जलपरिवृत्तिजनितमलभेदम् ॥ ४२ ॥

त्रुटीति—त्रुटिः=सूक्ष्मैला, तत्करमध्यम्=तोलकं तद्युक्ताया मिषिमुष्टेः=शतपुष्पापलस्य समसितया युक्तस्य चूर्णं तव तुष्टेः कारणं भवति । किञ्च-इदं चूर्णं देशान्तरेषु जलपरिवर्तनाज्जातमतिसारमपि द्यति=खण्डयति ।

कवलय रे ज्वरयोगिनि कोलं समसितमनुमतमीश्वरबोलम्।
वमियुजि रे बहुशो भज मित्र दाडिमशार्करमुत्तममत्र॥ ४३॥

कवलयेति—रे मित्र! ज्वरयोगिन्यतिसारे कोलम्=षण्माषकमितं समसितमीश्वरबोलं कवलय। इदमनुमतं वैद्यैरिति शेषः। किञ्च—वमनयुक्तेऽतिसारे दाडिमशार्करम्="अनारका शर्बत" इति प्रसिद्धं भज। इदमत्रातिसारे उत्तमं भवतीति।

अमरविपाघनमरिचविडङ्गं पाठावत्सकवल्कलसङ्गम्।
श्रपयित्वा पिब शोफसहाये सुरतरुतैलं मर्दय काये॥ ४४॥

अमरेति—अमरः=देवदारु। घनः=मुस्तकः। पाठा="पाढ"इति ख्याता। वत्सकवल्कलम्=कुटजत्वक्। श्रपयित्वा=समुत्क्वाथ्य। शोफसहाये=शोथयुक्तेऽतिसारेऽयं क्वाथः पेयः। शरीरे देवदारुतैलस्य मर्दनं विधेयम्। तैलं नयपालादिप्रान्तेषु भवति।

अतिरेचनतः क्षीणपुरीषं कायिककर्म विधातुमनीशम्।
उपपादय दधिमधुघृतखण्डैः फाणितकैः सह चोदनमण्डैः॥४५॥

अतीति—प्रियसखे वैद्य! यो हि मानव उग्रवैद्यवशङ्गतो विरेचनातियोगात् प्रक्षीणमलो भवेत्, तं दध्यादिभिः, फाणितकैः="राब" इति ख्यातैः पक्वैः किञ्चिद्गाढैर्बहुद्रवैरिक्षुरसैः शार्करैर्वा, ओदनमण्डैः=भक्तगालितपानीयैश्चोपपादय=शनैः शनैर्बलयुक्तं विधेहि।

अतिरेचनतो जातमलस्रावेषु दीयताम्।
कत्तीरजो रूमजो वा गुन्द्रो वेश्वरबोलकम्॥ ४६॥

अतिरेचनत इति—विरेचनौषधातियोगात्सञ्जातेऽतिसारे कत्तीरजो गुन्द्रः="कतीरा गोंद" इतिख्यातो निर्यासविशेषः, रूमजो गुन्द्रः="रूमीमस्तंगी" इतिख्यातः पीतच्छविर्निर्यासः, ईश्वरबोलकम्="इसपगोल" इति ख्यातं वा दीयतामिति योगत्रयं निबद्धं द्रष्टव्यम्।

शुण्ठी यवानिका छिकाभस्मेति गुडिका गुडैः।
माषिकाः सर्पिषा सेव्या नाभिसंसोत्थविट्स्रवे॥ ४७॥

शुण्ठीति—छिका="नकछिंकनी" इति ख्याता, तद्भस्म। वस्तुत्रयं गुडेन संनीय माषप्रमाणा वटिका विधेयाः। नाभिसंसः="धरण डिगना" इति लोके तदुत्थेऽतिसारे इमा वट्यो घृतेन संसेव्याः।

**धातकीमोचसाराभ्यां काथो हन्ति प्रवाहिकाम् ।**
**तथा वत्सकबीजानां मुस्तेन्द्रकुटजत्वचाम् ॥ ४८ ॥**

धातकीति—धातकी="धायके फूल" इति ख्याता, मोचसारः="मोचरस" इति ख्यातस्ताभ्यां क्राथ इत्येको योगः, वत्सकबीजानाम्=इन्द्रयवानां क्राथ इति द्वितीयः, मुस्तः प्रसिद्धः, इन्द्रः=इन्द्रयवः, कुटजत्वक्=अनेकशः कृतविवरणा तेषां क्राथ इति तृतीयः एवं त्रयोऽमी योगाः प्रवाहिकां घ्नन्ति । प्रवाहिकानाम—

वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥

—इत्युक्ता ।

**भागो लोध्रकधातुकीरसबलिश्रीसंज्ञशक्राम्बुदै-**
**र्द्वौ जातीफलतस्त्रयस्तु फणिनः फेनाद्भवेयुस्ततः ।**
**सर्वं खाखबल्कलामलजलैस्त्रिर्भावयित्वा पुनः**
**सेव्योऽयं नवनिम्बुजेन रसराट् "सर्वातिसारान्तक." ॥४९ ॥**

भाग इति—लोध्रकः="पठानी लोध" इति ख्यातः, धातुकी="धायके फूल" इति ख्याता, रसः=पारदः, बलिः=गन्धकः, श्रीसंज्ञम्=लवङ्गम्, शक्रः=इन्द्रयवः, अम्बुदः=मुस्तकः—प्रत्येकमेषामेकैको भागो ग्राह्यः । जातीफलस्य भागद्वयम् । शुद्धस्याहिफेनस्य त्रयो भागाः । सर्वमिदं खाखसवल्कलजलेन त्रिधा भावयेत् । "सर्वातिसारान्तक"—नामा रसराडयं गुञ्जामितवटीरूपो विधातव्यः, निम्बुरसेन संसेव्यश्च ।

**कुरु शरणं हरिचरणं बहुमलहरणं रुगब्धिसन्तरणम् ।**
**परमसुखोदयकरणं तद्धि रुणद्धि प्रसह्य संसरणम् ॥ ५० ॥**

कुर्विति—भो अतिसारिन् ! चेद्विविधानुपायान्कृत्वा श्रान्तोऽसि न च तथाकुर्वाणस्याप्यतिसारः शाम्यति तर्हि बहुमलहरणम्—बहूनाम्=वातादिदुष्टत्वेनानेकविधानां मलानाम्=प्रदुष्टानां स्रुतानां पुरीषादीनां हरणम्, रुगब्धिसन्तरणम्—रुक्=अतिसारपीडैवाब्धिस्तत्सन्तरणम्, तथा—परमसुखस्य=संसारे सारभूतस्यारोग्यस्य य उदयः=उत्पत्तिस्तत्करणं हरिचरणम्—हरेः="अश्वत्थः सर्ववृक्षाणाम्" इति गीतासु भगवता स्वमुखेनोक्तत्वात्तत्स्वरूपस्य, यद्वा हरिनिवासभूतस्य पिप्पलवृक्षस्य चरणम्=मूलं शरणं कुरु । प्रच्छायशीतले पिप्पलतरोस्तलेऽतिसारिणा शयितव्यमिति भावः । यद्वा—पिप्पलमूलवल्कलस्यातिसारे फाण्टरूपेणोपयोगः कर्तव्यः। फाण्टलक्षणमुक्तं प्राक् । उभयथापि—तत्तले शेतां फाण्टं वा सेवतां—तद्धरिचरणं संसरणम्=अतिसाररोगं प्रसह्य रुणद्धि । उपायशतेनाप्यविनश्यद्व्या-

धीनां सर्वथा नैराश्यं गतानान्तु श्लेषमर्यादया द्वितीयोऽर्थोऽप्युपतिष्ठते, यथा—बहूनां मलानाम्,=पापानां हरणम्, रुक्=भवरोगो रागादिर्वा सैवाब्धिस्तत्सन्तरणम्, परमसुखस्य=मोक्षस्य य उदयस्तत्करणं हरिचरणम्—हरेः=पापापहारिणो निःसीमकरुणार्णवस्य भगवतः श्रीकृष्णचन्द्रस्य चरणं शरणं कुरु । तद्धि भगवच्चरणं प्रसह्य संसरणम्=अतिसार-निवृत्तिमात्रमभिलषतोऽतिसारं जन्मजरामरणबन्धनमुच्छेत्तुं कामयमानस्य तु संसारं रुणद्धि । अत्र पद्ये श्लेषोऽनुप्रासश्च चेतोहरः । गीतिश्छन्दः ।

पूर्ववद्द्वितीयकोष्ठसमाप्तिं पद्येन सूचयति—

विप्राग्रणीश्यामरामसूनुर्यो रामदुर्गो जयदेवजोशी ।
तस्यानुभूतौषधपेटिकायां कोष्ठं समाप्तिं ह्यगमद्द्वितीयम्॥५१॥

इति श्रीसिद्धभैषज्यमञ्जूषायां प्रथमप्रकोष्ठे द्वितीयं कोष्ठकम् ।

—:०:०:०:—

विप्रेति—पूर्वं व्याख्यातत्वात्सुगमम् ।

बाल्ये भ्रातुरसीमवत्सलतया यो जातशिक्षाक्रमः
श्रीश्रीदत्तगुरोः कृपामरतरोरासानवद्यागमः ।
वैद्यानां मणिराममशर्मगुरुणा सिद्धान्तमध्यापितोऽ-
ध्यक्षः संप्रति रामदुर्गलड्याकालेजकाध्यापने ॥
श्रीमत्पण्डितफुल्लचन्द्रतनुपाऽऽचार्यप्रशंसाजुषा
बीकानेरनृपेष्टरत्ननगरे संवासिना शास्त्रिणा ।
तेन श्रीहनुमत्प्रसादविदुषा भैषज्यमञ्जूपिका-
कोष्ठं कुञ्चिकया द्वितीयमतुलं निर्व्याजमाविष्कृतम् ॥

इति श्रीसिद्धभैषज्यमञ्जूषायाः प्रथमप्रकोष्ठीयद्वितीयकोष्ठकविवरणे
कुञ्चिकाया द्वितीय आवर्त्तः ।

—:०:—

## प्रथमे प्रकोष्ठे
### तृतीयं कोष्ठकम्

### अथ ग्रहण्यधिकारः

द्रवसरणसाधर्म्यात्परस्परानुबन्धित्वाच्चातिसारानन्तरं ग्रहणी प्राप्तक्रमेति तच्चिकित्सितं विवक्षुरादौ मङ्गलमाचरति कविः—

**शङ्करकृपाकटाक्षा भूतिवलक्षाः स्वभक्तजनपक्षाः ।**
**गदमदविदलनदक्षा भवभयभक्षाश्च रक्षन्तु ॥ १ ॥**

शङ्करेति—भूतिः=भस्म, तया तद्वद्वा वलक्षाः=धवलाः, स्वस्य भक्तजनेषु पक्षः=पक्षपातो येषां तथाभूताः, गदानाम्=रोगाणां मदस्य विदलने=नाशने दक्षाः, भवाद्भयं तस्य भक्षाः=नाशका इत्यर्थः, एवंविधाः शङ्करकृपाकटाक्षा अस्मान्रक्षन्तु । अत्र पद्ये क्षकार-दकार-भकाराणामसकृदावृत्त्या वृत्त्यनुप्रासोऽलङ्कारः । पथ्यार्यावृत्तम् ।

**ग्रहणीरोगिणां तक्रं दधि दुग्धं फलानि वा ।**
**पथ्यं निरन्नमखिलं शस्तं च मुनिभोजनम् ॥ २ ॥**

ग्रहणीति—मुनिभोजनम्="फांफर" इत्यादिख्यातानां मुन्यन्नानां भक्षणमिति । शिष्टं स्पष्टम् ।

**चित्रकमरिचाजाजीशुण्ठीसौवर्चलैः कृतं चूर्णम् ।**
**तक्रविलोलितपीतं भृशमनुभूतं जयेद्ग्रहणीम् ॥ ३ ॥**

चित्रकेति—अजाजी=श्वेतजीरकः, सच भ्रष्ट आदेयः । सौवर्चलम्="संचरनमक" इति ख्यातम् । तक्रविलोलितम्=तक्रसंमेलितम् ।

**तक्रैर्भास्करलवणं स्यादुभयान्त्रप्रसादने प्रवणम् ।**
**सौवर्चलहुतभुग्भ्यां वेल्लजयुग्भ्यां रजोऽपि तथा ॥ ४ ॥**

तक्रैरिति—"भास्करलवणम्"=सर्वत्रायुर्वेदग्रन्थेषु प्रसिद्धं चूर्णं तत्तक्रैः पीतमुभयान्त्रयोः=क्षुद्रबृहदन्त्रयोः प्रसादने=विकारापहारे प्रवणम्=समर्थं भवति । तथा वेल्लजयुग्भ्याम्=मरिचसहिताभ्यां सौवर्चलहुतभुग्भ्यां=सौवर्चलचित्रकाभ्यां विहितं रजोऽपि तादृशमेव । भास्करलवणचूर्णविधिः—सामुद्रलवणम् ८ तो०, सौवर्चलम् ५तो०, विडलवणम् २तो०, सैन्धवम् २तो०, धान्यकम् २तो०, पिप्पली २तो०, पिप्पलीमूलम् २तो०, कृष्णजीरकः २ तो०, पत्रकम् २ तो०, नागकेशरः २तो०, तालीशपत्रम् २ तो०, अम्लवेतसम् २ तो०,मरिचम् १ तो०, श्वेतजीरः १ तो०, शुण्ठी १ तो०, दाडिमवीजानि ४ तो०, दारुसिता ॥ तो०, एला ॥ तो०—एतत्सर्वं विचूर्ण्य चतुर्माषकमितं तक्रादिभिः सेव्यम् ।

यवजातीफलबिल्वकमुस्ता विहिता मसृणा दृपदि समस्ताः ।
तक्रैरेव निपीता नित्यं ग्रहणीगदमर्दन्ति हि सत्यम् ॥ ५ ॥

यवेति—यवः=इन्द्रयवः। दृपदि=खल्वे। अर्दन्ति=नाशयन्ति। विभापितणिचश्चौरादिकस्य "अर्द हिंसायाम्" इत्यस्येदं रूपम्। अत्र चतुष्पदीनामकं षोडशमात्राकं छन्दः।

यथैव शङ्खभस्मकं यथा मता कपर्दिका
तथैकमप्ययोमलं विशोधयेद्‌गलान्मलम् ।
इमेऽखिलान्त्रजामयान्निहत्य कुर्वते दयां
त्यजात्र मित्र ! संशयान्कुरुष्व वाऽऽसनक्रियाम् ॥ ६ ॥

यथेति—शङ्खभस्म, कपर्दिका="कौडी" इति ख्याता तद्भस्म, अयोमलम्=मण्डूरभस्मेति त्रीणीमानि भस्मानि समस्तानि व्यस्तानि वा ग्रहणीहरणानि भवन्ति। इमे योगाः क्षुद्रबृहदन्त्रद्वयदुष्टिसञ्जातानखिलान् ग्रहण्यादिरोगान्निहत्य रोगिणि दयां कुर्वते। नात्र संशयः कार्यः। अथवा–आसनक्रियाम्=योगसाधनभूतमासनबन्धकर्मापि कुरुष्व। परमिदमत्रावधेहि—आसनक्रिया तद्विशेषज्ञशिक्षितैव विधेया, अन्यथा लाभस्थाने हानिः स्यात्। शङ्खकपर्दिकयोर्भस्मोक्तम्। मण्डूरभस्मविधिः—पुराणं मण्डूरं बिभीतककाष्ठाङ्गारैस्तदभावे सामान्यैः संताप्य संताप्य सप्तवारं गोमूत्रे निर्वापयेत्। तदनु तच्चूर्णयित्वा सप्तवारं त्रिफलाक्वाथेन पुटेत्। गुणाधिक्यसंपिपादयिषायां कुमारिकास्वरसादिभिरन्येऽपि पुटा दातुं शक्यन्ते। इत्थं विशुद्धं "मण्डूरभस्म" सम्पत्स्यते।

नरः कुसुमसारेण रसयन् "रसपर्पटीम्" ।
मुक्तः स्याद्ग्रहणीपाशान्मृत्युग्रासाच्च तक्रभुक् ॥ ७ ॥

नर इति—ग्रहणीग्रस्तो नरः कुसुमसारेण=मधुना "रसपर्पटीम्" रसयन्=भक्षयन् ग्रहणीपाशान्मृत्युग्रासाच्च मुक्तः स्यात्। क्षुधि तृषि चान्नं जलं च विहाय, केवलं तक्रं संसेव्यम्। इयांस्तु विशेषः—तत्र प्रथमेऽह्नि गुञ्जाद्वयं ततः प्रतिदिनमेकैकवृद्धया द्वादशगुञ्जापर्यन्तं भक्षणमर्यादोक्ता। किन्तु प्रबलरोगे शक्तिसम्पन्ने रोगिणि च विंशतिगुञ्जापर्यन्तप्रयोगोऽपि न दुष्यति। "रसपर्पटी–" विधिः—पारदमग्निमन्थरसेन, आर्द्रकरसेन, एरण्डरसेन, काकमाचीरसेन च पृथक्पृथक् प्रपिष्य शोधयेत्। गन्धकन्तु विचूर्ण्य लौहपात्रे भृङ्गराजरसाप्लुतं त्रिधा चण्डातपे विशोषयेत्। ततो द्रवीभूतं भृङ्गराजरसे वस्त्रगालितं विशोष्य शोधयेत्। एवं शुद्धयोर्द्वयोः कज्जलीं विधाय, बादराङ्गारेषु विद्राव्य गोमयोपरि विन्यस्तकदलीपत्रपातनेन पर्पटीं विदध्यात्। सेयं "रसपर्पटी"।

नित्यमश्नाति यो मासं रसं "कनकसुन्दरम्" ।
कासो दासो भवेत्तस्य ग्रहणी गृहिणी भवेत् ॥ ८ ॥

नित्यमिति—हिङ्गुल–मरिच–गन्धक–टङ्कण–पिप्पली–शृङ्गिकविष–धत्तूरबीजानि समानमानानि भङ्गास्वरसेन तत्क्वाथेन वा विमर्द्य चणकाकारा वटी विधेया। सोऽयं "कनकसुन्दरः" रसो भवति, यस्य "हेमसुन्दरः" इति "कनकप्रभा" इति च नामद्वयमन्यदप्यस्ति। अयं मासावधि योग्यानुपानेन संसेव्यः। दध्योदनं तक्रौदनं वात्र पथ्यम्। कासो दासो ग्रहणी गृहिणीत्यनेन रसस्यास्य सेवनात्तौ विनश्यत इति बोध्यम्।

कर्षं टुण्टुकवल्कलस्य भजतां न स्याद्ग्रहण्यामयो
वेगश्चाप्यतिसारजो न भविता दध्नाऽऽदृतां पाठक!।
रक्षत्याशु जनं बलासभयतो मथ्नाति यो मारुतं
तं सद्यः करुणाकरं ज्वरहरं योगं ब्रुवे सन्मतम् ॥ ९ ॥

कर्षमिति—चक्रबन्धश्चित्रकाव्यभेदोऽयम्। टुण्टुकः="अरलुः" इति ख्यातः, तस्य त्वक्कर्षमिता दध्यादिना योग्येनानुपानेन सेवनीया। ग्रहण्यतिसारकफमारुतादिरोगा योगेनानेन शाम्यन्ति। शिष्टोऽर्थः स्पष्टः। पाठक इति सम्बुद्धिः।

चक्रबन्धविन्यासः




वटिकाश्चित्रकाद्या वा गन्धकाद्याः पुनः पुनः।
सूचितव्या दूषितान्त्रैरामपक्त्यै सुखाय च ॥ १० ॥

वटिका इति—"चित्रकाद्या गुडिका-"चित्रक–पिप्पलीमूल–यवक्षार–स्वर्जिक्षार–लवणपञ्चक–शुण्ठी–मरिच–पिप्पली–हिङ्गव–जमोदा–चव्यानि बीजपूररसेन दाडिमरसेन वा प्रपिष्य विधीयते । "गन्धकाद्या वटी "–गन्धकः २ तो०, शुण्ठी २ तो०, चित्रक–मरिच–पिप्पलीनां प्रत्येकमेकस्तोलः, यवक्षार–सैन्धव–सौवर्चल–शाकम्भरीयलवणानां प्रत्येकं तोलार्धः, सर्वमिदं निम्बुनीरेण विमर्द्य विधीयते । द्विविधा अपि ता वट्यो ग्रहणी-रोगे आमपाचनाय चूषणार्थं मुहुर्मुहुरुपयोज्याः ।

**चूर्णं बृहन्नायिकाख्यं मलं बध्नाति सत्वरम् ।**
**यथैव राजपुरुषो बलाच्चौर्यकरं नरम् ॥ ११ ॥**

चूर्णमिति—बृहन्नायिकाख्यं चूर्णम्="बृहन्नाई चूर्ण " इति प्रसिद्धं ग्रहणीरोगे मल-बन्धनाय श्रेष्ठम् । तच्च प्रशस्तत्वात् " निघण्टुरत्नाकर-"पठितमादेयम् । इहापि निर्दि-श्यते—पारद–गन्धक–शुण्ठी–श्वेतमरिच–पिप्पली–हरीतकी-विभीतक-विडङ्ग-श्वेतजीरक-कृष्णजीरक-भल्लातक–यवानी-वचा-कुष्ठ-स्वर्जिक्षार-यवक्षार-टङ्कणा-जमोदा-चित्रक-गजपि-प्पली-खुरासानयवानी-धान्यक-मुस्ता-हरिद्रा-मोचरस-पाठा-लवङ्ग–जातिपत्री–जातिफलेन्द्र-यव-हिङ्गु-सौवर्चल–सैन्धव–विड-दारुसिता–तमालपत्र–नागकेसर-कुलिञ्जन–बिल्व–शतपुष्पा-करञ्ज-मधुयष्टी–कुटजत्वग–भ्रकभस्म-लौहभस्मानि समानमानानि, शुद्धभङ्गाचूर्णं सर्वापेक्ष-यार्धम् । सर्वमिदं यथायथं विकुट्य प्रपिष्य च चूर्णं विधेयम् । तदिदं "बृहन्नायिकाचूर्णं" योग्येनानुपानेन प्रयोज्यम् ।

**कल्ये "काञ्चनपर्पटी" कवलिता चञ्चत्कणामाक्षिका**
**भद्रा वीर्यकरीति शास्त्रवचने विश्वस्य मासं भज ।**
**दर्पं कुक्षिगदस्य हन्ति वमनातीसारशोषापहा**
**हानिं लोकमलौजसो विदधती कालीव भक्तार्त्तिहा ॥ १२ ॥**

कल्य इति—काञ्चनपर्पटी=सुवर्णपर्पटीति प्रसिद्धा । सा च–पारदः शुद्धः १ पलम्, शुद्धगन्धकः १ पलम्, सुवर्णम् १ तोलम् । त्रयमेकत्र विमर्द्य, कज्जलीं विधाय, लोहदर्व्यां संगाल्य, आर्द्रगोमयोपरिविन्यस्तकदलीपत्रे निक्षिप्य, अपरेण कदलीपत्रेण निष्पीड्य निष्पाद्या । सा चेयं भद्रा=कल्याणरूपा वीर्यकरीति शास्त्रवचने विश्वासं कृत्वा मासं यावत् प्रातरेव कणामधुयुता भुक्ता सती कुक्षिगदस्य=ग्रहण्यादेर्दर्पम्=गर्वं हन्ति । वमनमतीसारं शोषरोगञ्चाप्यपहन्ति । किञ्च–लोकसंख्याका ये मलाः, त्रिविधा दोषा इति यावत्, यद्वा लोकस्य विश्वस्य सम्बन्धिनो ये मलाः, यद्वा–लोकानां=जनानां ये मलास्तेषामोजसः=

बलस्य हानिम् = नाशं विदधती=कुर्वन्ती सती काली=दुर्गेव भक्तार्त्तिहा=सेवकामयनाशिनी स्यात् । अत्र–कणाशब्देन जीरको गृह्यते । स च श्वेतो मृष्टश्चादेयः । ज्वरादौ तु कणा=पिप्पली । जीरकस्य मात्रा माषत्रयम् । पर्पट्यास्तु मात्रा रोगिवयोबलाभ्यादिकमपेक्षते । साधारणप्रयोगयोग्या मात्रा तु रक्तिद्वयमिता । क्वचित्तु–गुञ्जामारभ्य क्रमवृद्ध्या द्वादशगुञ्जापर्यन्तमपि दीयते । एतत्सेवने–क्षुधि तृषि च केवलं दुग्धमेवोपयुज्यते । पद्यमिदमपि चित्रकाव्यस्य चक्रबन्धाख्यो भेदः ।

चक्रबन्धविन्यासः



यकृज्ज्वरादिसम्बन्धसम्बद्धे ग्रहणीगदे ।
स्मृता शोणितसञ्चारकारिणी "लोहपर्पटी" ॥ १३ ॥

यकृदिति—यकृज्ज्वरकासश्वासादियुक्ते ग्रहणीरोगे " लोहपर्पटी " प्रदेया । सा चेयं ग्रहणीनाशं विधती शोणितसञ्चारं कृत्वा रोगिणं पोषयति । " लोहपर्पटी "–पारदस्य द्वौ भागौ, गन्धकस्य द्वौ भागौ, लोहभस्मन एको भागः–सर्वमेतत्संमेल्य निर्मातव्या । अत्र यो विशेषः स " रसेन्द्रसारसंग्रहे " द्रष्टव्यः ।

तत्र चेच्छ्वासकासादियोगो जागर्ति जन्मतः ।
तदा तदार्त्तिशमनी स्या"त्पञ्चामृतपर्पटी" ॥ १४ ॥

तत्रेति—ग्रहणीरोगे चेज्जन्मतः=आरम्भादेव विशेषः श्वासकासादियोगः स्यात्तर्हि तत्र "पञ्चामृतपर्पटी" प्रदेया। सेयं "यथा नाम तथा गुणाः" इति न्यायं चरितार्थयन्ती प्रायोऽसाध्यान्मृत्योर्मुखं प्रविष्टानपि जीवयतीति न प्रच्छन्नं वैद्यानाम्। ग्रन्थान्तरेषु पञ्चामृतपर्पट्या द्रव्यमानम्—गन्धकः ८ तो०, पारदः ४ तो०, लौहभस्म २ तो०, अभ्रकभस्म १ तो०, ताम्रभस्म ॥ तो०—इत्युक्तम्। रत्ननगरस्थवैद्यरामयशःशर्मसमर्पितमन्यदपि द्रव्यमानमिह निर्दिश्यते—पारदः ६॥ तो०, अभ्रकभस्म ६॥ तो०, लौहभस्म ६॥ तो०, ताम्रभस्म ६॥ तो०, गन्धकः १७ तो० इति।

घृतमधुभल्लातानां द्विपलं चाष्टौ पलानि तीव्रायाः।
कल्कीकृत्य तदन्तर्हिङ्गुलशुक्तिं निधापयेद्युक्त्या ॥ १५ ॥
तत्कुटजठरे रुद्ध्वा मन्दज्वलनैर्विपाचयेद्यामम्।
पश्चाद्ग्रहणीहरणः क्लीबोद्धरणो रसोत्तमो ग्राह्यः ॥ १६ ॥
स हि विविधैरनुपानैर्विविधा बाधाः प्रबाधते सिद्धः।
बलमनलं च विधत्ते वरमेतत्ते भणामि भैषज्यम् ॥ १७ ॥

घृतेति—त्रिभिः श्लोकैर्विशेषकम्। घृतं गव्यमादेयम्। भल्लातानां वृन्तच्छेदः कार्यः। त्रयाणामेषां पृथक्पृथक् पलद्वयं ग्राह्यम्। तीव्रायाः=पारसीकयवान्यास्तु अष्टौ पलानि। हिङ्गुलशुक्तिम्=अर्धपलमितं हिङ्गुलखण्डम्। कुटः=लघुघटो "हण्डी" इति प्रसिद्धः। तज्जठरे=तन्मध्ये। सर्वसंभारस्य कल्कं विधाय, तदर्धं हण्डिकायामावाप्य तदुपरि हिङ्गुलखण्डं निधाय, तदुपरि पुनरवशिष्टं कल्कं निक्षिप्य हण्डिकाया मुखं मुद्रयित्वा, मन्दाग्निना प्रहरमेकं पक्त्वा, रसोत्तमेष्वप्युत्तमः सोऽयं रसो "विशुद्धहिङ्गुल"-संज्ञको ग्राह्यः। अयं हि ग्रहण्या हरणः क्लीबानाञ्चोद्धरणो भवन्नपि नानानुपानैर्नानाबाधाः दूरीकरोतीति सिद्धः=अनेकशोऽनुभूतः। बलं जरणशक्तिञ्चापि वर्धयतीति मित्र! तुभ्यं श्रेष्ठमौषधं भणामि। गीतिश्छन्दः।

खण्डान्हिङ्गुलजांश्चतुष्पलमितानास्तीर्य मृत्खर्परे
भल्लातानपि तत्समान्प्रविकिरेत्तत्राष्टमानत्रयम्।
गव्याज्यं मधु चञ्चुतैलमिति तत्सर्वं क्रमान्निक्षिपे-
द्दत्त्वाग्निं तदधः पुनः परिपचेद्यावद्द्रवार्धक्षयः ॥ १८ ॥

पश्चादुल्मुकतो द्रवं प्रविरलं प्रज्वाल्य निःशेषये-
त्सिद्धान्हिङ्गुलखण्डकान्विचिनुयात्सन्त्यज्य भल्लातकान् ।
जातीपत्रफले लवङ्गमिति तत्तुल्यं रजो मिश्रये-
त्स्या "त्सिद्धग्रहणीकपाट" इति तं गव्येन दध्ना भजेत्१९॥

सेवा तस्य च मण्डलावधि मता मात्रा तु गुञ्जोन्मिता
दध्युक्तं क्षुधि केवलं सुवहुलं विभ्रद्वलं चोज्ज्वलम् ।
योगो मङ्क्षु मुमूर्षतामपि पुनः प्राणप्रदो दृश्यते
सोऽयं मे करुणाकरेण गुरुणा प्रीत्योपदिष्टः पुरा ॥ २० ॥

खण्डानिति—अत्रापि विशेषकम्। अत्रायं क्रमः—कस्मिंश्चिन्मृत्खर्परे विशुद्धहिङ्गुलजनितांश्चतुष्पलतुलितान्खण्डानास्तीर्य, भल्लातानपि चतुष्पलमितानेव हिङ्गुलखण्डानामुपरि विकिरेत्। ततो गव्यघृतमध्वेरण्डतैलानां त्रयाणामेषां प्रत्येकमष्टमानत्रयम्=कुडवत्रयमादाय तत्रैवोपर्युपरि क्रमशो निक्षिपेत्। तदनु खर्परं चुल्ल्यां निधाय घृतादिद्रवद्रव्यार्धक्षयावधि मन्दानलेन पचेत्। पश्चादवशिष्टं द्रवमुल्मुकेन ज्वालयित्वा निःशेषयेत्। किञ्चित्तीव्रे वह्नौ दत्ते तूल्मुकमन्तरैव स्वयमेव प्रज्वलनं भवति। पचनकाले भल्लातकधूमादक्षिणी रक्षणीये इति रहस्यम्। एवं सिद्धान्हिङ्गुलखण्डानाददीत कार्यार्थं न तु भस्मीभूतान्भल्लातादीन्। तत्र च जातीपत्रीजातीफललवङ्गानां चूर्णं खण्डसमानमेव निक्षिप्य सर्वं द्रव्यमैकध्यं प्रपिष्य कूप्यादौ भृत्वा रक्षेत्। सोऽयं " सिद्धग्रहणीकपाटः " इति प्रसिद्धो रसः सिद्ध्यति। तमेनं प्रातः सायं गव्ये दध्नि निक्षिप्य सेवेत। चत्वारिंशद्दिनानि सेवनमर्यादा। प्रबले ग्रहणीरोगेऽस्य मात्रा गुञ्जोन्मिता। तदन्यत्र तु यथार्हं मात्राह्रासः कार्यः। क्षुधि तृषि च केवलं दधि तक्रं वा, तच्च बहु पेयम्। अशक्तौ तु दध्ना सह चन्नान्नपोलिकापि देया। सोऽयं रसो ग्रहणीरोगेण मुमूर्षतामपि प्राणगतिं प्रणयति अवश्यञ्च फलं प्रददाति। करुणाकरेण गुरुणा=श्रीसागरमल्लशर्ममहाभागेनाऽयं योग उपदिष्टः। अत्र हिङ्गुलस्थाने रससिन्दूरखण्डाश्चेत्प्रयुज्येरंस्तर्हि प्रयोगस्य रामबाणत्वं स्यादित्यस्मदीयोऽनुभवः।

अथ हिङ्गुलप्रयोगप्रसङ्गात्तस्यान्यानपि विविधरोगेषूपकुर्वाणान्प्रयोगान्विवक्षुः कविवरो रसिकजनमनोहारिणीं गीतिकामेकामुपदिशति—

भीरु किमु पश्यसि गजचलने प्रिये शृणु मम वचनं ललने ।ध्रुवम्।
यवानीभल्लातकसर्पिःसुकल्के पक्वो बहुदर्पी ।

विशुद्धो दरदः स्याद्वरदः सदायं भिषजामादरदः ॥
ग्रहणीज्वरमन्दानलप्लीहजठरगुल्मानि ।
लयं यान्ति सरणानि वै सेवयितुः सामानि ॥
मानिनि प्रदिश हृदुच्छलने । भीरु किमु पश्यसि गजचलने २१

विपक्वः स रसो निम्बुरसे कुमारीलशुनार्द्रस्वरसे ।
तदानीं मधुना समजरणः सुसेव्यो विपदामुद्धरणः ॥
पथ्यं दधि तक्रं पयस्तेषामेकमवेहि ।
जम्भाङ्गूरकदाडिमीस्वादुफलान्यपि देहि ॥
देहिने रुजि मन्दज्वलने । भीरु किमु० ॥ २२ ॥

यवानीजीरयुगक्षारैः पङ्पणपटुपञ्चकसारैः ।
रसेनायोज्यार्द्रकवारा वटी कार्या चणकाकारा ॥
यदि तामिह मन्दानलः खादति कोमलवाणि ।
अशितानि स्वशितुं प्रभुः स्यान्नारूपाणि ॥
पाणिनाश्लिष्य सुखाकलने । भीरु किमु० ॥ २३ ॥

रसोऽसौ चन्द्रकुसुमजातीफलाफूकैलान्तःपाती ।
विषूचीसरणशताघाती भवेद्वा निखिलगदारातिः ॥
जठररुजास्वपि युज्यतां कसनश्वसनविदारि ।
नामैतस्य "रसामृतं" घोरातङ्कनिवारि ॥
वारिणा पिब शुक्रस्खलने । भीरु किमु पश्यसि गजचलने ॥ २४ ॥

भीर्विति--यवान्या भल्लातकस्य सर्षपस्य प्रत्येकं पलचतुष्टयमादेयम् । हिङ्गुलस्य तु पलम् । यवान्यादीनां कल्कं निष्पाद्य,तन्मध्ये हिङ्गुलं निधाय मन्दाग्निना विपाचयेत् । परिशेषे तूल्मुकेन सर्वं पूर्ववदादीपयेत् । तदेवं विशुद्धो वरदो दरदो भिषजामादरं ददाति । एतस्य सेवनेन ग्रहण्यादयो रोगा आमातिसारश्च नश्यन्ति । किञ्च हृदुच्छलने="दिलकी-धड़कन" इत्याख्याते रोगेऽप्ययं देयः । विपक्व इति--तदेव हिङ्गुलं शुद्धमन्यद्वा पलमितं निम्बु-कुमारी-लशुनार्द्रकाणां स्वरसे प्रत्येकमाढकमिते विपाच्य, तत्समानं जीरकचूर्णं संमेल्य मधुना सेवेत । क्षुधि तृषि च दधि, तक्रं, दुग्धं वा केवलं प्रयोज्यम् । अन्नसम्बन्धः

परिहर्तव्यः । अङ्गूरदाडिमादिफलान्यपि दातुं शक्यन्ते । योगेनानेनाग्निमान्द्यरोगः प्रशाम्यति । यवानीति—यवानीद्वयम्, जीरद्वयम्, स्वर्जिक्षारयवक्षारटङ्कणानीति क्षारत्रयम्; षड्षणसंज्ञानि पिप्पलीपिप्पलीमूलचव्यचित्रकनागरमरिचाणि, सैन्धवशाकम्भरीयसामुद्रविडसौवर्चलानि पञ्च लवणानि, लौहभस्म, विशुद्धहिङ्गुलञ्चेति सर्वं प्रपिष्यार्द्रकस्वरसेन चणकवद्वटी विधेया । तां यदि मन्दानलः कश्चित्खादेत्तर्हि स नानारूपाणि भोजनानि सम्यग्भक्षितुं प्रभुर्भवति । पाणिनाऽऽश्लिष्येति मम हस्तेन हस्तं मेलय । हर्षाधिक्ये व्यवहारोऽयम् । रस इति—विशुद्धं हिङ्गुलं कर्पूरलवङ्गजातीफलाहिफेनैलाभिः समं पिष्टं "रसामृतं" नाम महदौषधं सिद्धयति । विषूच्यां नानाविधेष्वतिसारेषु जाठररोगेषु कासश्वासादिषु चायमवचार्यते । शुक्रस्खलने=पुंसां प्रमेहे स्त्रीणां सोमरोगे च वारिणा सेव्यते । गानानुकूल्येन बद्धपदा गीतिरियम् । अत्रायं क्रमो बोद्धव्यः—प्रथमं प्रत्येकं पञ्चदशमात्राकं पादद्वयं ध्रुवसंज्ञकमुच्चारयेत् । ततस्तावन्मात्राकमेव पादचतुष्टयमुच्चार्य दोहाच्छन्दः पठेत् । पुनश्च पञ्चदशमात्राकमेकं पादं पठित्वा ध्रुवसंज्ञकं पादद्वयमावर्तयेदित्येवमेक आभोगः पूर्णो भवति । भूयश्च तमेव क्रमं कुर्यात् । अत्र—मीरु, गजचलने, प्रिं कोमलवाणि, सुखाकलने—इत्येतानि सम्बुद्ध्यन्तपदानि ।

कैरातः कुरुविन्दकस्त्रिकटुकं कट्वी कलिङ्गः समाः
द्वौ भागौ तु कृशानुतःपुनरिमे स्युः कौटजात्षोडश ।
पीतं शीतगुडोदकैर्ग्रहणिकासंचूर्णकं चूर्णकं
स्यात्पाण्डुज्वरकामलातिसृतिरुक्पित्तप्रमेहादिभुक् ॥ २५ ॥

कैरात इति—कैरातः प्रसिद्धः । कुरुविन्दकः=मुस्तकः । त्रिकटुकम्=शुण्ठीमरिचपिप्पल्यः । कट्वी=कटुकी । कलिङ्गः=इन्द्रयवः । समाः=प्रत्येकमेकैकभागिकाः । कृशानुतः=चित्रकाद्वौ भागौ । कौटजात्=कुटजत्वचः पुनरिमे भागाः षोडश स्युः । एतच्चूर्णकं शीतेन गुडजलेन पीतं सङ्ग्रहणीरोगस्य संचूर्णकं भवति, तथा पाण्ड्वादीनां भुक्=भोजकं नाशकमिति यावद्भवतीति ।

भज वत्सकरसपङ्कं सरणातङ्कं यदीहसे रङ्कम् ।
पिब मथितं निःशङ्कं योगमिहान्यं ब्रवीमि भोः कङ्कम् ॥ २६ ॥

भजेति—वत्सकः=कुटजत्वक् । तद्रसपङ्कं भज यदि सरणातङ्कम्=ग्रहण्यादिरोगं रङ्कम्=दरिद्रं, लक्षणया विनष्टं कर्तुमीहसे । तथा निःशङ्कं मथितम्="मठा" इति प्रसिद्धं तक्रं पिब । इह=ग्रहणीविषयेऽन्यं कं कं योगं ब्रवीमि । बहवो योगाः सन्ति परं तुभ्यं

सारभूता दृष्टोपदिष्टा इति भावः। अथ वत्सकरसपक्वप्रक्रिया—कुटजत्वचं चतुर्गुणे जले विपाच्य चतुर्थांशशेषं तत्कषायं वस्त्रेण गालयित्वा पुनः पाकः कार्यः। घनतामापन्नस्य तस्य वटिका बन्धव्या। तासां तक्रादिभिरुपयोगः। अत्रानुप्रासश्छेकोदरः। गीतिश्छन्दः।

इति ग्रहण्यधिकारः

—:०:—

## अथार्शोऽधिकारः

अथातिसारग्रहण्यर्शसां परस्परानुबन्धित्वादतिसारग्रहण्यनन्तरमर्शश्चिकित्सितं विवक्षुः सर्वभूतमैत्रीपरः कविवरोऽर्शोऽनुत्पत्तये प्रथममेवेतिकर्तव्यतां निर्दिशति—

मित्रं देवं स्मरन्नित्यं भ्रमन्नित्यं वनादिषु।
मार्जयन्गुदचक्रं च पायुजैर्न निपीड्यते॥ १॥

मित्रमिति—नित्यम्=प्रत्यहं मित्रनामकं देवं स्मरन्, यद्वा-इत्यमिति छित्वा एतं योग्यमित्यम्=भ्रामण्यमिति मित्रविशेषणत्वेन योज्यम्। मित्रस्मरणञ्च "पायोर्मित्रम्" इति शारीरे सुश्रुतोक्तेस्तस्य विराजः पायुप्रदेशजातत्वेन तदधिष्ठातृत्वेन च पायुजरोगविनाशतत्तद्रक्षणे प्रयोजकम्। भ्रमन्निति—वनादिषु भ्रमणेनाभिवलद्वयोरनुलोमनञ्च भवति। ततश्च गुदजोत्पत्तिसंभावनापि न। मार्जयन्निति—गुदस्थवलिषु विरुद्धभोजनादिभिरपानवायोः कोपेन मलातिसञ्चयच्छेदभावाद्गुदजानामुत्पत्तिर्भवति। ततश्च—प्रत्यहं पुरीषोत्सर्गकालेऽङ्गुल्यग्रभागे वालुकामृदं विलिप्य तया गुदचक्रमार्जनेन तस्य संप्राप्तिनाशकतया सद्योजाताः पायुजा विनश्यन्ति। पायुजा नाम गुदवलित्रये समुत्पन्नान्यर्शांसि यानि "मस्से" "बवासीर" इत्यादिनामभिर्बोध्यन्ते।

खादन्हरीतकीपाकं कन्दशाकं समाहरन्।
पथ्यामश्नन्गुडैः शाकं नाकं जयति नाङ्कुरम्॥ २॥

खादन्निति—हरीतकीपाकः="हर्रे का मुरब्बा" इति प्रसिद्धः, सचापणे तद्विक्रेतृभ्यः प्राप्यते। स्वयं निर्मितश्चेत्—आर्द्राणि हरीतकीफलानि कलिकाचूर्णजले स्फटिकाजले वोत्स्वेद्य सितापाके निमज्जयेत्। तेन पाकः सम्पत्स्यते। कन्दः=सूरणकन्दः। ना=पुरुषः कम्=वातिकादिषु मध्ये कतमदङ्कुरम्=अर्शो न जयत्यपि तु सर्वविधमेवेति योजना। अत्र—अनुप्रासोऽलङ्कारः।

**सखे ! दुर्नामदुःखानि दरीकर्तुं यदीच्छसि ।**
**तदा वृष्यं विबन्धघ्नं मृद्वीकापायसं पिब ॥ ३ ॥**

सख इति—दुर्नामेत्यर्शसो नामान्तरम् । वृष्यम्=शक्तिजननम् । विबन्धघ्नम्=मलावरोधनाशकम् । मृद्वीकापायसम्="मुनक्का की खीर" इति प्रसिद्धो मृद्वीकामिश्रितदुग्धपाकविशेषः । कवेरस्य प्रायः सर्वाण्येव पद्यान्यनुप्रासच्छटाविच्छुरितानि सन्तीति न भूयोभूयस्तत्प्रपञ्चनं क्रियते ।

**रसाञ्जनं रसैः पिष्टं सहस्रसुमपत्रजैः ।**
**स्रवच्छोणितधाराणां दुर्नाम्नां दर्पदारकम् ॥ ४ ॥**

रसाञ्जनमिति—रसाञ्जनम्=" रसोंत " इति ख्यातम् । सहस्रसुमम्="गुलहजारा" "गैन्दा" इति च प्रसिद्धं तत्पत्रजातै रसैः पिष्ट्वा रसाञ्जनस्य वटयो विधेयाः । स्रवदिति—"खूनीबवासीर" इति प्रसिद्धान्यर्शांस्यनेन योगेन नश्यन्ति ।

**रसाञ्जनं सकुटजं सम्पिष्य वटकीकृतम् ।**
**अतिसारग्रहण्यर्शःप्रमेहप्रदरान्तकृत् ॥ ५ ॥**

रसाञ्जनमिति—कुटजस्य "कूडेकी छाल"इति प्रसिद्धा त्वग्ग्राह्या ।

**हारशृङ्गारपत्राणि पिष्ट्वा द्वित्राणि खल्वके ।**
**खादेन्मरिचमिश्राणि दुर्नामविनिवृत्तये ॥ ६ ॥**

हारेति—हारशृङ्गारः="हारसिंगार" इति प्रसिद्धः । द्वित्राणि=द्वे त्रीणि वेति यथारुचि विकल्पः । मरिचान्यपि द्वित्राण्येव ।

**पथ्यानिम्बमहानिम्बफलमज्जरसाञ्जनम् ।**
**अजस्रस्रवदस्रार्शोहिंस्रं यस्त्रैस्त्रिभिर्हठात् ॥ ७ ॥**

पथ्येति—पथ्या=हरीतकी, निम्बः=प्रसिद्धः, महानिम्बः="बकायन" इति प्रसिद्धः । त्रयाणामेषां फलमज्जानो ग्राह्या । सर्वेषां च वटयः कार्याः । त्रिभिर्यस्नैः=त्रिभिरेव दिनैरजस्रम्=निरन्तरम्, स्रवत्=निर्यदस्रम्=रुधिरं येभ्यस्तेषामर्शसां हिंस्रम्=नाशकं भवति । अत्र दिनत्रयोक्तिः प्रायस्तावतैव हितं भवतीति प्रदर्शनाय । हिताभावे तु दीर्घकालप्रयोगोऽपि न दुष्यति ।

**सनामुकी मिषिद्राक्षा प्रत्येकं कोलसंमिताः ।**
**क्वथिता धर्षयन्त्यर्शो विबन्धं शङ्कतामपि ॥ ८ ॥**

सनामुकीति—सनामुकी="सनाय" इति ख्याता, मिषिः=शतपुष्पा । कोलसम्मिताः=अष्टमाषकमिताः षण्माषकमिता वा । क्वथितास्ततश्च पीताः सत्यः । शकृतां विवन्धम्=मलावरोधम् । धर्षयन्ति=नाशयन्ति ।

जलैर्महाबलाकल्कं प्रातर्यदि पिबेन्नरः ।
न स्युराक्रमणे शक्तास्तस्यदुर्नामदस्यवः ॥ ९ ॥

जलैरिति—महाबला="सहदेई" इति प्रसिद्धा । तस्येत्यस्यानन्तरमुपरीति शेषः । दुर्नामदस्यवः=दुर्नामान्येव दस्यवः=लुण्टाकाः ।

सहस्रसुमबीजानां सोषणानां वटीश्चरेत् ।
दुर्नामदर्पनाशेप्सुर्नरो नवदिनावधि ॥ १० ॥

सहस्रेति—समरिचानां "गुलहजारा" इति प्रसिद्धस्य बीजानां वटीश्चरेत्=कुर्याद्भक्षयेच्च । नवदिनानि सेवनमर्यादा ।

पलं पलङ्कषापिण्डं गोक्षीरे त्रिगुणे क्षिपेत् ।
चालयन्ननलैर्मन्दैः पक्त्वा तत्सान्द्रतां नयेत् ॥ ११ ॥
तस्मिञ्छुष्कस्य पुनर्बद्ध्वा वटीर्बदरसन्निभाः ।
भुञ्जीत शीतनीरेण पीडितो रुधिरार्शसा ॥ १२ ॥

पलमिति—पलङ्कषा=गुग्गुलुस्तत्पिण्डम् । पलम्=पलप्रमाणम् । चालयन् दर्व्यादिना । सान्द्रताम्=गाढताम् । पलङ्कषाशब्दः पुंसि स्त्रियां च ।

पीताभया सार्धमाषा खर्वा पथ्यापि तावती ।
फरफ्यूनजरावन्दसंज्ञौ सार्धैकमाषकौ ॥ १३ ॥
द्रेकाबीजानि तावन्ति कृष्णा पथ्या तु कार्षिकी ।
फलमज्जा मृगादन्या ऐलेयं चैव गुग्गुलुः ॥ १४ ॥
पृथक् त्रिकार्षिका एते कर्षः कहरवाभिधः ।
सहस्रसुमपत्रोत्थै रसैः पिष्ट्वा पुटेदिदम् ॥ १५ ॥
पुनस्तद्धटिता वट्यो दुर्नामान्तकारिकाः ।
अनुभूता भृशं भद्रं भिषजां भावयन्ति ताः ॥ १६ ॥

पीतेति—चतुर्भिः कलापकम् । पीता=पीतवर्णाभया=हरीतकी, खर्वा पथ्या="छोटी हरड़" इति ख्याता, फरफ्यून-जरावन्देति द्वयं यावनमौषधम् । द्रेका=महानिम्बः "बका-

यन" इति प्रसिद्धस्तद्बीजानां मज्जा ग्राह्यः। चतुर्णामेषां प्रत्येकं सार्धैकमाषो ग्राह्यः। कृष्णा पथ्या="कालीहरड़ै" "काबुली हरड़ै" इति प्रसिद्धा, सा च बृहती भवति, तस्यास्तोलो ग्राह्यः। मृगादनी=इन्द्रवारुणी, तस्याः फलस्य मज्जा, ऐलेयम्="एलिया" इति प्रसिद्धः कुमारीस्वरसोद्भूतः कृष्णच्छायो द्रव्यविशेषः। गुग्गुलुः=प्रसिद्धः। एतेषां पृथक् कर्षत्रयम्। कहरवा=अनेनैव नाम्ना प्रसिद्धः पीतच्छायो रत्नभेदः। स च तोलकमित आदेयः। सर्वमिदमौषधजातं सहस्रसुमपत्ररसैः पिष्ट्वा सार्धद्विप्रस्थवन्योपलैः परिपुटेत्। स्वाङ्गशीतस्य तस्य जलेनैकैकमाषमिता वटयो विधेयाः। भिषजां भद्रम्=यशोरूपं भावयन्ति=जनयन्ति।

**कोलं मल्लात्ततो गन्धात्तोलं, तोलञ्च तालकात्।**
**तावती चैव कायस्था सर्वं संमुद्य मूषयोः॥ १७॥**
**होरापादं विपक्तव्यं चुल्ल्यां मन्दकृशानुना।**
**द्विकर्षाज्येन तद्वर्ती स्पर्शात्पायुजपातनी॥ १८॥**

कोलमिति—युग्मम्। मल्लात्="शंखिया" इति प्रसिद्धात् कोलम्=षण्माषाः, गन्धकाद्धरतालाच्चैकैकस्तोलः। कायस्था=हरीतकी, सापि तोलकमिता। सर्वमिदं प्रपिष्य, मृच्छरावद्वये संमुद्य, शरावसम्पुटं चुल्ल्यां निधाय मन्दमन्देन वह्निना पञ्चदश मिनिटान्यावद्विपचेत्। ततस्तोलकद्वयमितेन घृतेन तद्वर्तीं विधाय घृतेन गुदं किञ्चिदभ्यज्य वर्ती प्रवेशनीया। विधावेवं कृते गुदजा बहिरायान्ति पुनश्च निपतन्ति। कष्टप्रदोऽयं प्रयोगः, किन्तु मूलोन्मूलनः। बहिरागमनानन्तरं वक्ष्यमाणः प्रलेपः कार्यः।

**भङ्गाया भक्षणं पानं बन्धनञ्च गुरूक्तितः।**
**सर्वार्शसां शमोपायं कथयामि तव प्रिय!॥ १९॥**

भङ्गाया इति—अयि प्रियार्शस! तव सर्वार्शसां शमोपायं कथयामि, शृणु—धौतशुद्धाया भङ्गायाः सितया सह केवलाया वा भक्षणं, शिलायां पिष्टाया जले गालितायाश्च तस्याः पानं विधेहि। यद्वा—गुरूक्तितोऽर्शसामुपरि तस्या बन्धनं कुरु। गुरूक्तिस्त्वियम्—भङ्गा, भृष्टहरीतकी, भृष्टसौभाग्यम्, शुण्ठी, मरिचञ्चेति सर्वाणि समानि जलेन मिश्रितानि कदुष्णीकृतानि पटेन पायौ बध्नीयादिति।

**तुत्थमाम्रनिशा हौणी वचेति सकलं समम्।**
**पानीयेनैव सम्पिष्य प्रलिम्पेद्गुदजोपरि॥ २०॥**
**आच्छाद्यैरण्डजैः पत्रैर्बध्नीयात्साधु बुद्धिमान्।**
**पतन्ति पायुजास्तेन सप्ताहान्नात्र संशयः॥ २१॥**

तुत्थमिति—तुत्थम्="नीलाथोथा" इति प्रसिद्धम्, तच्च भ्रष्टमादेयम्। आम्रनिशा="आमीं हलदी" इत्याख्याता। हौणी=हूणदेशोद्भवा वचा "खुरासानीवच" इति प्रसिद्धा। पूर्वं मलवर्तीप्रवेशाद्गुदजानां वहिर्निष्कासनप्रकारोऽभिहितः, अयं पुनर्वहिरायातानां तेषां पातनविधिरुपदिश्यते। मध्ये भङ्गाप्रयोगाभिधानन्तु स्वातन्त्र्येण प्रयुक्ताया अपि तस्या अत्रापि प्रयोगे सेव्यताकथनाय।

महन्मूलकमुत्कीर्य तत्रैतानि निधापयेत्।
चासकूर्निम्बपर्णानि कर्पूरश्च रसाञ्जनम्॥ २२॥
पुटपाकप्रकारेण पचेत्तन्मन्दवह्निना।
पिष्ट्वा समूलकं पश्चाद्बद्ध्वा बदरभा वटी॥ २३॥
प्रातः सायं गिलेन्नित्यं जलैश्चेत्प्रयतोऽर्शसः।
अर्शांसि तस्य नश्यन्ति नूनमस्य प्रभावतः॥ २४॥

महदिति—महति मूलके लवित्रादिनोत्कीर्य गर्तो विधेयः। चासकूः=अनेनैव नाम्ना प्रसिद्धं बीजाकारं किञ्चन यावनमौषधम्। सर्वाण्यौषधानि प्रपिष्य मूलकगर्ते प्रपूर्य, तन्मुखं मूलकखण्डेनैवाच्छाद्य, मूलकं पटमृल्लिप्तं विधाय, वह्नौ विपचेत्। ततश्च वट्यो विधेयाः।

द्विनिम्बफलमज्जानौ सगुग्गुलुरसाञ्जनौ।
सैलेयमरिचौ खल्वे पिष्ट्वा सस्वर्णगैरिकौ॥ २५॥
कोलोपमा वटीः कृत्वा वायसीमूलजैं रसैः।
द्विसन्ध्यमद्यात्पथ्याशी मुमुक्षुर्गुदजामयात्॥ २६॥

द्वीति—निम्बो महानिम्बश्चेति द्वौ निम्बौ, तयोः फलमज्जानौ, गुग्गुलुरसाञ्जनयुतौ, ऐलेयेन="एलिया"इति ख्यातेन मरिचेन च सहितौ, स्वर्णगैरिकेण="सोनागेरूँ"इति प्रसिद्धेन युक्तौ च खल्वे पिष्ट्वा वायस्याः="कौआ डोड़ी" इति ख्यातायाः काकजङ्घायाः मूलजै रसैर्वटीः कुर्यात्। द्विसन्ध्यम्= प्रातः सायञ्च। पथ्याशीति-पथ्यमत्राग्निबलवृद्धिकरं वातानुलोमनञ्च बोध्यम्।

यदि विदलितुमभिलषसि गुदजगद-
मभिनवघृतसखसिततिलमुपचर।
निपिब कुटजशृतमिह च विकृतनर!
किमपि चणकचयकवलनमनुकुरु॥ २७॥

यदीति—अयि विकृतनर=अर्शोगदातुर ! नवनीतघृतयुतान् श्वेततिलान्भक्षय । तेषां श्वेतत्वं तु धावनाद्भविष्यति । यद्वा—कुटजक्वाथं पीत्वा तदनु भृष्टचणकानां कवलनं कुरु । अत्रपद्ये अचलधृतिनामकं छन्दः, "द्विगुणितवसुलघुरचलधृतिरिह च" इति लक्षणात् ।

**कृता वटी सौररसाञ्जनाभ्यां लेपाशनाभ्यां गुदजेषु शस्ता ।**
**प्रसह्य तिक्तेन्द्रयवस्य चूर्णं स्रुतिं निगृह्णाति मलास्रयोश्च ॥ २८ ॥**

कृतेति—सौरः="कल्मीशोरा" इति ख्यातः । इन्द्रयवो द्विविधस्तिक्तो मधुरश्च, तत्र-तिक्तेन्द्रयवस्य चूर्णेन मलस्य स्रुतिः=अतिसारः, अस्रस्य स्रुतिः=अर्शःसु रुधिर-निर्गमश्च निगृह्यते ।

**बब्बूलपुष्पाणि सशर्कराणि रक्तस्रुतेराशु निवारकाणि ।**
**तथैव लीढानि सिताघृताभ्यां चूर्णानि दन्तावलकेसरस्य ॥ २९ ॥**

बब्बूलेति—बब्बूलः=एतन्नाम्नैव प्रसिद्धो वृक्षः । दन्तावलकेसरः=नागकेसरः ।

**ससौरकर्पूररसाञ्जनाख्यैः पूर्णोदरं वै पिचुमन्दसारैः ।**
**मूलं विपक्वं पुटपाकरीत्या दुर्नामदुःखं दलयत्यवश्यम् ॥ ३० ॥**

ससौरेति—पिचुमन्दः=निम्बस्तस्य सारैः=फलमज्जभिः। महन्मूलकमुत्कीर्य तत्र कल-शोरकर्पूररसाञ्जननिम्बफलमज्जानो भर्तव्यास्ततः पुटपाकरीत्या मूलकं पक्त्वा वटीर्विधाया-र्शस्यवचारयेत् ।

**हे प्राणेश्वरः ! वैद्य ! मेऽद्य जनको दुर्नामदुःखाकुलो**
**दध्ना पायय हे सखे ! शिखरिणं, शैलोऽपि किं पीयते ।**
**रेरे मित्र ! मयूरकं प्रकथये, वर्ही न भक्ष्यो नृणां**
**रेरे मर्कटिकां ब्रवीमि, विदितः सम्प्रत्यपामार्गकः ॥ ३१ ॥**

हे इति—कस्यचिद्रोगिपुत्रस्य वैद्यस्य च वाकोवाक्यमिदम् । रोगिपुत्रः—प्राणे-श्वर ! वैद्य ! अद्य मे जनको दुर्नाम्नां दुःखेनाकुलो वर्तते, किञ्चिदौषधं ब्रूहि । वैद्यः—हे सखे ! दध्ना सह शिखरिणं पायय । आर्द्रस्य शिखरिणः कल्कं दाध्नि संनीय पिबेच्छु-ष्कस्य तु चूर्णम् । रोगिपुत्रः—(अपामार्गार्थे प्रयुक्तं शिखरिपदं पर्वतपरं मन्वानः) महा-शय ! किं शैलोऽपि क्वचित्पीयते ? वैद्यः—मित्र ! नाहं शैलं ब्रवीमि, अहं तु मयूरकं प्रकथयामि। रोगिपुत्रः—(मयूरकपदमपि मयूरपक्षिपरतया योजयन्) भगवन् ! नृणां विशे-षतोऽस्मादृशानां द्विजातीनां तु वर्ही भक्ष्य एव न । वैद्यः—भो ! अन्यत्र प्रयुक्तं पदम-न्यत्र योजयसि । नाहं मयूरं ब्रवीमि, अहतु मर्कटिकां ब्रवीमि । रोगिपुत्रः—(भूयसां

पर्यायाणां प्रयोगादपामार्गं परिचिन्वानः संप्रहृष्टः ) हन्त ! संप्रति मया भवदुक्तोऽपामार्गो विदितः । तत्तथैव करिष्यामि, यामि, स्वस्ति तेऽस्तु । अत्र-श्लेषमूला वक्रोक्तिरलङ्कारः । "यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते" इति तल्लक्षणात् ।

कर्षान्पञ्च महानिम्बपिचुमन्दफलास्थिभिः ।
त्रींस्तांस्त्वाभादलाश्वत्थकन्यामांसरसाञ्जनैः ॥ ३२ ॥
तौ द्वौ जीरेभपुष्पाभ्यामिति सर्वं विचूर्णयेत् ।
विभाव्य कुडवोन्मानै रसैर्मूलपलाण्डुजैः ॥ ३३ ॥
बद्ध्वा वटीः शाणमाना भक्षयेन्मण्डलावधि ।
दुर्नाम्नां मूलमुत्कर्तुमिच्छा स्याद्यस्य रोगिणः ॥ ३४ ॥

कर्षानिति—महानिम्ब-निम्बफलानां मज्जानौ पृथक्पञ्चकर्षमितौ, आभा=बब्बूलस्तस्य दलानाम्, आश्वत्थस्य=पिप्पलफलस्य, कन्यामांसस्य=घृतकुमारिकारसस्य, रसाञ्जनस्य च प्रत्येकं कर्षत्रयम् । श्वेतजीरकस्य कर्षद्वयं कर्षद्वयमेव चेभपुष्पस्य=नागकेसरस्य सर्वमेतं संभारं यथायथं विचूर्ण्य, प्रत्येकं कुडवोन्मानैर्मूलकरसैः पलाण्डुरसैश्च भावयित्वा त्रिचतुर्माषकमिता वटीः कुर्यात् । यस्यार्शसस्य दुर्नाम्नां नामैव लोपयितुमिच्छा भवेत्स एता वटीर्मण्डलावधि=चत्वारिंशद्दिनानि यावत्सेवेत ।

पायुभवान्पातयितुं दीपयितुं चाप्यनलम् ।
कुक्षिगदान्घातयितुं स्यादभयारिष्टमलम् ॥ ३५ ॥

पाय्विति—पायुभवान्=अर्शांसि पातयितुमनलम्=जाठरं वह्निं दीपयितुं. कुक्षिगदान्=जलोदरग्रहण्यादीन्घातयितुमभयारिष्टमलम्=समर्थं स्यात् । " अभयारिष्टनिर्माणस्य संक्षिप्तो विधिर्निर्दिश्यते—हरीतक्या अर्धप्रस्थः, आमलकस्य प्रस्थः, कपित्थस्य दशपलानि, इन्द्रवारुण्याः पञ्चपलानि, विडङ्गपिप्पलीलोध्रमरिचैलवालुकानां प्रत्येकं द्वेपले । सर्वमेतच्चतुःषष्टिप्रस्थमिते ( ६४ सेर ) जले निक्षिप्य विपचेत्, चतुर्थांशमवशेष्य, पटपूतं विधाय, तत्र गुडस्य द्विशतपलानि समावाप्य, घृतभाजने निधाय, भाजनस्य मुखं संमुद्र्य, पक्षमेकमुपेक्ष्य पश्चाद्यथाबलं प्रयोजयेत । इह विशेषो जिज्ञासितश्चेद्भैषज्यरत्नावलीप्रभृतिग्रन्थान्तरं द्रष्टव्यम् । माणवकाक्रीडमिदं छन्दः ।

चिञ्चाद्रिनिम्बनिर्गुण्डीभङ्गानीलीनवच्छदैः ।
वाष्पस्वेदः स्मृतैरेभिर्हितो वातकफार्शसि ॥ ३६ ॥

चिञ्चेति—वातिके श्लैष्मिके चार्शसि चिञ्चा="इमली" इति ख्याता, निम्बो महानिम्बश्चेति द्वौ निम्बौ, निर्गुण्डी="संभालू" इति प्रसिद्धा, भङ्गा, नीली="नील" इति ख्याता यस्या वस्त्ररञ्जनोपयोगी रागो निर्मीयते । सर्वेषामेषां नूतनपत्राणि निष्क्वाथ्य, तद्वाष्पैः खट्वायामासन्दिकायां वा स्थितस्य रोगिणो गुदे स्वेदो देयः ।

शुक्लमृत्तुत्थसिन्दूरैः सस्नेहैरुपलेपनम् ।
तुत्थेनैकेन वा दध्ना कर्षत्यर्शःप्रकर्षताम् ॥ ३७ ॥

शुक्लेति—शुक्लमृत्="मुलतानी मिट्टी," "मेट" इति प्रसिद्धा, तुत्थसिन्दूरौ च । त्रीण्येतानि तैलेन सह प्रपिष्य साधितं मलहरमर्शस्सु मर्दयेत् । यद्वा—केवलं तुत्थमेव गुञ्जाद्वयोन्मितं दध्नि संनीयार्शःसु लेपो विधेयः । स चायं लेपोऽर्शसां प्रकर्षताम्=आधिक्यं, कर्षति=विकृष्य नाशयति ।

सद्योदग्धकुपीलोर्धूपनमर्शःप्रशान्तये यद्वत् ।
कपिवृषदंशपुरीषैः प्रथते दुर्नामदान्तये तद्वत् ॥ ३८ ॥

सद्य इति—कस्मिंश्चिन्मृत्खर्परे ज्वलदङ्गारान्निक्षिप्य, तदुपरि सच्छिद्रमन्यत्खर्परमधोमुखं निधाय, उपरितनखर्परच्छिद्रद्वारेण कुचीलचूर्णमङ्गारेषु प्रक्षिप्य, छिद्रोपरि गुदं संस्थाप्य ततो निर्गच्छन्तं धूमं गृह्णीयात् । एवमेव—कपेः=वानरस्य, वृषदंशस्य=मार्जारस्य च पुरीषेणापि धूमो ग्राह्यः । योगत्रयेणानेनार्शांसि शाम्यन्ति । गीतिः ।

पलं खूनखरावाख्यं तद्वत्कहरवाभिधः ।
रसाञ्जनारिष्टबीजकुडवं तरुणीरसैः ॥ ३९ ॥
प्रपिष्य हरिमन्थाभा वटिका भक्षयेज्जलैः ।
अनुभूताः पायुजेषु "शोणितार्शोनिषूदिनीः" ॥ ४० ॥

पलमिति—खूनखरावा=अनेनैव नाम्ना प्रसिद्धं "दम्मुल अखवेन" इत्यपरपर्यायं किञ्चन यावनं द्रव्यम्, कहरवा=नाम्नानेनैव प्रसिद्धं पीतच्छायं किञ्चन रत्नम्—द्वयमेतत्पृथक्पलप्रमाणं ग्राह्यम् । रसाञ्जनस्य कुडवम्, अरिष्टस्य=निम्बस्य बीजानां च कुडवम् । सर्वमेतत्तरुण्यर्केण प्रपिष्य चणकप्रमाणा वटी विधेया । सेयं, "शोणितार्शोनिषूदिनी—" नाम्ना प्रसिद्धाऽर्शोरोगेऽनुभूता । भक्षणे समुपयोगः ।

इत्यर्शोऽधिकारः ।

---

## अथाग्निमान्द्याद्यधिकारः



अथार्शश्चिकित्सानन्तरमर्शःकार्यत्वादग्निमान्द्यादीनां चिकित्सितमाह । तत्राग्निमान्द्याजीर्णविषूचिकालसकविलम्बिकानां मिलितं चिकित्साक्रमं कथयन्नपि रोगानीकमूलस्याजीर्णस्यैव प्रथमं चिकित्सितमभिधत्ते—

**आमेऽजीर्णे वमनं कुरुत विदग्धस्य लङ्घनैः शमनम् ।**
**स्वेदनमथ विष्टब्धे लवणजलं वा पिबेत सर्वत्र ॥ १ ॥**

आमेइति—आमविदग्धविष्टब्धरसशेषदिनपाकिप्राकृतेतिषड्भेदभिन्नेषु पशुवदप्रमाणभोजनतः समुत्पन्नेष्वजीर्णेष्वामविदग्धविष्टब्धानामेव मुख्यत्वं विसूच्यलसकविलम्बिकाजनकत्वञ्चेति चेद्गुरुस्तोत्क्लेदशोथोद्गारादियुतमामाजीर्णं प्रतीयेत तर्हि तत्र वमनं विधेयम् । भ्रमतृण्मूर्च्छासधूमाम्लोद्गारदाहादियुक्तस्य विदग्धाजीर्णस्य तु लङ्घनैः=भोजननिवृत्तिरूपैः शमनं कर्तव्यम् । अत्र-शीतपानीयपानमपि हितकरम्, " अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति" इत्युक्तत्वात् । शूलाध्मानमलवाताप्रवृत्त्यादिसहिते विष्टब्धे तूष्णपानीयाप्लुतनिष्पीडितवस्त्रखण्डेन लवणादिना वोदरस्य स्वेदनं कर्तव्यम् । यद्वा–सर्वत्राजीर्णेषु लवणजलम्=सलवणमुष्णोदकं हे अजीर्णिनः ! यूयं पिबेत । अत्र गीतिश्छन्दः ।

**निम्बुकसत्त्वं सोडा मापकयुगलं क्रमाज्जले क्षिप्त्वा ।**
**जातोत्फणनं पिब रे "सोडावारि" ह्यजीर्णसंहारि ॥ २ ॥**

निम्बुकेति—कस्मिंश्चित्काचपात्रे पलमध्यर्धपलं वा जलं निक्षिप्य तत्र पूर्वं मापकद्वयमितं निम्बुकसत्त्वं निक्षिप्य मापकद्वयमितमेव "सोडा" इति प्रसिद्धं क्षारविशेषं निक्षिपेत् । निक्षेपसमकालमेवोद्गतफेनं तत्सोडावारि "सोडावाटर" इति प्रसिद्धं क्षिप्रमेव प्रपिबेत् । इच्छाचेन्मधुरप्रियैः सितापि प्रक्षेप्या । संप्रति सिद्धमेव सोडावारि " सोडावाटर " ( Sodawater ) इति प्रसिद्धं काचकूपीभृतं यत्रतत्रापणेषु प्राप्यते, यद्धि पाश्चात्त्यानुकारिणो बाबूनामकजीवाः प्रत्यहं सानन्दं पेपीयन्ते । मधुरं तु तत् "लेमनेड–" संज्ञया प्रचरति ।

**ससितं निम्बुकनीरं मिश्रेयार्कप्रकुञ्चके लुलितम् ।**
**तदिति "सिकञ्जी"संज्ञं सर्वाजीर्णप्रशान्तये ब्रूमः ॥ ३ ॥**

ससितमिति—मिश्रेया=शतपुष्पा,तस्या अर्कस्य प्रकुञ्चके=पलोन्मिते भागे निम्बुकरसं सिताञ्चोचितमानेन निक्षिप्य "सिकञ्जी" इति प्रसिद्धं तदजीर्णरोगे पेयम् ।

विश्वधूलिरथसामिसैन्धवा स्यादजीर्णरिपुरुष्णवारिणा ।
सैव शैवरजसा समन्विता शश्वदीडितगुणानुलोमनी ॥ ४ ॥

विश्वेति—सामिसैन्धवा=अर्धांशसैन्धवसहिता विश्वधूलिः=शुण्ठीचूर्णमुष्णेन वारिणा सह सेवनादजीर्णरिपुः=अजीर्णरोगहन्त्री स्यात् । सा=विश्वधूलिरेव, शिवाया इदं शैवं तेन रजसा=हरीतकीचूर्णेन समन्विता सती शश्वदीडितगुणा=प्रशस्तगुणानुलोमनी=अपानस्य वायोर्मलादिकस्य चाधोमार्गेण प्रवर्तनी भवतीति शेषः । अत्र-रथोद्धतानामकं छन्दः ।

प्रतीते भोजनाजीर्णे संसेवध्वं शिवामृतम् ।
प्रतीके भो जना जीर्णे संसेवध्वं शिवामृतम् ॥ ५ ॥

प्रतीत इति—गोमूत्रिकाबन्धश्चित्रकाव्यभेदोऽयम् । भोजनाजीर्णे प्रतीते सति शिवामृतं, शिवायाः=हरीतक्याः सम्पादितममृतम्=जलं "हरड़ै का पानी" इति प्रसिद्धं संसेवध्वम् । प्रतीके=अङ्गेषु-जात्यभिप्रायमेकवचनम्-अर्थाच्छरीरे जीर्णे सति भो जनाः=हे मनुष्याः ! शिवामृतं, शिवम्=शङ्करमेवामृतं संसेवध्वम्=भजध्वम् । हरीतकीपानीयन्तु-हरीतकीमुत्क्वाथ्य, हिङ्गुधूपिते चिक्कणे मृत्पात्रे तत्पानीयमाधाय जीरकलवणमरिचादिवस्तूनि निक्षिप्य, काञ्जिकविधिना सम्पादनीयम् । भूयो भूयश्चेदमजीर्णे संसेव्यम् । पद्येऽत्र यमकं चित्रश्चालङ्कारः ।

गोमूत्रिकाबन्धचित्रोद्धारः




मत्स्याजीर्णे पानयोग्यं कथितं दुग्धकाञ्जिकम् ।
कदलीफलजेऽजीर्णे सिन्धुजन्म सजीरकम् ॥ ६ ॥

मत्स्येति—मांसाशिनां मत्स्यभोजनजनितेऽजीर्णे कुड्वमिते दुग्धे ततः किञ्चिदूनं काञ्जिकं निक्षिप्योभयं विमिश्र्य क्षिप्रमेव पेयम् । अधिककदलीफलभक्षणजे तु सजीरं सैन्धवलवणं सेव्यम् ।

अन्नजे दीप्यलवणौ भुक्त्वोष्णं वारि पीयते ।
मिष्टान्नजे लवङ्गानि प्सात्वा किञ्चिज्जलं पिबेत् ॥ ७ ॥

अन्नजे इति—दीप्या=यवानी । प्सात्वा=भक्षित्वा ।

त्रिकटुत्रिलवणतीक्ष्णासर्षपवाह्लीककल्पितं चूर्णम् ।
जम्भाभःसु निमग्नं भुक्त्वा भुञ्जीत वह्निमान्द्यादौ ॥ ८ ॥

त्रिकट्विति--शुण्ठीमरिचपिप्पलीसैन्धवसौवर्चलविडयवानीसर्षपहिङ्गूनां चूर्णं विधाय जम्बीरनिम्बुकरसेन प्लावयित्वा भोजनान्ते सेव्यम् । हिङ्गु घृतभृष्टमादेयम् गीतिश्छन्दः ।

त्रुटिचपलोषणजरणं सागरलवणं विचूर्ण्य गीर्णं चेत् ।
क्षिणुतेऽजीर्णं क्षणतः शोणितसरणं समावृणुते ॥ ९ ॥

त्रुटीति--त्रुटिः=एला, चपला=पिप्पली, ऊषणम्=मरिचम्, जरणः=श्वेतजीरकः, सागरः="नवसादर" इति ख्यातः, लवणम्=सैन्धवम् । सर्वेषामेषां चूर्णं विधाय सेवनेनाजीर्णरक्तातिसारौ विनश्यतः ।

त्र्यूषणमिषिबृहदेलात्वक्पोदीनाः पृथग्धरामाषाः ।
पथ्यालवणत्रितयं सौभाग्यं चेति कार्षिकाः क्रमशः ॥ १० ॥
नवसारो वसुकर्षः सकलः क्षुण्णः शिलातले मसृणः ।
स "सुलेमानी लवणः" शूलोदर्यन्यथाहृतौ प्रवणः ॥ ११ ॥

त्र्यूषणेति--शुण्ठीमरिचपिप्पलीशतपुष्पाबृहदेलादारुसितापोदीनानां पृथगेकैको माषको ग्राह्यः । हरीतकीसैन्धवसौवर्चलविडसौभाग्यानान्तु प्रत्येकं तोलकः । नवसारः="नौसादर" इति ख्यातस्त्वष्टतोलकमितः । सर्वमिदं विचूर्णयेत् । सिद्धं तत् "नमकसुलेमानी" इति यवनवैद्यैः प्रचारितनामधेयं प्रसिद्धं चूर्णं भवति यदजीर्णे जाठरशूलादिषु च महदुपकरोति । अधुनाऽऽपणेषु विज्ञापनविधया विक्रीयमाणं नानाविधं "नमकसुलेमानी" चूर्णं प्रचरति । वयमिहैतस्यान्यानपि त्रिचतुरान्प्रयोगान्प्रदर्शयामः । पाठका यथारुचि कमप्येकं प्रयोगं गृह्णन्तु । ( १ ) सैन्धवम् ३ मा; सौवर्चलम् ९ मा; शाकम्भरीयलवणम् ३॥ तो; नवसागरः ५ मा; अजमोदा १॥ मा; कृष्णमरिचम् १ मा-श्वेतमरिचम् १ मा; अजखराफतीमूनजटामांसीहिङ्गुजीरकाणां प्रत्येकं माषकार्धम्, दारुसिताकुसुम्भबीजशुण्ठीमधुयष्टिकानां प्रत्येकं माषकपादः । सर्वं प्रपिष्य चूर्णं विधेयम् । अत्र--"अजखर," "अफतीमून" इति द्वयं यावनमौषधम् । (२) अपरः प्रयोगः--शाकम्भरीयम् १॥ तो; सौवर्चलम् ३ मा; सैन्धवम् ३ मा; श्वेतजीरकः २ मा; कृष्णजीरकः २ मा;नवसारः १ मा; मरिचम् १मा; यवानी २ मा. --सर्वमिदं प्रपिष्य निम्बुकरसेन भावयेत् । ( ३ ) अन्यः प्रकारः--सैन्धवम् १ तो; सौवर्चलम् ६ मा; मरिचम् २ मा; दारुसिता

१ मा; यवानी १ मा; शतपुष्पा १ मा; हिङ्गु १ मा; निम्बुकसत्त्वम् २ मा; सिता ४ मा. सर्वौषधजातस्य चूर्णं कार्यम् । ( ४ ) इतरोऽपि प्रयोगः—सैन्धवम् १ तो; सौवर्चलम् १ तो; मार्कण्डी ( सनाय ) ६ मा; निम्बुकसत्त्वम् ३ मा; एला ३ मा; पत्रजम् ३ मा; सर्वं संभारं पिष्ट्वा चूर्णं कुर्यात् । पद्ययोरनयोर्गीतिश्छन्दः ।

पृथगभयानवसारौ सैन्धवसौवर्चलाभिधौ तथा कर्षौ ।
पोदीमूलक्षारौ मुष्टिमितौ चार्धतोलिका स्फटिका ॥ १२ ॥
सलिलाञ्जलिपरिलुलितौ निपसंनिहितस्त्र्यहात्पुनर्मिलितः ।
अयमपरः पुनरुदितः शूलसमूलक्षतौ विदितः ॥ १३ ॥

पृथगिति—हरीतकीनवसारसैन्धवसौवर्चलानां प्रत्येकमेकैकस्तोलः, "पोदीना" इति ख्यातस्य सुगन्धपत्रकस्य मूलकक्षारस्य च प्रत्येकं पलम्, स्फटिका षण्माषकमिता । सर्वमिमं संभारमेकस्यां लघुहण्डिकायां निक्षिप्य, तत्रार्धप्रस्थमितं जलं दत्त्वा, दिनत्रये व्यतीते पुनस्तच्चालयित्वा शोषयेत् । विशुष्कोऽयं समूलशूलनाशने प्रसिद्धोऽपरः " सुलेमानी लवणः" भिषग्भिरुदितः । पद्ययोरनयोः पूर्वत्र गीतिश्छन्दः, उत्तरत्र तु पथ्यार्या ।

द्विजीरकाभयादीप्याविडङ्गार्द्रकचित्रकैः ।
सतीक्ष्णच्छदधान्याकैर्ललल्लवणपञ्चकैः ॥ १४ ॥
साम्लवेतसकैरेभिः किञ्चित्सौभाग्यसंयुतैः ।
निम्बम्बुभावितैर्वटयोऽजीर्णमन्दानलच्छिदः ॥ १५ ॥

द्वीति—श्वेतकृष्णभेदेन जीरकद्वयम्, अभया=हरीतकी, दीप्या=यवानी, विडङ्गः= "वायविडंग" इति प्रसिद्धः, आर्द्रकम्, चित्रकः, तीक्ष्णच्छदः="पोदीना" इत्युक्तः, धान्याकम्="धनिया" इति प्रसिद्धम्, ललत् = शोभमानं लवणपञ्चकम् =सैन्धवशाकम्भरीयसामुद्रविडसौवर्चलाख्यानि पञ्च लवणानि यत्र तादृशैस्तथाऽम्लवेतसकसौभाग्ययुक्तैश्चैभिर्द्रव्यैर्निम्बुकरसभावनाद्वटयो विधेयाः । ताश्चाजीर्णादिषूपयोज्याः ।

व्योषाकल्लशिवैलादारुसिताहिङ्गुजीरकाः पिष्टाः ।
पोदीनार्द्रककन्यानिम्बुस्वरसैः कृशानुदा लीढाः ॥ १६ ॥

व्योपेति—शुण्ठीमरिचपिप्पल्याकल्लकहरीतक्येलादारुसिताहिङ्गुजीरकान् प्रत्येकमेकतोलमितान्गृहीत्वा, पिष्ट्वा च तत्र पोदीनार्द्रकघृतकुमारिकानिम्बुकानां प्रत्येकं तोलद्वयमितं रसं क्षिप्त्वाऽवलेहः कार्यः । स चायमग्निमान्द्येऽजीर्णे च लेढव्यः । अत्राद्युक्तोऽपि तोलकमितलवणप्रक्षेपोऽप्ययं विधेयस्तस्याग्निवर्धकत्वात्स्वादुतासम्पादकत्वाच्च । गीतिश्छन्दः ।

पथ्यासैन्धवजीरकाग्निकुसुमैः सव्योपसौभाग्यकैः
प्रत्येकं पलिकैः सकर्षजतुकैः सञ्चूर्णितैः पूरयेत् ।
सद्भाण्डं दधिनिम्बुकार्द्रकरसप्रस्थेन संप्लावितै-
र्भुक्तान्ते धरणद्वयं पुनरितो मन्दानलः संपिवेत् ॥ १७ ॥

पथ्येति—अग्निः=चित्रकः । कुसुमम्=लवङ्गम् । सकर्षजतुकैः=भृष्टहिङ्गुकर्षसहितैः । पृथक्पलप्रमाणानि सर्वाणीमानि विचूर्ण्य, पृथक्प्रस्थमानेन दध्ना निम्बुकरसेनार्द्रकरसेन चाप्लाव्य, तैश्चीनमृद्भाण्डम् " अमृतवान " इति प्रसिद्धं प्रपूर्य पक्षादनन्तरमिमं द्रावं मात्रया भोजनान्ते पिवेत् । मात्रा च षण्माषकमिता ।

टङ्कणं त्रिकटु क्षारद्वयं चापि फलत्रयम् ।
लवङ्गं वह्निचविके तथा लवणपञ्चकम् ॥ १८ ॥
वृक्षाम्लं दाडिमीवीजं शृङ्गवेरमयोरजः ।
भीमसेनाख्यकर्पूरं समं सर्वं विभावयेत् ॥ १९ ॥
त्रिधा त्रिधा रसैरम्लवेतसार्द्रकनिम्बुजैः ।
एवं यवानिकातोयैस्ततो वध्नीत तद्वटीः ॥ २० ॥
एकैकां सलिलैरेव प्रातः सायं भजेत चेत् ।
अजीर्णं क्षणतः क्षिप्त्वा ज्वलनं ज्वलयेज्जवात् ॥ २१ ॥
सद्यः प्रचुरयेद्रक्तं चित्तं चाह्लादयेदलम् ।
अनुभूता मया भूरि प्रसिद्धेयं "क्षुधावटी" ॥ २२ ॥

टङ्कणमिति—टङ्कणं भृष्टमादेयम् । त्रिकटु=शुण्ठीमरिचपिप्पल्यः । क्षारद्वयम्=स्वर्जिक्षारो यवक्षारश्च । फलत्रयम्=त्रिफला । वह्निः=चित्रकः । चविका=चव्यम् । लवणपञ्चकम्=प्रागुक्तम् । वृक्षाम्लम्=तिन्तिडीकं "डांसरिया" इति प्रसिद्धम् । दाडिमीवीजम्="अनारदाना" इति प्रसिद्धम् । शृङ्गवेरम्=शुण्ठी । पुनरुक्तत्वाच्छुण्ठी द्विगुणमाना ग्राह्या । अयोरजः=लोहभस्म । भीमसेनाख्यकर्पूरम्="भीमसेनी कपूर " इति ख्यातम् । सर्वं द्रव्यजातमिदं तुल्यमानमादाय, अम्लवेतसक्वाथेनार्द्रकरसेन निम्बुरसेन यवानिकाक्वाथेन च पृथक् त्रिधा त्रिधा भावयित्वा वटयो विधेयाः । सेयं "क्षुधावटी" इति प्रसिद्धाजीर्णादौ दृष्टचमत्कारा वहुशोऽनुभूता ।

अयि ! शीतशिवसौवर्चलं निम्बूकसत्त्वसमन्वितम्,
सश्वेतमरिचं भृष्टरामठजीरकैः सह चूर्णितम् ।
पोदीनपुष्पपवित्रितं मन्दानलोऽजीर्णी तथा,
परिशीलयेद्यदि लीलया लीयेत तस्य समा व्यथा ॥ २३ ॥

अयीति—अयि वैद्य ! शीतशिवम्=सैन्धवम् १७॥ तोलप्रमितम्, सौवर्चलम्="संचरनमक" इति ख्यातम् २॥ तो; निम्बुसत्त्वम् २॥ तो; श्वेतमरिचम् २॥ तो; भृष्ट रामठम्=हिङ्गु ३ माषकपरिमितम्, भृष्टजीरकस्तु ५ तोलकमितः, सर्वमिदं विचूर्ण्य पोदीनपुष्पैः="पीपरसेण्ट" इति प्रसिद्धैः पवित्रितं कृत्वा यदि मन्दानलोऽरुचिग्रस्तोऽजीर्णी वा परिशीलयेत्तर्हि तस्य सर्वा व्यथा लीलयैव लीयेत । "अरुचिनिषूदन"नामकं चूर्णमिदं परामप्यरुचिं चूर्णयति, अजीर्णं जरयति, वह्निमुद्बोधयति, उद्गारं शोधयति च । सर्वत्र हिङ्गुभर्जनप्रकारस्तु— उत्तमं हिङ्गु समादाय, जलेन गालयित्वा दुग्धसंदृशस्तद्द्रवः सम्पाद्यः । तदनु चुल्हिस्थे कस्मिंश्चित्तवके किञ्चिद्घृतं निक्षिप्य, तप्ते तस्मिंस्तं द्रवं निक्षिपेत् । द्रवे क्षीणे पर्पटवत्तवके लग्नं विशुद्धं हिङ्गु सम्पत्स्यते । अत्र पद्ये—हरिगीतिकेति प्रसिद्धं मात्राच्छन्दः । यत्र प्रतिपादमष्टाविंशतिर्मात्रा भवन्ति । षड्विंशतिमात्राभिस्तु गीतिकेति छन्दः प्रसिद्ध्यति, यदुदाहरणानि वक्ष्यन्ते ।

भावयेज्जीरकप्रस्थं निम्बूकार्द्रकवारिणोः ।
दिनत्रयं ततः पिष्ट्वा तत्र तुल्यां सितां क्षिपेत् ॥ २४ ॥
पचेन्मन्दाग्निना सम्यग्यावत्तन्तूद्गमो भवेत् ।
पुनस्तस्मिन्षट्प्रकुञ्चं मरिचं विश्वभेषजम् ॥ २५ ॥
सूक्ष्मैलाषोडशीं द्राक्षाकुडवञ्च समावपेत् ।
सिद्धो लेहो वह्निमान्द्यमम्लपित्तं नियच्छति ॥ २६ ॥

भावयेदिति—निम्बूकार्द्रकरसयोः पृथग्द्विप्रस्थमितयोः प्रस्थमितं भृष्टजीरकं त्रीणि दिनानि भावयित्वा, तत्रैकप्रस्थमितां सितां प्रक्षिप्य तन्तूद्गमावधि पाकः कार्यः । षट्प्रकुञ्चम्=षट्पलमितं मरिचं विश्वभेषजम्=शुण्ठीमपि षट्पलमानेनैव । सूक्ष्मैलाषोडशीम्=पलमितानि सूक्ष्मैलाबीजानि । द्राक्षायाः="मुनक्का" इति प्रसिद्धायाः कुडवम्=चत्वारि पलानि । नियच्छति=नाशयति ।

"लशुनादिवटी"ज्वलनापचितिं युगमार्गगतिं च निहन्ति सृतिम् ।
अथवा"कुचिलादिवटी" कथिता प्रथिता सकलोदररोगवधे ॥ २७ ॥

लशुनेति—"लशुनादिवटी" वैद्यजीवने—

लशुनजीरकसैन्धवगन्धकत्रिकटुरामठचूर्णमिदं समम् ।
सपदि निम्बुरसेन विषूचिकां हरति भो रतिभोगविचक्षणे ॥

इति श्लोकेनाख्याता । सेयं ज्वलनस्य=वह्नेरपचितिम्=मन्दताम्, युगमार्गगतिं सृतिम्= वमनातीसाररूपां विषूचिकां च निहन्ति । "कुचिलादिवटी"—कुचिलं शुद्धम्, हरीतकी, शुण्ठी, मरिचम्, पिप्पली, हिङ्गु, सैन्धवम्, गन्धकश्चेति सर्वं समानमानं प्रपिष्य निम्बुनीरेण नीरेण वा विधेया । शुद्धसूतः, गन्धकः, शृङ्गिकविषम्, यवानी, त्रिफला, सर्जिक्षारः, यवक्षारः, चित्रकः, सैन्धवम्, जीरकः, सौवर्चलम्, विडङ्गम्, सामुद्रलवणम्, शुण्ठी, मरिचम्, पिप्पली—सर्वाण्येतानि समानानि, शुद्धकुचीलं तु सर्वतुल्यमिति प्रपिष्य निम्बुनीरेण विहिता "कुचिलादिवटी" त्वेवंविधरोगेषु वैद्यानां किञ्चिद्गौरवावहं वस्तु । अत्र "इह तोटकमम्बुधिसैः प्रथितम्" इति लक्षणलक्षितं तोटकं छन्दः ।

**सिन्धूत्थशुण्ठीसहितो यथा वलिर्यथा सकृष्णा रसगन्धकज्जली ।**
**यथा कणाढ्यो विषमुष्टिरिष्यते तथात्र मल्लोऽम्लसुतोऽपि दृश्यते २८**

सिन्धूत्थेति—शुद्धगन्धकसैन्धवशुण्ठीनां निम्बुनीरेण विहिता वटिकेति प्रथमो योगः, पिप्पलीसहिता पारदगन्धकयोः कज्जलीति द्वितीयः, पिप्पलीयुतं शुद्धं कुचीलमिति तृतीयः, अभावधिश्रिते कटाहे निम्बुरसाभिषिक्तो मल्ल इति चतुर्थः, चत्वारोऽप्यमी योगा अग्निमान्द्यनाशना विषूचीविध्वंसनाश्च भवन्ति । मल्लपरिमाणम् ४ तोलकाः, निम्बुरसस्य तु चत्वारः प्रस्थाः । सिद्धस्य मल्लस्य मात्रा तण्डुलोन्मिता । सिद्धभेषजमणिमालायान्तु—वृक्षाम्लबीजपूरकचाङ्गेरीत्रिपत्रीवारिभिर्भावितेन षड्गुणगन्धेन जारितोमल्लस्तथाविध उक्तः । अत्र छन्दः—इन्द्रवंशावंशस्थयोरुपजातिः ।

**पोदीनार्द्रकनिम्बूकरसैर्द्वित्रिचतुष्पलैः ।**
**कृतं द्विगुणखण्डाढ्यैः शार्करं वह्निकृत्परम् ॥ २९ ॥**

पोदीनेति—द्वित्रिचतुष्पलैरित्यत्र क्रमादिति शेषः । खण्डस्य द्विगुणत्वं सर्वरसापेक्षया बोध्यम् । शार्करम्="शरबत" इति प्रसिद्धम् ।

**भङ्गार्द्रमिषिदीप्यानां कल्पितोऽर्कः कृशानुकृत् ।**
**तथैवार्द्रकनिम्बूककुमारीवारिसंभवः ॥ ३० ॥**

भङ्गेति—दीप्या=यवानी । स्पष्टमन्यत्

मुक्तो भवति विषूच्या खरशकृदुत्थं रसं पीत्वा ।
एष हि करुणालेशः संदेशः श्यामलालानाम् ॥ ३१ ॥

मुक्त इति—खरशकृत्="गधे की लीद" इति प्रसिद्धा । तद्रसो विषूचिकाम्="हैजा" इति "कालेरा" ( Cholara ) इति वा प्रसिद्धं रोगं नाशयति । पूर्वत्र दत्तपरिचयैः श्यामलालाचार्यैः सन्दिष्टमिदम् ।

माषश्चन्द्रस्त्रिमाषैला षण्माषं चैव माक्षिकम् ।
त्रिमाषं शृङ्गवेराम्बु सर्वमेतच्छिलातले ॥ ३२ ॥
पिष्ट्वा चन्दनदण्डेन लेहयेद्धरणत्रयम् ।
अयं लेहवरोऽवश्यं विषूचीं प्रतिषेधति ॥ ३३ ॥

माष इति—चन्द्रः=कर्पूरः । माक्षिकम्=मधु । शृङ्गवेराम्बु=आर्द्रकरसः। पिष्ट्वा याममिति शेषः । चन्दनदण्डेन=दण्डाकारेण लघुकेन चन्दनकाष्ठखण्डेन । धरणत्रयम्=पादोनतोलकमितम् ।

व्योषं सपुष्पं त्रुटिसागरान्वितं सनिम्बुसत्त्वं लवणद्वयीयुतम् ।
आमातिसारोदरशूलमर्दकं विषूचिकां कृन्तति "शान्तिवर्धकम्" ३४

व्योषमिति—शुण्ठीमरिचपिप्पलीलवङ्गैलानवसारसैन्धवसौवर्चलानि तुल्यानि, निम्बुसत्त्वन्तु एकभागार्धभागिकमिति सर्वं प्रपिष्य चूर्णं विधेयम् । तदिदं "शान्तिवर्धकचूर्णम्" इति नाम्ना प्रसिद्ध्यति । अन्यथापीदं निर्मीयते—शुण्ठीमरिचपिप्पलीलवङ्गैलासैन्धवगैरिकनिम्बुसत्त्वानां प्रत्येकं ५ तोलकाः, सौवर्चलम् १२ तोलकाः, नवसादरः १९ तोलकाः सर्वमिदं प्रपिष्य चूर्णतां नेयम् । छन्दोऽत्र—इन्द्रवंशावंशस्थयोरुपजातिः ।

शिवाशताह्वालवणोषणानां तथार्द्रिकाकारविकाकणानाम् ।
सविश्वमन्दारलवङ्गिकानां निम्बूकनीरेण विमर्दितानाम् ॥ ३५ ॥
वट्यो विषूचीं भृशमुत्खनन्ति घोरातिसारं द्रुतमुद्धरन्ति ।
औदर्यपीडामपि संहरन्ति मन्दानलत्वं च निबर्हयन्ति ॥ ३६ ॥

शिवेति—युग्मम् । तत्रैकेन श्लोकेन प्रयोगप्रदर्शनमपरेण तु गुणगणनम् । शिवा=हरीतकी, शताह्वा=शतपुष्पा, ऊषणम्=मरिचम्, आर्द्रिका=आर्द्रकम्, कारविका=यवानी, कणा=जीरकः, विश्वम्=शुण्ठी, मन्दारलवङ्गिका=अर्कपुष्पमध्यस्थलवङ्गिका । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ।

मरिचं निम्बुबीजानि पथ्या जहरमोहरा ।
नादेयं नालिकेरं च रविमूलजवल्कलम् ॥ ३७ ॥
एवं सहचरश्चेति शृङ्गवेराम्बुना वटी ।
मुहुर्मुहुर्भक्षणीया विषूचीभञ्जनक्षमा ॥ ३८ ॥

मरिचमिति—"जहरमोहराखताई" इति यावनमौषधम् । नादेयं नालिकेरम्="दरियाई नारियल" इति प्रसिद्धम् । रविमूलजवल्कलम्=अर्कवृक्षमूलत्वक् । सहचरः="पियावांसा" इति प्रसिद्धः । मुहुर्मुहुरिति-प्रत्यर्धघण्टं सेव्या यावद्रोगशान्तिरिति ।

यद्युपयुक्तं जाम्बवशुक्तम् । हन्ति विषूचीं किं तदयुक्तम् ॥३९॥

यदीति—जाम्बवशुक्तम्=राजजम्बूफलैः सम्पादितं शुक्तं "सिरका" इति प्रसिद्धमुपयुक्तं सद्यदि विषूचीं हन्ति, तत्किमयुक्तमपि तु युक्तमेव भवेत् । जाम्बवशुक्तनिर्माणविधिः सिद्धभेषजमणिमालोक्तोऽधस्तात्—

राजजम्बूफलरसं सूर्यतापे निधापयेत् ।
प्रत्यहं वस्त्रपूतं तं कुम्भात्कुम्भे विवर्तयेत् ॥
दिवसेषु व्यतीतेषु बिन्दुं तस्य क्षितौ क्षिपेत् ।
उद्गच्छेद्बुद्बुदस्तस्य तदा सिद्धं समादिशेत् ॥
इत्येतज्जाम्बवं शुक्तं सितापङ्केन दीयताम् ।
विषूचिकाघ्नमत्यम्लं रुच्यं दीपनपाचनम् ॥ इति ।

पद्येऽत्र पङ्क्तिश्छन्दः "भ्गौ गिति पंक्तिः" इति लक्षणात् ।

वक्षि विषूचीं मर्दितुं वाञ्छसि पातुं धारि ।
पिब रे तर्हि पुनः पुनः सौधवारि वमिहारि ॥ ४० ॥

वक्षीति—वक्षि=कामयसे । वशकान्तावित्यस्य रूपम् । धारि=जीवनं पातुम्=रक्षितुं वाञ्छसि चेत्तर्हि वमिहारि=विषूचिकायामुद्वमनापहर्तृ सौधवारि=सुधापानीयं "चूनेका पानी" इति "लाइम वाटर" (Lime water) इति वा प्रसिद्धं कर्पूरं निक्षिप्य पिब । अत्र दोहाच्छन्दः ।

यथा विषूच्यां विदितं हिमाम्भस्तथैव पोदीशतपुष्पिकाम्भः ।
पलाण्डुपानीयमपीह दृष्टं लवङ्गनीरं तृपि चोपदिष्टम् ॥ ४१ ॥

यथेति— हिमाम्भः="बर्फ" इति ख्यातस्य कृत्रिमहिमस्य जलं तृषि प्रदेयम् । तथैव पोदीशतपुष्पिकाम्भः="पोदीने का अर्कः" "सौंफ का अर्क" इति प्रसिद्धावर्कौ । पलाण्डोः="प्याज" इति ख्यातस्य पानीयम्=रसः । तच्च द्विपलं सद्यस्कं चादेयं, विलम्बे तु तत्र वैगुण्यं भवति । लवङ्गनीरम्=शिलायां पिष्टानां लवङ्गानां जलालुलितानां पानीयम्, यद्वा—तेषां क्वाथः । उपेन्द्रवज्रावृत्तम् ।

**पिष्ट्वा सखे ! सोषणसिन्धुजानि मन्दारमूलोद्भववल्कलानि ।**
**बद्धा वटीर्देहि विषूचिकासु रुजासु कासश्वसनादिजासु॥४२॥**

पिष्ट्वेति—मन्दारस्य=अर्कस्य मूलोद्भववल्कलानि छायाविशुष्काणि कृत्वा, तत्समानं मरिचं लवणं च निक्षिप्य, निम्बुकरसेन विमर्द्य चणकप्रमाणा वटयो निबन्धव्याः । अत्र त्रिकटुत्रिजातादिनिक्षेपोऽपि न निवार्यते । छन्दोऽत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ।

**अरुणमरिचं मण्डलावधि निम्बुकाम्बुनि भावितम्**
**जीरयुगशशिहिङ्गुसैन्धवसङ्गतं पटपावितम् ।**
**निम्बुकार्द्रकसलिलपिष्टं बदरमिव वटकीकृतम्**
**वह्निमान्द्यविषूचिकाबलदलनदक्षमुदाहृतम् ॥ ४३ ॥**

अरुणेति—अरुणमरिचम्="लालमिरच" इति, "पित्तकारिणी" इति वा प्रसिद्धम् । अत्र जात्यभिप्रायमेकवचनम् । मरिचं निर्बीजं कृत्वा चत्वारिंशद्दिनानि निम्बुरसे भावयित्वा शोषणीयम् । ततो जीरकादिभिः सह विचूर्ण्य पटपूतं विधाय निम्बूकरसेन बदराकारा वटयो विधेयाः । पद्येऽस्मिन्- गीतिकेति प्रसिद्धं मात्राच्छन्दः, यत्र प्रत्येकस्मिन्पादे षड्विंशतिमात्रा भवन्ति । गीतिकानाम्नि वर्णवृत्ते तु—प्रत्येकस्मिन्पादे विंशतिरक्षराणि भवन्ति । यल्लक्षणम्—"सजजाभरौ सलगा यदा कथिता तदा खलु गीतिका" इत्युक्तम् ।

अथ चतसृभिरार्याभिः "विषूचीभञ्जन"—नामकं महाप्रभावमौषधं ब्रूते—

**ऐन्द्रीफलशतसिद्धं दरदं जातीदलौषधाकल्लाः ।**
**जातीफलमुपकुल्यास्तोलकतुल्याः समादेयाः ॥ ४४ ॥**
**द्विगुणं श्यामलमरिचं शृङ्गिकसंज्ञं चतुर्गुणं पिष्ट्वा ।**
**वटिका निम्बुकवारा मरिचाकारा विधातव्याः ॥ ४५ ॥**
**पुनरिह ता भृशमशिताः शुभ्रसितानारिकेलखण्डाभ्याम् ।**
**घ्नन्त्युदरार्तिमुदग्रां घ्नन्ति समग्रां विषूचीं च ॥ ४६ ॥**

योगो गुरुचरणेभ्यः कर्मपटुभ्यः सदा दयालुभ्यः ।
लब्धो मयाऽऽमयानां दर्पं हर्तुं समर्थोऽसौ ॥ ४७ ॥

ऐन्द्रीति—ऐन्द्री=इन्द्रवारुणी "इन्द्रायन" "तुम्त्रन" इति प्रसिद्धा, तस्याः फलं, "कड़वी लोकी" "तुम्बा" इति ख्यातम् । तन्मध्ये शुद्धं दरदं निधाय, मृत्कर्पटावगुण्ठितं द्विप्रस्थवन्योपलैः परिपचेत् । एवं फलशतान्तः पाचितं हिङ्गुलं वक्ष्यमाणौषधैर्मेलनीयम् । तत्र—दरदम्, जातीदलम्="जावित्री" इत्याख्या, औषधम्=शुण्ठी, आकल्लः, जातीफलम्, उपकुल्या=पिप्पली—सर्वाण्येतानि प्रत्येकमेकैकतोलकमितानि, कृष्णमरिचं द्वितोलम्, विशुद्धं वृश्चिकविषन्तु तोलकचतुष्टयामितमिति सर्वं प्रपिष्य निम्बुकरसेन गोमूत्रेण वा मरिचवद्वटयः कार्याः । शुभ्रसिता="मिश्री" इति प्रसिद्धा, नारिकेलश्चेत्येतद्द्वयखण्डाभ्यां भृशम्=मुहुर्मुहुरशिताः=भुक्ताः सत्यस्ता वटय उदग्रामुदरार्तिं घन्ति=खण्डयन्ति । स्यन्ति=नाशयन्ति । विविधामयानां दर्पं हर्तुं समर्थोऽसौ योगो वैद्यसागरमल्लशर्मभिरुपदिष्टः ।

नास्त्यनेन समो योगो विषूचीभञ्जनक्षमः ।
मुमूर्षतामपि प्राणगतिं प्रणयति ध्रुवम् ॥

बलिसिन्धुजजीरानलत्रिकटुहिङ्गुलशुनानि ।
योजय किल मन्दानले पीतनिम्बुजातानि ॥
पीतनिम्बुजातानि तानि पुनरिह वटकीभूतानि ।
योजितानि मथयन्ति विषूचीं जठररुजासु हितानि ॥
विपुलशूलनिर्मूलविधावपि सन्ति हसन्ति ! शमानि ।
शङ्खभस्म चेदत्र दीयते जायन्तेऽनुपमानि ॥
मानिनि ! प्रबलरुजादलने,
देहि नरपतयेऽये ललने !,
चूपयारुचिरोगोन्मलने,
विविधबन्धविध्वंसविधावपि किल गिल वामलचलने !॥४८॥

बलीति—बलिः=शुद्धगन्धकः, सिन्धुजम्=सैन्धवलवणम्, जीरः, अनलः=चित्रकः, त्रिकटु=शुण्ठीमरिचपिप्पल्यः, हिङ्गु भृष्टमादेयम्, लशुनमपनीतत्वग्भागं ग्राह्यम्—सर्वाण्येतानि निम्बुरसेन विमर्द्य वटकीकृत्याग्निमान्द्ये, विषूच्याम्, जठरपीडासु, शूले, अरुचौ च प्रयोज्यानि । शङ्खभस्मप्रक्षेपेणात्रातीव गुणकरत्वं भवति । तदानीं प्रबलासु पीडा-

स्वपि प्रयुज्यन्ताम् । नरपतये तत्समेभ्योऽन्येभ्यो धनिकेभ्यश्च दातुं योग्या वटीयम् । अरुचिनाशनायास्याश्चूषणं विधेयम् । नानाविधविबन्धानां विध्वंसनायापि गिलनं विधेयम् । अस्य श्लोकस्य स्त्रियं सम्बोध्य प्रवृत्तत्वात्–हसन्ति, मानिनि, अये ललने, अमलचलने–इत्येवमादयः शब्दास्तत्सम्बोधनत्वेन योज्याः । एवमेव तत्रतत्र सर्वत्र–मित्र, भ्रातः, तापातुर–इत्येवमादयः शब्दास्तत्तत्सम्बोधनपरा द्रष्टव्याः । अत्र–"चौबोला" इति लोके प्रसिद्धं छन्दः, यद्धि "ख्याल" इति प्रसिद्धेषु नाटकविशेषेषु बहुत्र गीयते ।

**जीरकजातीकोषकतोलम् । हन्ति विषूचीं पुष्करलोलम् ॥ ४९ ॥**
**विश्वमिवेष्टा शङ्करभक्तिः । जाड्यमधीतेवाक्षरपङ्क्तिः ॥ ५० ॥**

जीरकेति—युग्मम् । जीरकः श्वेतः १ तोलकमितः, जातीकोषकः="जायफल" इति प्रसिद्धः १ तोलकमितः–द्वयमेतत्सूक्ष्मं विचूर्ण्य, शीतले जले संमेल्य, वस्त्रेण संगाल्य वारत्रयं वारचतुष्टयं वा प्रपिबेत् । ऊनषोडशवर्षाय तु हीनमात्रया देयम् । लाभप्रदो योगः । सोऽयमिष्टा शङ्करभक्तिर्विश्वम्=संसारमिव, अधीता=पठिताऽक्षरपङ्क्तिः=अकारादिवर्णमाला जाड्यम्=मूर्खतामिव विषूचीं हन्ति । पद्ययोरनयोरक्षरपङ्क्तिनामकं छन्दः । तेन–वर्णमालारूपोपमानवर्णनपरेणाक्षरपङ्क्तिपदेनास्य पद्यस्याक्षरपङ्क्तिनामत्वरूपसूच्यार्थसूचनात् "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः" इति लक्षणलक्षितो मुद्रालङ्कारः ।

**दिव्यस्यापि जलस्यापानं स्तोकं सुधांशुशीतस्य ।**
**गलहस्तयति विषूचीमथवा सूचीक्रियाऽप्यस्याः ॥ ५१ ॥**

दिव्यस्येति—दिव्यस्य जलस्य=वर्षावारिणः यद्वा–करकाजलस्य सुधांशुः=कर्पूर–स्तेन शीतस्यापानं विषूचीं गलहस्तयति=विषूच्या गलेऽर्धचन्द्रं दत्त्वा तां दूरीकरोति । किन्तु–कर्पूरं स्तोकमेव क्षिपेत् । प्रत्येकस्मिन्पाने रक्तिद्वयान्न्यूनमेवेत्यर्थः । वर्षाकाले पतितानां करकाणां काचकूप्यादिषु संग्रहः कार्यः । विषूचिकाविपदि च तदुपयोगः । अथवा–अस्याः = विषूचिकायाः सूचीक्रिया = पाश्चात्त्यैरैलोपैथीचिकित्सकैराविष्कृता "इञ्जेक्शन"– ( Injection ) नाम्नी सूच्या रक्ते औषधप्रवेशरूपा क्रियाऽपि भवति । अत्रेदं बोध्यम्—सूचीक्रिया यद्यपि न वैद्यानां विषयो बहवश्चात्र विप्रतिपद्यन्तेऽपि,तथापि विभिन्नप्रकृतिकेषु रुग्णेषु क्वचित्किञ्चिदौषधमुपकरोति, क्वचिन्न किञ्चिदिति बहुत्र दृष्टफलाया अस्याः स्वीकारो न दुष्यति । परन्तु केवलमत्रोल्लेखमात्रेण न खलु वैद्याः सूचीक्रियां कर्तुं प्रभवन्तीति तज्ज्ञेभ्यस्तच्छिक्षां गृहीत्वा ततस्तदुपयोगः कार्यः । सूचीक्रियायाः सर्वाऽपि सामग्री विदेशीयौषधविक्रेतृभ्यो लब्धुं शक्यते । विभिन्नरोगेषु सूचीद्वारा प्रवेश्यमानान्यौषधान्यपि तत्तन्मात्रावद्धासु क्षुद्रकूपिकास्वबद्धानि ततः एवं

लभ्यन्ते इति सर्वमेतदीयं ज्ञानं डाक्टरेभ्यः सम्पाद्य वैद्या अपि तद्गौरवाप्लुतनेत्रेषु प्रतिष्ठां लभन्तामिति ।

यवानीपुदीनाख्यसत्त्वेन्दुसारा
चरीकर्त्ति किं किं न पीयूषधारा ।
परारोग्यदा पङ्क्तिबिन्दुप्रचारा-
दियं सेव्यतां नूनमत्रापि वारा ॥ ५२ ॥
यदा विश्वसौभाग्यसत्त्वेन युक्ता
तदेयं भिषग्भिः सुधासिन्धुरुक्ता ।
सजातीफलत्वक्सुमैलोत्थतैला-
न्वसावाख्यया जायतेऽमूल्यरत्नम् ॥ ५३ ॥

यवानीति—युग्मम् । यवानीसत्त्वम्="अजवायन का सत्त" इति प्रसिद्धम्, पुदीनाख्यसत्त्वम्="पोदीने का सत्त," "पीपरमेण्ट" इत्यादि प्रसिद्धम् , इन्दुः=कर्पूरः—एतानि त्रीणि सारभूतानि यत्र तादृशी पीयूषधारा किं किं न चरीकर्त्ति, अपि तु विषूचीवमनातिसारविषदाहहृल्लासकासश्वासज्वरादीनां प्रायोऽनेकेषां रोगाणां नाशनरूपं सर्वमेव कार्यं करोतीत्यर्थः । त्रीणीमानि समानि काचकूप्यां भृत्वा,कूप्या मुखं मुद्रयित्वा कालं कञ्चिदुपेक्षेत । स्वयमेव द्रवरूपा "पीयूषधारा" सम्पत्स्यते । परारोग्यदेयं दशबिन्दुमात्रया जलेनात्र=विषूचिकायामपि सेव्यताम् । चेदत्र शुण्ठीसत्त्वं सौभाग्यसत्त्वं चाधिकं दीयेत तर्हीयं "सुधासिन्धुः" इति नाम्ना प्रसिद्ध्यति । यदि त्वत्र—जातीफलतैलं लवङ्गतैलं दारुसितातैलमेलातैलं च दीयेत तर्हि "अमूल्यरत्नम्" इत्येवमेतस्या नाम सम्पद्यते । अधुना हि व्यवसायिनं एतान्येवौषधानि संमिश्र्य क्वचित्किञ्चिद्विपरिवर्त्य वा "पीयूषधारा" "अमृतधारा" "अमृतसिन्धुः" "सुधासिन्धुः" "अमृतबिन्दुः" "जीवनबिन्दुः" इत्यादिनामभिर्विक्रीणन्ति । सपणबन्धं सर्वविधरोगध्वंसनशक्त्युद्घोषणपुरःसरं धनान्यर्जयन्ति च । परं वस्तुनोऽस्योपकारित्वे न संशय इति वयमपीह द्वित्रान्स्वानुभूतान्प्रयोगानुल्लिखामः—(१) कर्पूरं ५ तोलकमितं कदलीमूलस्वरसेन भावयित्वा विशोष्य च यवान्यर्केण भावयित्वा विशोषयेत् । ततस्तत्र तावदेव यवानीसत्त्वं पीपरमेण्टं च निक्षिप्य पूर्ववत्पीयूषधारा निर्मातव्या । (२) कर्पूरः, यवानीसत्त्वम् , पीपरमेण्टम्, शीतलमि चसत्त्वम्, मूलकसत्त्वम्, लोहबाणसत्त्वम्, एलातैलम् , शतपुष्पातैलम् , दारुसितातैलम्, वातादतैलं चेति सर्वं समानमेकध्यं संमिश्र्य पीयूषधारा सम्पाद्या । ( ३ ) रेक्टीफाइड स्पिरिट एलोपैथिक नं. ९० ( Rectified spirit Allopathic No. 90 ) २४ औन्समितम् , आयल

मिन्थल पीपेरेटा ( Oil menth. Pepp. ) २ औन्समितम् , कर्पूरः ५ औन्समितः—स्पिरिटाख्यमद्यमर्धमर्धं काचकूपीद्वये विभज्योभयत्र कर्पूरखण्डा निक्षेप्याः । तेषु विद्रुतेषु पीपरमेण्टतैलं तत्र देयम् । ततः कूपिकाद्वयस्य द्रव्यमेकीकृत्य पीयूषधारां सम्पादयेत् । सर्वविधाऽप्येषा जलेन, मद्येन, तत्तद्रोगहरक्काथेन, सितया वा सेव्यते इति ।

**मन्दकृशानो ! तन्नवरत्नं, शीलय शूलाजीर्णसपत्नम् ।**
**नास्ति परातस्त्वांग्लचिकित्सा, नात्र विधेया ते विचिकित्सा ॥५४॥**

मन्देति—हे मन्दकृशानो ! शूलाजीर्णविषूचिकादिसपत्नं तत्=प्रसिद्धं नवरत्नं शीलय । अतः=अस्मात्परा=उत्कृष्टांऽऽग्लचिकित्सा नास्ति । मात्र संशयं कार्षीरिति । "नवरत्न" विधानं त्वेतत्—टिंचर जिंजर ( शुण्ठ्यर्कः ) १० विन्दवः, टिंचर केनिबिसेण्टिका ( भङ्गार्कः ) ३ बि०, टिंचर नक्सवामिका ( कुचीलार्कः ) ३ बि०, टिंचर केप्सिकम ( अरुणमरिचार्कः ) ३ बि०, टिंचर कार्डमम ( एलार्कः ) १० बि०, स्पिरिट क्लोरोफार्म १० बि०, एसिड हाइड्रोक्लोरिक ३ बि०, कार्बोलिक एसिड अर्धबिन्दुः, जलम् १ औन्समितम्—इयमेका मात्रा । प्रातः सायं भोजनोत्तरं सेव्या । नवानां वस्तूनां मेलनादस्य "नवरत्नम्" इति संज्ञा । केचिदिह—कार्बोलिक एसिडसंज्ञं न क्षिपन्ति । अत्र चम्पकमालाद्वयम् ।

**मूलाम्बुमर्दितं शोणकसीसं रक्तिकामितम् ।**
**पीतमुष्णाम्बुना वाढं वान्तिकारकमीरितम् ॥ ५५ ॥**

मूलेति—प्रशस्तशोणकसीसं मूलस्वरसेन दिनमर्धं विमर्दयेत् । इदं वमनसाध्येषु सर्वेषु विलम्बिकालसकादिषु प्रयोज्यम् । एतत्प्रयोगेण वमनातियोगे निरन्नं मक्षिकान्नकोषं दग्ध्वा तद्भस्म द्विमाषं शीतलजलैर्देयम् ।

**शाणः कङ्कुष्ठजः क्षोदः पीतो मन्दोष्णवारिणा ।**
**वान्तिरेकौ समुद्राव्य कुरुतेऽलसकक्षयम् ॥ ५६ ॥**

शाण इति—कङ्कुष्ठम्="उशारे रेवन्द" इति प्रसिद्धम्, तज्जः क्षोदः=चूर्णं शाणः=चतुर्माषकमितः । अलसकः="कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति । निरुद्धो मारुतश्चैव कुक्षावुपरि धावति । वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि । तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु" । इत्युक्तलक्षणो वेदितव्यः ।

इत्यग्निमान्द्याद्यधिकारः ।

## अथ क्रिम्यधिकारः ।

अथ बाह्याभ्यन्तरभेदतो द्विविधा अपि क्रिमयः प्रायोऽजीर्णादिहेतुभिरेव जायन्तेऽतस्तच्चिकित्सानन्तरं क्रिमिचिकित्सितमुच्यते—

**क्रिमिघ्नो मधुना लीढः क्रिमिघ्नो जायते यथा ।**
**तथा कम्पिल्लकोऽप्येको जाठरक्रिमिपातनः ॥ १ ॥**

क्रिमिघ्न इति—क्रिमिघ्नः=विडङ्गः, क्रिमिघ्नो जायते=कीटनाशको भवति । कम्पिल्लकः="कमीला" इति प्रसिद्धः । तस्यापि मधुना लेहः ।

**विडङ्गगर्भमृद्वीका भुक्ता कीटावपातनी ।**
**तथैव कृष्णधत्तूरस्वरसैर्गुदधावनम् ॥ २ ॥**

विडङ्गेति—विडङ्गा गर्भे यस्यास्तादृशी मृद्वीका="मुनक्का" इत्याख्या द्राक्षा । कृष्णधत्तूरपत्रस्वरसैर्गुदधावनेन प्रायो गुदस्थानां "चूरणिया" इति ख्यातानां कीटानां पातन एव विशेषश्चमत्कारः ।

**कीटारिकम्पिल्लकरञ्जदीप्यापलाशबीजानि विचूर्णितानि ।**
**गुडेन संनीय गुडीकृतानि कुक्षिस्थकीटप्रणिपातनानि ॥ ३ ॥**

कीटेति—कीटारिः=विडङ्गः । करञ्जः="करञ्जुवा" इति प्रसिद्धः । दीप्या=यवानी । पलाशः="ढाक" इति प्रसिद्धस्तस्य बीजानि । संनीय=सम्मेल्य ।

**विडङ्गाजमोदायवक्षारविश्वाः शिवा पिप्पली सिन्धुजं हिङ्गु चेति ।**
**कृतं चूर्णमेतत्परं जन्तुहन्तृ प्रदेयं भिषग्भिः कृशानुक्षयेऽपि ॥ ४ ॥**

विडङ्गेति—शिवा=हरीतकी, सिन्धुजम्=सैन्धवम् । हिङ्गु भृष्टमादेयम् ।

**कुलमिव कलहार्थिः, कद्रुवपत्यानि केकी,**
**कलिमलमिव कृष्णः, कक्षकूटं कृशानुः ।**
**क्रिमिकुलमिव काकः, कम्बलानीव कीटः,**
**कवलयति कुबेरः कौतुकात्कीटकोटिम् ॥ ५ ॥**

कुलमिति—कद्रूः=नागमाता, तस्या अपत्यानि=सर्पानित्यर्थः । केकी=मयूरः । कक्षकूटम्=तृणपुञ्जम् । कवलयति=भक्षयति । कुबेरः="खुरासानी अजवायन" इति

प्रसिद्धः । कीटकोटिम्=कोटिशः कीटान् । अत्र—मालोपमालङ्कारोऽनुप्रासश्च चेतोहरः । मालिनीवृत्तम् ।

**रसः कृष्णधुस्तूरनीरेण पिष्टो धृतो मस्तके कृत्स्नयूकापहारी ।**
**तथा वै तमाखूरजश्चर्मयूकाव्रजध्वंसहेतुस्तनौ मर्दनेन ॥ ६ ॥**

रस इति—रसः=पारदः । कृष्णधत्तूराभावे सामान्यधत्तूरोऽपि गृह्यताम् । धृतः=लिप्तः । यूका="जूं" इति प्रसिद्धा । तमाखुः=व्यसनिभिर्धूम्रपानविधिना पीयमाना, तस्या रजः, तत्पत्रस्वरसोऽपि, चर्मयूकाः=" चमजूं" इति प्रसिद्धास्तासां व्रजस्य=समूहस्य ध्वंसे हेतुः ।

**रसः "कृमिकुठारो"ऽपि भक्षणाज्जन्तुभक्षकः ।**
**तथा "तैलं विडङ्गाख्यं" मर्दनात्कीटमर्दनम् ॥ ७ ॥**

रस इति—"कृमिकुठारो रसः"— शुण्ठीमरिचपिप्पलीहिङ्गुसैन्धवसौवर्चलचित्रकहरीतकीवचागुग्गुलुहरिद्रेश्वरबोलविडङ्गकुष्ठलशुनजीरकेन्द्रयवयवानीपलाशबीजखदिरसारकरञ्जगन्धकान् प्रपिष्य मधुना गुटिकीकृत्य निर्मातव्यः। सोऽयं रसो भक्षणेनोदरस्थान्क्रिमीन्नाशयति । बाह्यकीटानां चर्मयूकादीनां मर्दनन्तु "विडङ्गतैलं" शरीरे सम्मर्द्य विधेयम् । एककुडवमिते सर्षपतैले विडङ्गगन्धकमनःशिलानां प्रत्येकमेकैकं तोलकं प्रस्थमितं च गोमूत्रं निक्षिप्य मन्दाग्निना गोमूत्रक्षयावधि पाकः कार्यः। तदेवं "विडङ्गतैलं" निष्पद्यते।

**मण्डूरकट्वीक्रिमिवैरिपथ्याःपाण्डूदरार्शःक्रिमिरुक्षु पथ्याः ।**
**पथ्या तथैकोक्तरुजासु तथ्या ब्रूमोवयं नात्र कदापि मिथ्या ॥ ८ ॥**

मण्डूरेति—मण्डूरः=मण्डूरभस्म, कट्वी=कटुकी, क्रिमिवैरी=विडङ्गः, पथ्या=हरीतकी। समेषामेषां चूर्णं क्रिमिषु, पाण्डुरोगेऽर्शांसि च गोमूत्रेण पेयम् । उक्तरुजासु=पाण्ड्वादिषु केवला पथ्या कल्करूपेण सेवनीया । मण्डूरविधिः—पुराणं मण्डूरमग्नौ प्रताप्य प्रताप्य सप्तधा सप्तधा गोमूत्रे, त्रिफलाक्वाथे, पौनर्नवरसे च निर्वाप्य, चूर्णं कृत्वा तैरेव त्रिधा त्रिधा पुटेत् । पुनर्यथेच्छं कांश्चित्पुटान्दत्त्वा संरक्षेत् । इदं विशुद्धं "मण्डूरभस्म" ।

इति क्रिमिचिकित्सा

# अथ पाण्डुरोगाधिकारः

अथ पाण्डुरोगचिकित्सितमुच्यते । पुरीषजाः सूक्ष्माः क्रिमय एव पाण्डुरोगं जनयन्तीति क्रिमिचिकित्सानन्तरमेव तच्चिकित्साक्रमो युक्तः । तत्र—पाण्डुरोगस्य साध्यत्वं सम्यग्विचार्य, पाण्डुरोगस्य पित्तप्रधानत्वात् रक्तदूष्यत्वाच्च भेषजसंस्कृतं घृतं पाययित्वा रोगिणः स्नेहनं कार्यम् । ततः कफोद्रेकावस्थायां मृदुवमनं कारयित्वा, तीक्ष्णं विरेचनं देयम् । प्रवृद्धे पाण्डुरोगे तु—"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोग-पीडितम्" इत्यादिवाक्यैर्वमनं निषिध्यते, ततः केवलमेव विरेचनं देयम् । अनन्तरं च शमनक्रिया कार्येति क्रममनुसन्धाय चिकित्सितमुच्यते—

स्नेहनार्थे महातिक्तं घृतं सकलसम्मतम् ।
रेचनार्थे त्रिवृच्चूर्णं पाण्डुरोगे द्विशर्करम् ॥ १ ॥
चूर्णमाम्रहरिद्रायाः शमनं वा वराजलम् ।
देवदालीजलं नस्यं द्रोणपुष्पीरसोऽञ्जनम् ॥ २ ॥

स्नेहनार्थे—"महातिक्तघृतेन" स्नेहनं विधेयम् । तन्निर्माणविधिरयम्—सप्तपर्णः="सतौना" इति प्रसिद्धः,प्रतिविषा="अतीस" इत्युक्ता, कृतमालः, कटुकी, पाठा="पाढ" इति प्रसिद्धा, मुस्तकम्, उशीरम्, त्रिफला, पटोलपत्रम्, निम्बत्वक्, पर्पटः धन्वयासकः="जवासा" इति प्रसिद्धः, चन्दनम्, पिप्पली, गजपिप्पली, पद्मकम्="पद्माख" इति ख्यातम्, हरिद्रा, दारुहरिद्रा, वचा, इन्द्रवारुणीमूलम्, शतावरी, शारिवे="अनन्तमूल" इत्याख्ये, इन्द्रयवः, वासा, मूर्वा="चूरनहार" इति प्रसिद्धा, गुडूची, किराततिक्तः, मधुयष्टी, त्रायमाणा—सर्वमेतं संभारं जलेन शिलायां प्रपिष्य, कल्कं निर्माय, कस्मिंश्चित्कटाहे तं निधाय, तस्माच्चतुर्गुणं घृतं, घृताद्द्विगुणमामलकस्वरसमष्टगुणं जलं च समावाप्य सर्वमैकध्यं विपचेत् । तदेवं महातिक्तं घृतं सिद्ध्यति । तत्र—"उत्तमस्य पलं मात्रा, त्रिभिश्चाक्षैस्तु मध्यमे । जघन्यस्य पलार्धेन स्नेहक्वाथ्यौषधेषु च । " इत्यादि-परिभाषानुसारं यथायथं मात्रां प्रकल्प्य पेयम् । रेचनार्थे—त्रिवृत्="निसोथ" इति प्रसिद्धा, तस्याश्चूर्णं द्विशर्करम् । तेन शर्करा १ कर्ष. ५ मा. ४ रत्तिमिता त्रिवृच्चूर्णन्तु १०मा. ८ रत्तिमितमिति द्वयं मिलितं पलार्धमानेन प्रदेयम् । एवं स्निग्धविरिक्तायाम्रहरि-द्रायाः="आमी हल्दी " इति ख्यातायाश्चूर्णं शमनार्थे देयम् । यद्वा—वरा=त्रिफला तस्या जलम्=क्वाथः । देवदाली=" सोनैया, घघरबेल " इत्यादिनामभिः प्रसिद्धा, तस्या रसो रजो वा नस्यत्वेनोपयुज्यते । द्रोणपुष्पी=फलेपुष्पा "गूमा, दणघल" इत्यादि

नामभिः ख्याता तस्या रसोऽञ्जनार्थे प्रयुज्यते । एते प्रयोगाः कोष्ठाक्षिनासाविरेचनेन पाण्डुरोगमपघ्नन्ति ।

शर्करामधुरं पीतं बालमूलजलं पलम् ।
दुर्जयां पाण्डुजां पीडां व्रीडां लम्भयति ध्रुवम् ॥ ३ ॥

शर्करेति—बालमूलस्य=अपक्वस्य "मूली" इतिख्यातस्य कन्दस्य जलम्=स्वरसः सितायुतं पलप्रमाणं पेयम् । अनेन सप्तभिर्नवभिर्वा दिनै रोगशान्तिः स्यात् ।

पौनर्नवाख्यमण्डूरो मधुमण्डूरकोऽथवा ।
चूर्णं नवायसं वापि पाण्डुशोफोदरार्तिजित् ॥ ४ ॥

पौनर्नवाख्येति—पुनर्नवा, त्रिवृत्, शुण्ठी, पिप्पली, मरिचम्, विडङ्गम्, देवदारु, चित्रकः, पुष्करमूलम्, त्रिफला, हरिद्राद्वयम्, दन्ती, चव्यम्, इन्द्रयवः, कटुकी, पिप्पलीमूलम्, मुस्तम्—सर्वाण्येतानि तुल्यानि गृहीत्वा, सर्वापेक्षया द्विगुणं मण्डूरं तस्माच्चाष्टगुणं गोमूत्रं निक्षिप्य विपचेत् । द्रवे क्षीणे "पुनर्नवामण्डूरः" निष्पद्यते । "मधुमण्डूरक"स्तु—विशुद्धमण्डूरं त्रिफलाक्वाथेन विमर्द्य विमर्द्यैकविंशतिपुटाः प्रदेयाः, गोमूत्रेण कुमारिकारसेन चापि तावन्त एव पुटा देयाः, तदनु—"गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम्" इति परिभाषितेन पञ्चामृतेनाप्येकविंशतिरेव पुटाः प्रदातव्याः, तदेवं मिलितैश्चतुरशीति ( ८४ ) संख्यैः पुटैः सम्पद्यते, कणामधुभ्यां च संसेव्यते । "नवायसचूर्ण-" प्रकारः—त्र्यूषणत्रिफलाविडङ्गमुस्तचित्रकास्तुल्यमानाः, लोहभस्म तु एकभागापेक्षया नवगुणमिति सर्वं सम्मेल्य चूर्णं विधेयम् । तदिदमादौ रक्तिद्वयमितं घृतमधुभ्यां लिह्यात्, ततो माषकद्वयं यावद्रक्तिद्वयवृद्ध्या सेवेत । तक्रानुपानेनापि संसेव्यते । त्रयोऽप्यमी योगाः पाण्डुरोगं शोफमुदररोगमन्यानपि बहून् रोगान्नाशयन्ति ।

लोहासवो वा त्रिफलावलेहो मण्डूरकारिष्टमिति त्रिकेण ।
सकामलापाण्डुहलीमकानि व्रजन्तिनाशं ननु जाठराणि ॥ ५ ॥

लोहासव इति—लोहासवप्रकारः—लोहचूर्णम् ४ पलानि, त्रिकटुकम् ४ प०, त्रिफला ४ प०, यवानी ४ प०, विडङ्गम् ४ प०, मुस्तकम् ४ प०, चित्रकः ४ प०, धातकीपुष्पाणि २० प०, मधु ६४ प०, गुडः १०० प०, जलम् ३२ प्रस्थाः—सर्वमिदं नीनमृद्भाजने निक्षिप्य, पात्रस्य मुखं सम्मुद्रय त्रीन्मासान् यावन्निदध्यात् । ततो

वस्त्रगालितो "लोहासवः" सम्पद्यते। त्रिफलाद्यवलेहविधिः—त्रिफला ३ तो०, त्रिकटुकम् ३ तो०, चित्रकः १ तो०, विडङ्गम् १ तो०, शुद्धं शिलाजतु ५ तो०, रौप्यमाक्षिकभस्म ५ तो०, स्वर्णमाक्षिकभस्म ५ तो०, लोहभस्म ५ तो०, सिता ८ तो०—सर्वं सम्भारं सञ्चूर्ण्य मधुनावलेहः कार्यः। मण्डूरकारिष्टरीतिः—शुद्धं मण्डूरचूर्णम् ५० पलानि, तिलप्रमाणानि लोहपत्राणि ५० प०, पुराणो गुडः ५० प०, बदरीफलं बदरीत्वग्वा ३ प्रस्थाः, दन्ती २ प०, चित्रकः २ प०, पिप्पली ४ प०, विडङ्गम् ४ प०, त्रिफला ३ प्रस्थाः, जलम् १६ प्रस्थाः—सर्वमिदं चीनमृद्भाजने सम्मुद्रय पक्षमेकं धान्यराशौ निदध्यात्। ततो वस्त्रेण गालयेत्। योगत्रयेणानेन पाण्डुरोगः, पाण्डुरोगिणः पित्तकृद्वस्तुभक्षणात्समुत्पन्ना हारिद्रत्वङ्नयनत्वादिभिर्दाहारुचिदौर्बल्याविपाकादिभिश्च लक्षणैर्युता कामला, "यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः। बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुर्ज्वरः" इत्यादिलक्षणैर्युतं वातपित्तप्रकोपभूयिष्ठं हलीमकमन्येऽप्युदररोगाः विनश्यन्ति।

**केवला कटुका कल्ये कीलालैः कवलीकृता।**
**कामलायाः कदम्बस्य कोटिकष्टानि कालयेत् ॥ ६ ॥**

केवलेति—केवला=द्रव्यान्तररहिता कटुका="कुटकी" इति ख्याता कल्ये=प्रातःकाले कीलालैः=जलैः कवलीकृता=निगीर्णा सती कामलायाः=पाण्डुरोगविशेषस्य कदम्बस्य=समूहस्य कोटिकष्टानि=अनेकानि दुःखानि कालयेत्=नाशयेत्। कटुकाया मात्रा कर्षमिता। कटुकायाः कटुत्वाद्भीतैस्तु समानमाना सिताप्यत्र प्रक्षेप्या। अत्र ककारारब्धः शब्दकदम्बः किमपि कुतूहलं करोति चित्ते।

**निम्बैन्द्रीकोविदाराभाक्षुद्राकट्वीकृतं शृतम्।**
**सगुडं शमयेत्पाण्डुमलबन्धोपदंशकान् ॥ ७ ॥**

निम्बेति—अत्र षडौषधानि सन्ति। तत्र–निम्बस्यान्तरत्वग्ग्राह्या, इन्द्रवारुण्या मूलम्, "कचनार" इति ख्यातस्य कोविदारस्य त्वक्, आभा=बब्बूलस्तस्य फलम्, क्षुद्रा=कण्टकारी तस्या मूलम्, कट्वीतु यथाप्राप्ता—सर्वाणीमानि द्रव्याणि प्रत्येकं चतुःपलमितानि यवक्षुण्णानि दिनमेकं द्वादशप्रस्थमिते जले निमज्ज्यापरदिने तत्र प्रस्थार्धप्रमितं पुराणं गुडं निक्षिप्य विपचेत्। प्रस्थत्रयावशेषेऽवतार्य पटेन पावितमेतत् शृतं काचकूप्यां तद्भाण्डे वा विनिक्षिप्य तस्य सप्त भागान् परिकल्प्य महाव्याधौ सप्तभिरेव दिनैः पिबेत्। अल्पव्याधौ तु दोषानुसारं मात्रां परिकल्पयेत्। पथ्यमत्र–स्वल्पसैन्धवा सघृता तन्दुलमुद्गकृशरा। घृतप्लुता गोधूमचणकफुल्लिका वा। गोदुग्धमपि। प्रायो रक्तविकृतौ पाण्डुरोगे विबन्धे तथोपदंशे प्रयुज्यते।

**सपादाढकं लोहदध्नोर्गुडस्य पृथक्प्रस्थकं गोकुमारीजलस्य ।**
**ससौराञ्जलेश्वेति पात्रे स्थितं तद्दृढे मुद्रितं पच्यतां भूमिगूढम् ॥ ८ ॥**
**दिनैः सप्तभिस्तस्य सम्पद्यतेऽर्कः पटैः पावितो जायते रोगहारी ।**
**यकृत्प्लीहगुल्माग्निमान्द्योदरार्शोव्यथाः पाण्डुजा वा कथाः संक्षिणोति**

सपादेति—लोहचूर्णदधिगुडानां पृथक् सपादाढकम्=पञ्चप्रस्थाः, गोमूत्रस्यैकः प्रस्थः, घृतकुमारिकारसस्याप्येकः प्रस्थः, "कलमीसोरा" इति ख्यातस्य कलसोरकस्याञ्जलिः=कुडवः—सर्वमेतद्दृढे चीनमृद्भाण्डे समावाप्य पात्रस्य मुखं मृल्लिप्तवस्त्रेण सम्मुद्य, भूमौ गर्तं कृत्वा, तत्र तद्भाण्डं संस्थाप्य भूमेरूष्मणा पक्तव्यम्, नतु वह्निना । सप्ताहात्परतो भाण्डं निष्कास्य, वस्त्रेण संगाल्य, काचकूपीषु भृत्वा रक्षेत् । यथाग्निवयोबलञ्चार्कमिमं पिबेत् । यकृत्प्लीहपाण्ड्वादिष्वनुपमः । केचित्तु—सुगूढपात्रस्योपरि छागकरीषतुषादिकं प्रज्वाल्य सप्ताहमनिशं तापदानमुपदिशन्ति । युक्तश्चैतत्, अन्यथा भूमेरूष्मणा केवलमर्कनिष्पत्तौ सन्देह एव । लोहमत्र पुराणतरं मलाढ्यं च प्रक्षेप्यमितिरहस्यम् । श्लोकयोरनयोर्भुजङ्गप्रयातं वृत्तम् ।

**मृत्पात्रे मेहदीकर्षं नक्तं नीरेषु निक्षिपेत् ।**
**प्रातः पिष्ट्वा पिबेत्पाण्डौ सितास्वादूकृतं हिमम् ॥ १० ॥**

मृदिति—रात्रौ मृत्पात्रे=नवीनलघुहण्डिकायां मेंहदी=अनेनैव नाम्ना प्रसिद्धा यस्याः पत्राणां चूर्णं जललुलितं स्त्रीभिः पाणिपादे रक्तिमापादनायालक्तकस्थाने विलिप्यते म्लेच्छैस्तु पालित्यनाशनाय श्मश्रुलोमसु । तस्याः पत्राणि तोलकमितानि रात्रौ जलेनाप्लावयेत् । प्रातस्तानि शिलायां पिष्ट्वा, तज्जलं वस्त्रेण संगाल्य तत्र तोलकद्वयमितां सितां निक्षिप्य पिबेत् । सप्ताहं पानेन पाण्डुरोगो नश्यति ।

**प्रसृतं कलशोरस्य सितागौरस्य मार्तिके ।**
**जले विलोल्य सप्ताहं पिबतां कामला कुतः ॥ ११ ॥**

प्रसृतमिति—कलशोरः=" कलमीसोरा " इति ख्यातः, तस्य प्रसृतम्=पलद्वयं सितापि तावती, द्वयमिदं मृत्तिकापात्रे द्विप्रस्थे जले विलोलयेत । प्रत्यहं मात्रया पिबेत् । केषाञ्चिदनेन ज्वरोऽपि भवतीति रहस्यम् ।

इति पाण्डुरोगाधिकारः ।

---

# अथ रक्तपित्ताधिकारः

अथ पाण्डुरोगवद्रक्तपित्तस्यापि पित्तजन्यत्वात्तदनन्तरं रक्तपित्तचिकित्सितमुच्यते। तत्र रक्तपित्तस्य नासाक्षिकर्णास्यैरूर्ध्वं मेढ्रयोनिगुदैरध इति द्विधा प्रवृत्तिः। तदेवम्—"मार्गं दोषानुबन्धश्च निदानं प्रसमीक्ष्य च। लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्" इति भगवच्चरकानुशासनानुसारिक्रमं निर्दिशति—

**अपतर्पणमेवादौ रक्तपित्ते विधीयते।**
**तर्पणं लाजचूर्णैर्वा प्रतिलोमक्रिया तथा॥ १॥**

अपतर्पणमिति—यदि रोग ऊर्ध्वमार्गगः, सामं पित्तं, कफस्थो दोषः, स्निग्धोष्णं निदानं भवेत्तर्हि अपतर्पणम्=लङ्घनं विधेयम्। अन्यथा तु तर्पणम्। तच्च तर्पणं लाजचूर्णैः सघृतक्षौद्रैर्विधेयम्। अत्र तर्पणशब्देन तर्पयतीति व्युत्पत्त्या भोजनं गृह्यते। किञ्चात्र प्रतिलोमक्रिया कार्या। अधोगे वमनमूर्ध्वगे तु विरेचनमिति भावः।

**पर्पटगोस्तनिकाधनिकानां सामलकीफलसिंहमुखानाम्।**
**शीतमुदस्यति शोणितपित्तं वारवधूरिव कामुकवित्तम्॥ २॥**

पर्पटेति—पर्पटः="पित्तपापड़ा" इति प्रसिद्धः, गोस्तनिका=द्राक्षा, धनिका="धनिया" इति प्रसिद्धा, आमलकीफलम्="आंवला" इत्याख्यातम्, सिंहमुखः=आटरूषकः—सर्वेषामेषां शीतम्=हिमकषायः शोणितपित्तम्=रक्तपित्तं वेश्या कामुकवित्तमिवोदस्यति।

**सकलमुनिकुलसम्मतं किल वासिकादलजामृतम्,**
**पिब रक्तपित्तविनाशकं मधुशर्करामधुरीकृतम्।**
**उषसि वा सुरकुसुमकल्कं सर्वतोमुखगालितम्,**
**शर्करास्वादूकृतं पिब रक्तवमने भाषितम्॥ ३॥**

सकलेति—वासिका=आटरूषकस्तद्दलजममृतम्=स्वरसं मधुना शर्करया च मधुरीकृत्य पिब। तद्धि-रक्तपित्तविनाशने सकला ये मुनयस्तेषां कुलस्य=समूहस्य सम्मतं वर्तते। यद्वा—रक्तवमने=रक्तपित्तरोगे मुखतो रक्तनिर्गमे प्रातरेव लवङ्गकल्कं सर्वतोमुखम्=जलं तेन गालितं शर्करया स्वादूकृतं च पिब। अत्र—पूर्वोक्तं गीतिकाच्छन्दः। अग्रिमश्लोकयोरपीदमेव।

**कमलकिंशुककोविदारककिङ्किरातककुसुमकैः,**
**कल्कितैरभिभक्षितैरनुपीतशीतसितोदकैः।**

सपदि शाम्यति रक्तपायुजरुधिरपित्तशतं सखे !
व्यञ्जयामि मनोज्ञमौषधमद्भुतं तव सम्मुखे ॥ ४ ॥

कमलेति—कमलम्, किंशुकः=पलाशः कोविदारकः="कचनार" इति ख्यातः, किङ्किरातकः="कीकर" इति प्रसिद्धो बब्बूलः—एतेषां पृथक्पृथग्गृहीतैर्यथालाभं मिश्रितैर्वा पुष्पैः कल्कीकृतै प्रातरभिभक्षितैरनु=पश्चात् पीतं शीतं सितोदकम्="शरबत" इति प्रसिद्धं शार्करं येषां तैस्तथाभूतैः रक्तार्शसां रक्तपित्तानाञ्च शतं सपदि शाम्यतीति सखे ! तवाग्रत इदं मनोज्ञमद्भुतञ्चौषधं व्यञ्जयामि=प्रकटयामि। कल्कस्य मात्रा तोलद्वयमिताऽऽदेया ।

खदिरशाल्मलिकोविदारकगुन्द्रिकासुमजं रजः,
झटिति मधुना लीढि नर ! यदि सन्ति शोणितजा रुजः ।
जलगालितस्तनुवेल्लजो दुःस्पर्शपल्लवकल्पितः,
सततशोणितमेहिनो भविकाय कल्को जल्पितः ॥ ५ ॥

खदिरेति—अयि नर ! यदि ते शोणितजाः=रक्तार्शोरक्तपित्तादिजा रुजः सन्ति तर्हि खदिरः="खैर" इति प्रसिद्धः, शाल्मलिः="सेमल" इति ख्यातः, कोविदारकः=पूर्व-भुक्तः, गुन्द्रिका="गूंदी" इति प्रसिद्धा यस्याःशुष्कफलानि शर्कराशोधनायार्द्राणि तु भक्षणा-योपयुज्यन्ते । एतेषां सर्वेषां पृथक् पृथक् यथालाभं मिलितानां वा पुष्पाणां रजः=चूर्णं मधुना लीढि=आस्वादय । शिश्नद्वारेण यस्य रक्तं निर्गच्छति तस्य रक्तपित्तिनो भविकाय= कल्याणाय तु तनुवेल्लजः=स्वल्पमरिच्युतोदुःस्पर्शः=यवासः"जवासा" इति प्रसिद्धस्त-रिकसलयैः कल्पितो जलेन गालितश्च कल्को जल्पितः । योगद्वयेऽप्यत्रेच्छा चेत्सि-ताऽपि प्रक्षेप्या ।

दूर्वादाडिमकुसुमस्वरसो नासासु योजितः पुंसाम् ।
शमयति शोणितसरणं पुनरुपकरणं किमिच्छसि भ्रातः! ॥६॥

दूर्वेति—दूर्वायाः स्वरसो दाडिमकुसुमस्य स्वरसो वा पृथगपि चेन्नासिकायां प्रयुज्येत तर्हि नासिकातो रुधिरनिर्गमरूपं रक्तपित्तं शमयति, मिलितस्य तथा करणे तु कथैव का ? पद्येऽत्र गीतिश्छन्दः ।

रुधिररोधि खलु शुक्तविलोलैः, शिरसि विलेपनमीश्वरबोलैः ।
धनिकामलगैरिककलसोरैरुपदेहनमपि शोणितचोरैः ॥ ७ ॥
मस्तकमथ बदरीदलकल्कैरथवा लिम्पत निम्बजवल्कैः ।
अपि तालुनि निहिताऽऽमलपोली,नासास्रुतशोणितदम्भोलिः॥८॥

सितदूर्वारसजनितं नस्यम्, शमयति शोणितपित्तमवश्यम् ।
अथ च खरीजपुरीषरजोभिर्नासासृजि नावनमतिशोभि ॥ ९ ॥
घ्राणगतापि च गोमयधूलिः, शमयति शोणितमघमिव शूली ।
कदलीरसनावनमपि पथ्यम्, मायाफलनावनमिव तथ्यम् ॥ १० ॥

रुधिरेति—चतसृभिश्चतुष्पदीभिर्नासास्रुतरक्तपित्तनाशका दश प्रयोगाः प्रदर्शिताः। तत्र—"अंगूरका सिरका" इति प्रसिद्धे शुक्ते ईश्वरबोलं संमिश्र्य शिरसि विलेपनमिति प्रथमः। धान्यकम्, आमलकम्, गैरिकम्, कलसोरकम्="कलमीशोरा" इति प्रसिद्धम् एतैः शिरसि विलेपो द्वितीयः। बदरीदलकल्कलेपस्तृतीयः। निम्बपत्रप्रलेपश्चतुर्थः। आमलकस्य जलेन शिलायां पिष्टस्य कल्पिता पोली=रोटिका नासिकातः स्रुतस्य रक्तपित्तस्य नाशने दम्भोलिः=वज्रभूतेति पञ्चमः। श्वेतदूर्वाया रसेन नस्यमिति षष्ठः। अत्र प्रयोगपौनरुक्त्यमिति न शङ्कनीयं पूर्वत्र मिलितेन रसद्वयेन नस्यविधानात् सामान्यदूर्वारसेन तद्विधानाच्च। खरीजं पुरीषम्=गर्दभीमलं तस्य रजसा नावनम्=नस्यमतिशोभि भवतीति सप्तमः। घ्राणगता=नस्यत्वेनोपयुक्ता गोमयस्य=गोपुरीषस्य धूलिः=रजः शूली=शिवोऽघम्=पापमिव शोणितपित्तं शमयतीति अष्टमः। सप्तमाष्टमयोः प्रयोगयोः रजःस्थाने रसोऽपि प्रयुज्यते। कदलीदलरसेन नावनमिति नवमः। मायाफलम्="मांजूफल" इति ख्यातं, तद्रजसा तन्मिश्रितेन जलेन वा नावनमिति दशमः।

शृणुत जना औषधमिदं नासागतरुधिरस्य ।
ससितामलजलपानकं प्रीतिकरं नहि कस्य ॥ ११ ॥

शृणुतेति—आमलकं रात्रौ जले निक्षिप्य, प्रातः शिलायां प्रपिष्य जलेन संगाल्य, तत्र सितां प्रक्षिप्य पिबेत। दोहावृत्तमत्र।

शोणितचन्दनचन्द्रयोरशने रुचिमाधेहि ।
सितदूर्वारसरसनमपि शोणितशत्रुमवेहि ॥ १२ ॥

शोणितेति—शोणितचन्दनम्=रक्तचन्दनम्, चन्द्रः=कर्पूरस्तयोर्जललुलितयोरशने=भक्षणे रुचिमाधेहि। किंवा—श्वेतदूर्वारसस्य रसनम्=पानमपि शोणितशत्रुम्=रक्तपित्तनाशकमवेहि=जानीहि। वृत्तमुक्तम्।

मिष्टालाबूकर्कटीखारखसोत्थैर्बीजैः सारं त्रापुषैश्चाददीत ।
तत्रावाप्य स्वादुखिस्तां निशास्तां कन्दं चैतत्पीयतां पित्तरोगे ॥ १३
सारो वाऽयं शार्करैश्चेद्गनप्साजन्यैः पेयो नोपमेयो गुणैः स्यात् ।
पित्तासृग्जां श्वासकासादिजां वा पीडां क्रीडातः क्षिणोति क्षणेन॥१४

मिष्टेति—मिष्टालाबूः="मीठी लौकी" "घीया" इत्यादिनामभिः प्रसिद्धा, कर्कटी="ककड़ी" इति ख्याता, खाखसः="पोस्त डोड़ी" इति प्रसिद्धः—एतेषां त्रयाणां बीजानि तथा "खीरा ककड़ी" इति प्रसिद्धस्य त्रपुसस्य बीजानि च जलेन प्रपिष्य, वस्त्रेण संगाल्य तत्सारमाददीत। तत्र च स्वादुखिस्ताम्="सीरे खिस्त" इति प्रसिद्धां, निशास्ताम्=गोधूमजामनेनैव नाम्ना प्रसिद्धां, कन्दम्="गुलाब का गुलकन्द" इति प्रसिद्धं चावाप्य रक्तपित्तरोगे पीयताम्। अस्मिन्नेव सारे ज्वराधिकारोक्तविधिना निष्पादितं वनप्साशार्करं निक्षिप्य चेत्पीयेत तर्हि तद्गुणैरुपमेयमेव न भवेत्। औषधमिदं रक्तपित्तश्वासकासादिजां पीडां क्षणेन क्रीडात एव क्षिणोति=नाशयति।

**जयेत्खण्डकूष्माण्डकः पाण्डुहिक्काज्वरश्वासकासाम्लपित्तास्रपित्तम्।**
**तथैवार्दते खण्डखाद्यावलेहो बृहद्रक्तपित्तं च चित्तं प्रसाद्य ॥ १५ ॥**

जयेदिति—"खण्डकूष्माण्डकः" पाण्डुरोगम्, हिक्काम्, ज्वरम्, श्वासम्, कासम्, अम्लपित्तम्, रक्तपित्तञ्च जयेत्। तथैव—"खण्डखाद्यावलेहः" चित्तं प्रसाद्य बृहदपि रक्तपित्तमर्दते=हिनस्ति। खण्डकूष्माण्डकनिर्माणप्रकारः—कूष्माण्डम्="कुम्हड़ा" "पेठा" इत्यादिनामभिः प्रसिद्धमादायोपरिस्थां त्वचं बीजादिकञ्चापनीय, तस्मात्पलशतमादाय, तत्र किञ्चिज्जलं प्रक्षिप्य कटाहे मन्दाग्निना विपचेत्। तत उत्स्विन्नान्कूष्माण्डखण्डान्वस्त्रेण निष्पीडयेत्। निष्पीडनाद्गलिते तद्रसे शतपलमितां सितां प्रक्षिप्य तन्तुलीं "चासनी" इति ख्यातां कुर्यात्। निष्पीडितान्कूष्माण्डखण्डांश्च प्रस्थप्रमिते घृते संभर्ज्य तन्तुल्यां समावपेत्। तदनु—पिप्पलीशुण्ठीजीरकाणां प्रत्येकं द्वे द्वे पले, दारुसितैलापत्रमरिचधान्यकानां प्रत्येकं पलार्धमिति सर्वं विचूर्ण्य तत्र क्षिपेत्। अर्धप्रस्थमानं शुद्धं मधु च दत्त्वा सर्वमैकध्यं संमिश्र्य चिक्कणभाजने निदध्यात्। यथाग्निबलं खादेच्च। खण्डखाद्यावलेहविधानञ्चैतत्—शतावरी, गोरक्षमुण्डी, बला="खरैंटी" इति प्रसिद्धा, गुडूची, त्रिफला, पुष्करमूलम्, भार्गी="भाडंगी" इति ख्याता, आटरूषकः, खदिरमूलत्वक्, तालमूली="स्याह मुसली" इति ख्याता—एतानि सर्वाणि पृथक्पञ्चपलमितान्यादाय १६ प्रस्थप्रमिते जले निष्क्वाथ्य, अष्टमांशं प्रस्थद्वयमवशेष्य वस्त्रेण पावयेत्। तदनु तत्र—स्वर्णमाक्षिकभस्मनो द्वादश पलानि, सुवर्णभस्मनो लोहभस्मनश्च प्रत्येकं पञ्च पलानि, सिताया द्वादश पलानि, घृतस्य षोडश पलानि—सर्वमेतन्निक्षिप्य पुनर्विपचेत्। यदा पाको गुडतुल्यो भवेत्तदा तत्र—वंशरोचना, विडङ्गम्, पिप्पली, शुण्ठी, श्वेतजीरः, कृष्णजीरः, शृङ्गी="काकड़ासींगी" इति प्रसिद्धा, त्रिफला, धान्यकम्, मरिचम्, नागकेसरः—इत्येतानि पृथक् पलप्रमाणानि प्रक्षिप्य चीनमृद्भाण्डे निदध्यात्। अन्यथाप्ययं निर्मीयते—तत्र स्वर्णमाक्षिकसुवर्णलोहभस्मनां स्थाने निम्बुरसेन पिष्टया मनःशिलया स्वर्णमाक्षिकेणोभाभ्यां वा विलिप्य विलिप्य दग्धस्य कान्तलौहस्य भस्मनो द्वादश पलानि प्रक्षिप्यन्ते।

गुडतुल्यपाकावधिक्रियानन्तरं प्रक्षिप्यमाणेष्वौषधेषु च पलमितं शुद्धं शिलाजतु प्रस्थार्धं मधु च प्रक्षिप्यते—इत्येव विशेषः। शिष्टन्तु पूर्ववदेव। सोऽयं "खण्डखाद्यावलेहः" रक्तित्रयमारभ्य रक्तिद्वयवृद्धया माषकचतुष्टयं यावत् दुग्धानुपानेन संसेव्यः। अवलेहद्वयमिदं यथोक्तगुणप्रदम्। भुजङ्गप्रयातं भवेदत्र वृत्तम्।

**वासाघृतं वापि वरीघृतं वा दूर्वाघृतं चैव घृतं शृणाति।**
**पित्तास्रमेलादिगुटीव कालैः कियद्भिरित्यत्र बहु प्रमाणम्॥१६॥**

वासेति—"वासादिघृतम्", "शतावरीघृतम्," "दूर्वाद्यघृतम्", "एलादिगुटी" इत्येतदौषधचतुष्टयमध्यात्किमप्येकं प्रयुक्तं रक्तपित्तं नाशयति। वासाघृतनिर्माणप्रकारः—शाखापत्रमूलादिसहितस्य सर्वाङ्गस्याटरूपकस्य प्रस्थचतुष्टमादाय तत्राष्टगुणं जलं निक्षिप्य विपचेत्। अष्टमांशावशेषे सति पटेन पावयेत्। चतुःप्रस्थप्रमितमिमं कषायं, प्रस्थमानं घृतं, चतुष्पलमितमाटरूपकपुष्पकल्कञ्चैकध्यं विपचेत्। "वर्तिवत्स्नेहकल्कः स्याद्यदाङ्गुल्या विमर्दितः। शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा" इत्यादिवचनानुसारं सिद्धौ सत्यां घृतं वस्त्रेण संगाल्य तत्र चतुष्पलं मधु निक्षिप्य मात्रया सेवेत। शतावरीघृतप्रकारः—शतावरी, दाडिमम्, तिन्तिडीकम्="डांसरिया" इति प्रसिद्धम्, काकोली तदभावे अश्वगन्धा, मेदा, महामेदा—एतयोर्द्वयोरभावे शतावरी, मधुयष्टी, विदारीकन्दम्, बीजपूरकमूलम्—सर्वाण्येतानि कल्कीकृत्य, कल्कापेक्षया चतुर्गुणं घृतं घृतापेक्षया चतुर्गुणं जलं च निक्षिप्य विपचेत्। दूर्वाद्यं घृतम्—दूर्वा, कमलकिञ्जल्कम्, मञ्जिष्ठा, एलवालुकम्, हरीतकी, लोध्रम्, उशीरम्, मुस्तकः, चन्दनम्, पद्मकम्="पद्माख" इति ख्यातम्—एतानि पृथक् पृथक् कर्षमितानि गृहीत्वा, कल्कीकृत्य, प्रस्थप्रमितं घृतं प्रक्षिप्य, घृताच्चतुर्गुणं तण्डुलजलं चतुर्गुणमेवाजादुग्धं दत्त्वा विपचेत्। तण्डुलजलन्तु—तण्डुलेषु चतुर्गुणं जलं प्रक्षिप्य, किञ्चिदुपेक्ष्य, विमर्द्य वस्त्रेण गालनान्निष्पद्यते। एलादिगुटीविधिः—एला, पत्रम्="तेजपात" इति प्रसिद्धम्, दारुसिता—एतानि प्रत्येकमर्धकर्षप्रमितानि, पिप्पली अर्धपलमिता, सिता, मधुयष्टी, खर्जूरफलत्वक्, द्राक्षा—एतानि प्रत्येकं पलमितानीति सर्वं प्रपिष्य मधुना गुटिका विधेयाः।

**स्वाद्रीफलानि प्रतनानि पिष्ट्वा पित्तास्रहृत्यै मधुनावलेहः।**
**अर्को जपापुष्पभवोऽथवा स्यात्पित्तास्रनुद्वापि परूषकोत्थः॥१७॥**

स्वाद्रीति—स्वाद्रीफलानि="छोहारा" इति प्रसिद्धानि प्रपिष्य पुराणेन मधुना संनीयावलेहः कार्यः। सोऽयं रक्तपित्तं नाशयति पुष्टिं च विदधाति। "जपापुष्पार्कः" "परूषकार्क-"श्चापि रक्तपित्तनुत। जपापुष्पार्कस्त्वेवं निर्मातव्यः—प्रातः काचकूप्यां

सद्योलूनानि जपापुष्पाणि सप्त निक्षिप्य, द्वित्रिनिम्बुरसैस्तान्याप्लाव्य, काष्ठखण्डेन संक्षोभ्य यावद्दिनं रक्षेत । सायं तत्र-"गुलाब का अर्क" इति प्रसिद्धं तरुणीजलं "केवड़े का अर्क" इति प्रसिद्धं केतकजलञ्च द्विपलं द्विपलं, सिताऽपि पलद्वयोन्माना, शुद्धजलं च षट्पलमिति सर्वं समावाप्य कूर्पी दृढं मुद्रयेत् । तदनु तामाकण्ठं जले निमज्ज्य शिलादिना तथा यन्त्रयेद्यथाऽर्कवेगादुत्प्लवनं न संभवेत् । दिनत्रयादूर्ध्वं वस्त्रेण संगाल्य पुनः कूप्यां भृत्वा तथैव कूर्पी मुद्रयित्वाऽऽकण्ठं वारिणि विन्यस्य दृढपिधानादिकं कुर्यात् । तदनु सप्तदिनैः सिद्धं सुन्दरशोणच्छविमेतं जपापुष्पार्कं कर्षं कर्षं प्रतिदिनं द्वित्रिवारं पिबेत् । रक्तपित्तसौम्याकरक्तमण्डलादिष्वपूर्वचमत्कारी । इत्थमेव परूषकस्य="फालसा"इतिख्यातस्य द्विपलमितानि फलानि गृहीत्वा निम्बुरसतरुणीकेतकार्कसिताजलप्रक्षेपकूपीमुद्रणादिभिः "परूषकार्कं" सम्पादयेत् । एवमेव "राजजम्बूफलार्को"ऽपि निर्मीयते ।

दुर्नामदरपित्तास्रशोषिणी "बोलपर्पटी" ।
"सुधानिधिरसो"ऽप्येवं रक्तपित्तप्रशान्तिकृत् ॥ १८ ॥

दुर्नामेति—शुद्धपारदः १ तो०, शुद्धगन्धकः १ तो०, अनयोः कज्जलीं निर्माय, तत्र बोलस्य="बीजाबोल" इति लोकख्यातस्य चूर्णं १ तोलकमितं दत्त्वा, सर्वं लोहदर्व्यां बादराग्निना विद्राव्य, कदलीपत्रे निक्षिप्य पर्पटीं विदध्यात् । केचिदत्र १ तोलकप्रमितं मोचरसमपि क्षिपन्ति । सेयं "बोलपर्पटी" इति प्रसिद्धा दुर्नाम्नाम्=अर्शसां, दरस्य=स्त्रीणां प्रदररोगस्य रक्तपित्तस्य च शोषिणी भवति । सुधानिधिरसनिर्माणप्रकारः—शुद्धपारदः १ तो०, शुद्धगन्धकः १ तो०, स्वर्णमाक्षिकभस्म १ तो०, लोहभस्म १ तो०—सर्वमिदं त्रिफलाक्वाथेन विमर्द्य गुञ्जाप्रमाणा वट्यो विधेयाः । रात्रिसमये त्रिफलाजलानुपानेन लोहपात्रसिद्धगव्यदुग्धानुपानेन वा संसेवेत । केचित्—त्रिफलाजलेन सर्वं विमर्द्य मूषायां रुद्ध्वा भूधराख्ययन्त्रे पुटनमप्यादिशन्ति ।

यथेच्छं जनो गव्यधारोष्णदुग्धं पिबेद्यो न तस्यास्ररोगप्रसङ्गः ।
पिबेन्मोरटं मायुरोगे तु जाते सितामिश्रितं रक्तशोषज्वरेषु ॥१९॥

यथेच्छमिति—गव्यं धारोष्णं दुग्धं सितां विमिश्र्य पेयम् । मायुरोगे=पित्तरोगे जाते सति मोरटम्=अष्टदुग्धमयं नीरं सितामिश्रितं पिबेत् । शोषज्वराद्व्याधिष्वपि सेव्यते ।

"उशीरासवो" वासवो वृत्रमारी यथास्ते तथा रक्तपित्तप्रदारी ।
न किं पाण्डुकुष्ठप्रमेहप्रहारी मतो वैद्यवर्यैर्महाशक्तिधारी ॥ २० ॥

उशीरासव इति—उशीरम्="खश" इति प्रसिद्धम्, बालकम्="नेत्रबाला" इति ख्यातम्; पद्मम्, गम्भारी, नीलोत्पलम्="नीलोफर" इति लोके, प्रियङ्गुः, पद्मकम्,

लोध्रम्, मञ्जिष्ठा, धन्वयासकः, पाठा, किराततिक्तः, वटजटा, उदुम्बरजटा, शटी="कपूर-काचरी" इति ख्याता, पर्पटः, कुष्ठम्="कूठ" इति प्रसिद्धम्, पटोलम्, काञ्चनारवृक्ष-त्वक्, जम्बूवृक्षस्यान्तरत्वक्, शाल्मलिवृक्षनिर्यासः—एतानि सर्वाणि प्रत्येकं पलमितानि, द्राक्षा विंशतिपलमिता, धातकीपुष्पाणि षोडशपलमितानि, जलं द्रोणद्वयम् (३२ प्रस्थाः) शर्करा शतपलमिता, मधु पञ्चाशत्पलप्रमितम्—सर्वमेतन्नवीनमृद्भाण्डे जटामांस्या मरिचेन वा धूपिते निक्षिप्य, भाण्डस्य मुखं सम्मुद्र्य, मासमेकमुपेक्ष्य वस्त्रेण संगाल्य, काचकूपीषु भृत्वा रक्षेत। सोऽयम्—"उशीरासवः" इति प्रसिध्यति।

**रुजति चेन्नर ! रक्तसृतिर्यदि निपिब केसररम्यसुशार्करम् ।**
**भवजनिं यदि नेच्छसि चात्मनि श्रय तदा करुणाकरमीश्वरम् ॥२१॥**

रुजतीति—चक्रबन्धश्चित्रकाव्यभेदोऽयम्। अयि नर! यदि त्वां रक्तसृतिः=रक्तपित्तरोगो रुजति, तर्हि केसरः=नागकेसरस्तस्य रम्यं श्रेष्ठं च शार्करम्="शर्बत" इति प्रसिद्धं निपिब। भवजनिम्=संसारे जन्म यदि आत्मनि=स्वविषये नेच्छसि तदा करुणाकरमीश्वरं श्रय=सेवय। शार्करनिर्माणन्तु वनप्साशार्करवद्विधेयम्। अत्र कमलकिञ्जल्कस्य शार्करमपि प्रयुज्यते। पद्येऽत्रद्रुतविलम्बितं वृत्तम्। चित्रश्चालङ्कारः।

चक्रबन्धविन्यासः



विप्राग्रणीश्यामलरामसूनुर्यो रामदुर्गे जयदेवजोशी ।
तस्यानुभूतौषधपेटिकायां कोष्ठं प्रपूर्तिं ह्यगमत्तृतीयम् ॥ २ ॥

इति श्रीसिद्धभैषज्यमञ्जूषायां प्रथमप्रकोष्ठे तृतीयं कोष्ठकम् ।



विप्रेति—प्रपूर्तिम्=समाप्तिम् । सुगममन्यत् ।

बाल्ये भ्रातुरसीमवत्सलतया यो जातशिक्षाक्रमः
श्रीश्रीदत्तगुरोः कृपाभरतरोराप्तानवद्यागमः ।
वैद्यानां मणिरामशर्मगुरुणा सिद्धान्तमध्यापितोऽ-
ध्यक्षः संप्रति रामदुर्गरुइयाकालेजकाध्यापने ॥
श्रीमत्पण्डितफुल्लचन्द्रजनुषाऽऽचार्यप्रशंसाजुषा
बीकानेरनृपेष्टरत्ननगरे संवासिना शास्त्रिणा ।
तेन श्रीहनुमत्प्रसादविदुषा भैषज्यमञ्जूषिका-
कोष्ठं कुञ्चिकया तृतीयमिदमस्त्युन्मीलितं सज्जनाः ॥

इति श्रीसिद्धभैषज्यमञ्जूषायाः प्रथमप्रकोष्ठीयतृतीयकोष्ठकविवरणे
कुञ्चिकायास्तृतीय आवर्तः ।



# प्रथमे प्रकोष्ठे
## चतुर्थं कोष्ठकम्

## अथ राजयक्ष्माधिकारः

अथ प्रथमप्रकोष्ठान्तिमं चतुर्थं कोष्ठकमारभमाणः कविवरो राजयक्ष्मचिकित्सितं विवक्षुः स्वशैलीसिद्धं मङ्गलमाशीर्वादरूपेण भूयोऽपि निबध्नाति—

> भ्राजद्भानुविभो विभावसुनिभो भूभृद्भवावल्लभो
> भालभ्राजिभराजभासुरवपुर्भक्तैकभुक्तिप्रदः ।
> भास्वद्भोगभुजङ्गभूषितभुजो भस्माङ्गभूषोविभु-
> र्भूयाद्वो भगवान्भवो भवभिषग्भव्याय भूतप्रभुः ॥ १ ॥

भ्राजदिति—भ्राजन्=प्रकाशमानो यो भानुः=सूर्यस्तस्य विभेव विभा यस्य स तादृशः । विभावसुः=अग्निस्तन्निभः=सदृशः, यद्वा विभावसुना=ललाटतटजाज्वल्यमानतृतीयनेत्रवह्निना नितरां भातीति तादृशः,अतितेजस्वीत्यर्थः। भूभृत्=पर्वतश्रेष्ठो हिमालयस्तद्भवा= भगवती पार्वती तस्या वल्लभः=प्रियतमः । भाले=मस्तके भ्राजी=प्रकाशशीलो यो भानाम्= नक्षत्राणां राजा चन्द्रस्तेन भासुरम्=अत्युज्ज्वलं गौरं च वपुः=शरीरं यस्य तादृशः । भक्तानाम्=निरतिशयभक्तियोगेन भजमानानामेकः=असाधारणो भुक्तिप्रदः=सर्वविधभोगनिष्पादकत्वेनाभ्युदयप्रदाता । भास्वन्तः=फणमणिभिर्विद्योतमाना भोगाः=शरीराणि येषां तादृशा ये भुजङ्गाः=सर्पास्तैर्भूषितौ=कङ्कणादिस्थाननिविष्टत्वेनालङ्कृतौ भुजौ=बाहू यस्य तादृशः । भस्म=भूतिरेवाङ्गानां भूषा=अङ्गरागस्थानीया यस्य सः । विभुः=सर्वव्यापकः । भवस्य=संसारस्य भिषक्=वैद्यः । भूतानाम्=स्थावरजङ्गमानां जीवादीनां प्रभुः= स्वामी । भगवान्=" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥" इत्युक्तषड्विधभगयुक्तो भवः=श्रीशङ्करो वः=युष्माकं स्वस्थानां दीर्घं जिजीविषूणामातुराणाञ्च स्वस्थ्यकामानां भव्याय=मङ्गलाय भूयात् । अत्र—उपमा रूपकञ्चार्थालङ्कारौ । भकाराख्यो वृत्त्यनुप्रासः कामपि मुदमुदञ्चयति । शब्दाश्चात्रत्याः प्रायः सर्वे भकाराद्याः ।

अथ " कासो ज्वरो रक्तपित्तं त्रिरूपे राजयक्ष्मणि " इति भोजोक्ते त्रिरूपे, "भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् । स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि" इति सुश्रुतोक्ते षड्रूपे, " स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः । ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः । " इत्यादिमाधवकरोक्ते एकादशरूपे वा राजय-

क्ष्मणि सर्वत्रैव पित्ताद्रक्तनिर्गमोऽभिहितः। अतो युक्तत्वाद्रक्तपित्तचिकित्सानन्तरं राजयक्ष्मचिकित्सितमुच्यते। तत्रापि–अत्यन्तं लाभप्रदानामाहारविहारादीनां यथोचितं प्रबन्धमकृत्वा ध्वान्तध्वस्तभवने लक्ष्यवेधनमिव रोगिजठरे "यद्वा तद्वा भविष्यति" इति न्यायमनुकृत्य केवलमौषधप्रवेशनमेव न श्रेयस्करम्, अपि तु रोगाणां राज्ञोऽस्योज्जासनाय सर्वभावेनाक्रमणमत्र विधेयमिति प्रथमं दृष्टफलानामाधुनिकचिकित्सावहुमतानामस्मन्महर्षिभिरप्यभ्यनुज्ञातानां विहाररूपाणां केषांचिच्चिकित्सितानां निदर्शनं क्रियते—

निश्चिन्तो निवसन्सुखानिलजले देशे मरौ वा गिरा–
वुद्यानेषु समायनेषु च गृहारामेषु कामं भ्रमन्।
गृह्णन् विष्णुपदामृतं त्रिपथगातीरेऽच्छनीरं पिबन्,
शोषी विन्दति शर्म कर्मकुशलं वैद्यं च भक्त्याऽऽश्रयन्॥ २॥

निश्चिन्त इति—शोषी=क्षयामयी जनो निश्चिन्तः="अहं रुग्णोऽस्मि, क्षीणोऽस्मि, किं करोमि, क्व गच्छामि" इति शोकं दूरे परिहृत्य प्रसन्नचित्तः सन् सुखः=सुखकारी अनिलः=वायुर्जलं च यत्र तादृशे मरौ देशे="मरुभूरारोग्यदेशानाम्" इति भगवच्चरकाचार्यप्रशंसिते मारवाडप्रान्ते, अथवा गिरौ="भुवाली, धर्मपुरा, शिमला, मंसुरी" इत्यादिप्रसिद्धपर्वतीयस्थानेषु निवसन्=स्वास्थ्यकामनया तत्र गत्वा कश्चित्कालं स्थितिं कुर्वन्, समानि = श्लक्ष्णकुट्टिमपाषाणादिनिर्मितत्वादनुच्चावचान्ययनानि= "सड़क" इत्याख्या मार्गविशेषा येषु तेषूद्यानेषु="बाग, बगीचा" इत्यादिप्रसिद्धस्थानेषु, तत्र गन्तुमशक्तस्तु गृहारामेषु="फुलवाड़ी" इतिप्रसिद्धनिष्कुटेषु कामम्=यथेच्छं, यावता श्रमो न स्यात्तावत्कालमित्यर्थः, भ्रमन्="टहलना" इत्याख्यं चङ्क्रमणं कुर्वन्, त्रिपथगायाः=भगवत्या भागीरथ्यास्तीरे=तटे विष्णुपदामृतम्–विष्णुपदम्=आकाशं तस्यामृतम्=सुधातुल्यं प्राणप्रदम् "ऑक्सिजन" ( Oxygen ) इति प्रसिद्धं विशुद्धं वातविशेषं गृह्णन्=सेवमानः, यद्वा– विष्णुः = सूर्यस्तस्य पदामृतम् = यक्ष्मनाशनान्किरणान्गृह्णन्, यद्वा– विष्णुपदामृतम्=अकालमृत्युहरणं सर्वव्याधिविनाशनं विष्णुपादोदकं गृह्णन्, यद्वा–विष्णुपदामृतम्= भगवच्चरणस्मरणसुधां धारयन्, तथा तत्रैवाच्छनीरम्=गङ्गायाः पावनं पयः पिबन्, कर्मकुशलम्=दृष्टक्रियमौषधप्रयोगचतुरं पुत्रस्येवातुरस्य स्वास्थ्यसम्पादनाय प्रयतमानं पीयूषपाणिं वैद्यं च भक्त्या="तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाह" इत्यादिवेदोदितप्रेम्णाऽऽश्रयन् शर्म=राजयक्ष्मपाशान्मुक्तिरूपं कल्याणं विन्दति=प्राप्नोति।

सर्वश्चायमुपदेशो वेदमूलकः । वेदो हि भगवान् त्रिकालाबाधितज्ञानराशिर्भारतीयार्याणां कश्चित्सौभाग्यभूमा । तत्र हि–नानारोगान् नामग्राहं निर्दिश्य तद्दोषघ्यादिकं तु वर्णितमेव, परं यक्ष्मणः किंचिद्विशिष्टं वर्णनमुपलभ्यते । प्रस्तुतल्लोके चिन्तारहित्य-स्वच्छजलवायुयुक्तप्रदेशस्थितिसूर्यातपसेवनादीनामावश्यकता प्रतिपादिता । तत्र चिन्ता-राहित्यं न केवलं रोगिण एव कृत्यं प्रत्युत वैद्येन स तथाऽऽश्वासनीयो यथा मृत्योर्भयं तस्य नश्येदिति भगवत्याऽथर्ववेदश्रुत्या प्रतिपाद्यते, तद्यथा—

'मा बिभेर्न मरिष्यसि जरदष्टिं कृणोमि त्वा ।
निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव ॥
अङ्गभेदो अङ्गज्वरो यश्च ते हृदयामयः ।
यक्ष्मः श्येन इव प्रापप्तद् वाचासाढः परस्तराम् ॥ ( अथर्व. ५।३०।८–९

अधस्तनेषु मन्त्रेषु विशुद्धस्य मरुस्थलपर्वतादिवातस्य, स्वच्छजलस्य, सूर्यकिरणानाम्, प्रकाशयुक्तस्य गृहस्य च सेवनं स्पष्टमुपदिश्यते——

द्वाविमौ वातौ वात आसिन्धोरापरावतः ।
दक्षं ते अन्य आवातु व्य१न्यो वातु यद्रपः ॥ ( अथर्व. ४।१३।२ )
मा ते प्राण उपदसन्मो अपानोपिधायि ते ।
सूर्यस्त्वाधिपतिर्मृत्योरुदायच्छतु रश्मिभिः ॥ [ अथर्व. ५।३०।१५ ]
इमा आपःप्रभराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुपप्रसीदाम्यमृतेन सहाग्निना ॥ [ अ. ३।१२।९ ]
अयमग्निरुपसद्य इह सूर्य उदेतु ते ।
उदेहि मृत्योर्गम्भीरात्कृष्णाच्चित्तमसस्परि ॥ ( अ.५।३०।११ )
शं न आपो धन्वन्याः शमु सन्त्वनूप्याः ।
शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः ।
शिवा नः सन्तु वार्षिकीः ॥ [ अथर्व. १।६।४ ]

तुलसीदलयुक्तस्य विष्णुपादोदकस्य यक्ष्मनाशकत्वे तु सन्देह एव कः ? अधुना महतो महीयोभिर्यूरोपीयवैज्ञानिकैरिदं निश्चितं यत्–तुलसीतुल्यं कीटाणुनाशकम् ( Jerms killer ) अन्यद्धरित्रीतले नास्ति । पाश्चात्यानां सिद्धान्तोऽस्ति यत्–विशिष्टाः केचन कीटाणव एव राजयक्ष्मणः कारणतामापद्यन्ते । प्रायः सर्वत्राकाशे कोटिशः कीटाणवः परिभ्रमन्ति । सर्वेष्वेव मनुष्येष्वेषामाक्रमणं भवति, परन्तु यस्य प्रबला प्रकृतिरेतेषां विद्रावणे प्रभवति न स यक्ष्मपीडितो जायते । किन्तु यस्य दुर्बला प्रकृतिर्न तथा कर्तुमलं

तदन्तरनुप्रविश्य ते यक्ष्मरोगं जनयन्ति । यक्ष्मिणो वक्षसि कश्चिद्व्रणः संजायते, यत्रैते कीटाणवः ( T. B. ) तिष्ठन्ति । तेषां दीर्घकालस्थित्या तत्स्थानं विषाक्तं जायते, येन ते कीटाणवोऽपि मर्तुमारभन्ते । तदानीं ते तत्केन्द्रस्थानं विहाय परितो बहिः सर्पन्ति । अनया क्रियया च स व्रणो गोलगोलः सम्पद्यते परितश्च तस्य परिधिस्थाने कीटाणुसमूहो विचरति । व्रणस्य मध्यन्त्वत्यन्तविषाक्तपूयेनापूर्यते । भूयोऽपि कीटाः पूर्वतनं स्थानं परित्यज्याग्रे परिधावन्ति, तथा च यक्ष्मिणः सर्वत्र वक्षसि कोथः संजायते । वैज्ञानिकैरनुमितं यद्बहूनि दिनानि कीटानामेकत्र स्थित्या तेषां मलं तत्र चीयते, तेनैव च ते म्रियन्ते । यद्यपि यक्ष्मणः कीटाणवः पूर्वं पाश्चात्त्यैरजरामरा इव मन्यन्ते स्म, तन्मारकमौषधमेव तन्मते नासीत, परन्तु पूर्वोक्तविषाक्तपूयेन तेषां नाशं विलोक्य तदेवौषधत्वेन परिकल्प्य सूचीद्वारेण यक्ष्मिणः शरीरे प्रवेशयितुं तैरारब्धम् । यक्ष्मण इव प्रायः प्रत्येकस्य रोगस्य कारणं पाश्चात्त्याः कीटाणूनेव कल्पयन्ति । कीटाणुसिद्धान्तं स्वोपज्ञं मन्यमानानां पाश्चात्त्यचिकित्सकानां वर्तते महानभिमानः ।

परन्तु वेदेषु कीटाणुसिद्धान्तः सुष्ठितः प्रथममेव निरूपितः प्राप्यते । तथाचाथर्ववेदस्य द्वित्रा मन्त्रा उद्ध्रियन्तेः—

ओते मे द्यावापृथिवी ओता देवी सरस्वती ।
ओतौ म इन्द्रश्चाग्निश्च क्रिमिं जम्भयतामिति । ( ५।२३।१५ )
अस्येन्द्र कुमारस्य क्रिमीन् धनपते जहि ।
हता विश्वा अरातय उग्रेण वचसा मम ॥
यो अक्ष्यौ परिसर्पति यो नासे परिसर्पति ।
दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि ॥
उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ॥

अन्तिममन्त्रे सूर्यः सर्वेषां दृष्टादृष्टानां क्रिमीणां नाशको निर्णीतः । इयांस्तु विशेषः—वैदिकसिद्धान्ते मिथ्याहारविहाराभ्यामदृष्टाच्च शरीरे यक्ष्मणो विषमुत्पद्यते, पश्चाच्च कीटाणूनां तत्र प्रवेशः । यद्यपि विषमिदं तेषां कीटाणूनां सात्म्यं तथापि तेन सहैवान्यदपि भोजनमपेक्ष्यते । संसारे प्रायः सर्वेषामेव विषसेविनां पौष्टिकं भोजनमपेक्षितं भवति । यदि विषसेविनः सर्वस्मिन्नेव खाद्यपेयलेह्यचोष्यात्मके भोजने पौष्टिकपदार्थान् परिहृत्य विषमेव संमेल्य दीयेत तर्हि स्वल्पैरेवाहोभिस्तस्य मृत्युः स्यात् । इत्थमेव राजयक्ष्मविषाशिनां कीटाणूनामपि शुद्धमांसमपेक्षितं भवति । यक्ष्मिणो वक्षस्यत्यधिकविषप्रसारेण शुद्धमांसाभावे सति कीटास्तत्प्राप्तयेऽग्रे परिधावन्ति । ये तु न तथा कुर्वन्ति ते तत्रैव तद्विषं संसेव्य मांसालाभेन म्रियन्ते । येषां तु शरीरे राजयक्ष्मविषमत्युल्बणं भवति तेषां

शरीरे कीटाणूनां प्रवेश एव तावन्न भवति, भवति चेन्न ते चिरं जीवन्ति । यद्येवंविधयक्ष्मिणां शरीरेऽन्तसमयं यावत् राजयक्ष्मकीटाणवश्चेन्न प्राप्येरन्, तदा पाश्चात्त्यवैज्ञानिकानां मतेन तत्र राजयक्ष्मा एव न सिद्ध्येत् । वस्तुतस्तु—युक्तिप्रमाणाभ्यां परीक्षणे वैदिकसिद्धान्त एव विजयते पाश्चात्त्यसिद्धान्तस्तु भ्रान्तिग्रस्तः प्रतीयते । तथाहि-पाश्चात्त्यवैज्ञानिकाः प्रवृद्धे यक्ष्मणि कीटानुपलभ्य तानेव रोगकारणं मन्यन्ते, परन्तु कुतस्तेषामागमनं भवतीति प्रश्नस्योत्तरदानेऽधुना यावत्ते मूका एव । वैदिकसिद्धान्तेतु–

> श्वासो बलासो भवतु मूत्रं भवत्वामयत् ।
> यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥
> उदरात्ते क्लोम्नो नाभ्या हृदयादधि ।
> यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥

इत्यादिभिर्मन्त्रैर्यक्ष्मणि किञ्चन विषमुत्पद्यते इति स्पष्टं प्रतिपाद्यते । तदेव च विषं तान् कीटानाह्वयतीति प्रागुक्तमेव । कीटैर्यक्ष्मा नोत्पाद्यतेऽपितु रोगकारणे प्रकृतिदुर्बलतायां विषे चोत्पन्ने एव कीटाः स्थातुं शक्नुवन्तीति । यदि कीटा रोगकारणं स्युस्तर्हि सर्वेषु मनुष्येषु प्रतिक्षणं जायमाने तेषामाक्रमणे समाने सत्यपि क्वचिदेव रोगोत्पत्तिर्न सर्वत्रेति कोऽस्य वैषम्यस्य हेतुः ? प्रकृतिदुर्बलतेति ब्रूषे चेत्सा एव तु कुतः ? योहि त्रिंशद्वर्षावस्थायां यक्ष्मकीटैराक्रम्यते स सति कीटाक्रमणे सत्यां च प्रकृतिदुर्बलतायां कथमेतावन्तं दीर्घं कालं जीवितः ? इदानीं यावत्कीटान् विद्रावयन्ती तत्प्रकृतिः कथमधुना तथा न करोति ? नितान्तं शक्तिहीना तत्प्रकृतिर्जातेति चेत् कथं न सर्वेषां रोगाणां कीटाणवस्तां समाश्रयन्ति, किमिति चैकविधा एव कीटास्तत्राश्रयं लभन्ते ? हन्त ! न रोगकारणं कीटा अपि तु मिथ्याहारविहाराभ्यां जाता प्रकृतिदुर्बलता ततः समुत्पन्नं च विषमेव । यथा—समानायामेव भूमौ विरूढयोः स्वस्वपोषणाय च तत एव रसमाकर्षतोश्च निम्बाम्रवृक्षयोरेक आकर्षणशक्तेः पाचनशक्तेश्च वैलक्षण्येन कटुकरसाणूनेव संचिनोति, अपरस्तु मधुराम्लरसाणूनेवं; तथैव काचित्प्रकृतिः केषांश्चिदेव कीटाणूनामानुकूल्यं भजते न सर्वेषाम् । उपर्युल्लिखितमन्त्रानुसारेण च कफमूत्रादीनां सति परीक्षणे ते दृश्यन्ते इत्येव प्रतिपत्तव्यमित्यलं प्रसक्तानुप्रसक्त्या ।

रोगराजस्यास्य चिकित्सासौकर्याय नानाविधानामेतद्रूपाणां ज्ञानमतीवावश्यकम् । प्रायो विचित्रेष्वस्य रूपेषु महतां महतां कृतहस्तानामपि वैद्यानां मतिर्भ्राम्यति । येन रोगस्य निश्चयाभावादन्यत्र प्रयोज्यानामौषधानामन्यत्र प्रयोगो भवति, ततश्चासंख्याताः प्राणिनोऽकाल एव धर्मराजाध्वन्यध्वनीना जायन्ते, आयुर्वेदचिकित्सकानां शिरसि च महान्कलङ्कः

समापतति । वयमिह कांश्चिद्वेदमन्त्रान्निर्दिशामो यदवलोकनात्केषांचिद्विलक्षणानां यक्ष्मरूपाणां परिचयो जायेत—

शीर्षक्तिं शीर्षामयं कर्णशूलं विलोहितम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ॥ १ ॥
कर्णाभ्यां ते कङ्कषेभ्यः कर्णशूलं विसल्पकम् ॥ सर्वं० ॥ २ ॥
यस्य हेतोः प्रच्यवते यक्ष्मः कर्णत आस्यतः ॥ सर्वं० ॥ ३ ॥
यः कृणोति प्रमोतमन्धं करोति पूरुषम् ॥ सर्वं० ॥ ४ ॥
अङ्गभेदमङ्गज्वरं विश्वाङ्गयं विसल्पकम् ॥ सर्वं० ॥ ५ ॥
यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं विश्वशारदं बहिर्निर्मन्त्रयामहे ॥ ६ ॥
य ऊरू अनुसर्पत्यथो एति गवीनिके ।
यक्ष्मं ते अन्तरङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥ ७ ॥ ( अथर्व० ९।४।१३ )

अत्र प्रथममन्त्रे-राजयक्ष्मणि शिरोरोगस्य, कर्णशूलस्य, कर्णपाकेन रक्तपूयादिस्रावस्य चोत्पत्तिरभिहिता । द्वितीयतृतीयमन्त्रयोः कर्णान्मुखाच्च रक्तपूयादिनिर्गम उक्तः । चतुर्थे मन्त्रे यक्ष्मिणोऽन्धत्वप्राप्तिर्वर्णिता । पञ्चमेऽङ्गभेदज्वरसर्वाङ्गगतव्याधिशिरोरोगाणां चर्चा । षष्ठे शिरसि विशेषप्रभावजनके यक्ष्मणि रुग्णेन भीमा मूर्तयो दृश्यन्ते, याश्च वीक्ष्य स भृशमुद्वेपते इत्याद्यभिहितम् । सप्तमे मन्त्रे गवीनिकयोरुत्पन्नयक्ष्मणो वर्णनम् । गवीनिके नाम वृक्काभ्यां वस्तिं गच्छन्त्यौ द्वे नाडिके ।

वयन्त्वित्थं प्रतीमः—यदि सौभाग्येन क्वचित्कश्चित्सद्गुरुरुपलभ्येत, तदेषामनोहरभावपूर्णानां मन्त्राणां रहस्यज्ञानपूर्वकं वैद्यैस्ततो दीक्षा ग्राह्या, यत औषधप्रयोगेण सहैवाध्यात्मिकबलेनापि रुग्णानुल्लाघीकृत्य ते धर्मं धनं कीर्तिंश्चार्जयेयुः ।

यक्ष्मिणोर्मातापित्रो रजोवीर्यद्वारेण बाले सङ्क्रान्तस्यासाध्यप्रायस्य "क्षेत्रिय"—यक्ष्मणो नाशनमप्यथर्वश्रुत्या बोध्यते, तथाच मन्त्रः—

तासु त्वाऽन्तर्जरस्यादधामि प्रयक्ष्म एतु निर्ऋतिः पराचैः ।
एवाऽहं त्वा क्षेत्रियान्निर्ऋत्या जामिशंसाद्द्रुहो मुञ्चामि वरुणस्य पाशात् ॥
( अथर्व० २।१०।५ )

किञ्च—राजयक्ष्मचिकित्साया मूलसिद्धान्तोऽयमेव यद्रोगिणो बलं वर्धनीयमिति । यक्ष्मी प्रत्यहं क्षीणो भवति । यदि कथंचित्तद्बलं वर्धेत तदावश्यमेव स आरोग्यं लभेत । अस्मिन्नेव कृत्ये प्रायः संसारस्य सर्वविधाश्चिकित्सारीतयो विफलतां गच्छन्ति । उपायानां शतैरपि ता रोगिणो बलवर्धने नालं भवन्ति । बलवर्धनन्तु सुदूरे, प्रत्यहं क्षीयमाणमपि बलं

न ताभी रक्षितुं शक्यते । परन्तु भगवान्वेदस्तदप्युपदिशति । अधस्तनमन्त्रात्तद्विज्ञाय वैद्यै रोगिणो बलवर्धनाय सर्वभावेन चेष्टितव्यमित्यलम् ।

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ (ऋग्वेद० १०।८।९७।११)

श्लोकेऽत्र–शार्दूलविक्रीडितं छन्दः । छेकानुप्रासः समुच्चयश्चालङ्कारौ ।

**सुप्तिर्दारुतलेऽमलेऽम्बुजदले भुक्तिश्च मुक्तिः कलेः**
**पानं गोहविषां तथाजपयसां गानञ्च चेतोहरम् ॥**
**आसो मित्रजनैस्तथा शुभकुलैर्वासो बहिर्ग्रामतो**
**गोदेवद्विजपूजनं क्षयरुजां प्रत्यर्थिनोऽमी मताः ॥ ३ ॥**

सुप्तिरिति—दारुतले=देवदारुवृक्षाधस्तात्, देवदारुभेदस्य "चीढ" इति प्रसिद्धवृक्षस्य तले वा, अधुना तत्संपृक्तवायोर्यक्ष्मनाशकत्वेन निर्णितत्वात्, सुप्तिः=शयनम्, अमले=बाह्यमलसम्पर्कराहित्येन स्वच्छेऽम्बुजदले=कमलपत्रे भुक्तिः=भोजनम्, कलेः=कलहादिचेतोविकारिभावस्य मुक्तिः=त्यागः, गोहविषाम्=केवलानां बलायगोक्षुराद्यादीनामौषधसिद्धानां वा गव्यघृतानां तथाऽऽजपयसाम्=छागीदुग्धानां पानम्, चेतोहरम्=लयतालाद्यनुगतत्वेन मनोमोहकं च गानम्, तथा शुभं कुलं येषां तादृशैर्मित्रजनैः=स्निग्धैःसुहृद्भिःसह आसः=आसना-तन्मध्ये स्थितिरिति, यद्वा–शुभैःकुलैः=राजाद्युच्चवंशैः, यद्वा–शुभानाम्=छागानाम् " शुभच्छागवस्तच्छगलका अजे " इत्यमरः, कुलैः=समूहैः सहावस्थानम्, ग्रामतो बहिर्वासः=निवासः, बहिरेव मलाद्यवकरराहित्येन विशुद्धवातस्य निर्मलजलस्य सूर्यकिरणानाञ्च लाभादिति, किञ्च–गवां देवानां द्विजानाञ्च पूजनमित्यमी सर्वे भावाः क्षयरुजां प्रत्यर्थिनः=शत्रवो नाशका इति यावत्, मताः । इदमपि सर्वं वेदायुर्वेदविज्ञानमूलकम् । तत्र ग्राम्यपशुभिश्छागादिभिः सह संवासे प्रमाणतयाऽधस्तादथर्ववेदमन्त्र आयुर्वेदश्लोकश्चोद्ध्रियेते:—

वि ग्राम्याः पशव आरण्यैर्व्यापस्तृष्णया सरन् ।
व्य१हं सर्वेण पाप्मना वियक्ष्मेण समायुषा ॥ ( अथर्व० ३।३०।३ )
छागमांसं पयश्छागं सर्पिश्छागं सशर्करम् ।
छागोपसेवा सततं छागमध्ये तु यक्ष्मनुत् ॥ इति ।

एतद्विषयेऽधिकं जिज्ञासुभिस्तु स्वयं वेदानां परिशीलनं विधेयमिति निवेद्यते ।

अधुना रोगसमूहात्मकस्य राजयक्ष्मणश्चिकित्सासमूहोऽभिधीयते । रोगसमूहात्मकत्वं तु तस्य " अनेकरोगानुगतो बहुरोगपुरःसरः । राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः । " इत्यादिवाक्येभ्योऽवगन्तव्यम् ।

क्षुद्रा श्वासवलासनाशकुशला, वासास्रकासापहा,
पित्तोच्छित्तिकरी वरी वलकरी, धीरा समीरापहा ।
शुक्रं नागवला ददाति, तुरगीगन्धा त्वरं धातुदा,
मेहं हन्ति वला, ज्वरं तु चपला, सर्वं शिलासंभवम् ॥ ४ ॥

क्षुद्रेति—" एक एव मतः शोषः सन्निपातात्मको यतः । उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि । " इत्युत्तरतन्त्रे सुश्रुतोक्तेस्त्रिदोषेऽस्मिन्यक्ष्मणि समुद्रिक्तत्वेन ज्ञायमानेषु वातपित्तकफेषु तज्जन्येषु कासश्वासरक्तनिर्गमादिषु च क्षुद्रादीनामुपयोगस्य प्रायो दृष्टफलत्वात्तेषां प्रतिलिङ्गं. विभागस्तत्तद्रोगपरिहाराय विशिष्य तत्तदुपयोगश्चानेन पद्येनाज्ञप्तः । उपयोगश्च क्वाथरूपेण चूर्णरूपेण वेति यथावस्थं स्वयं विकल्प्यम् । तत्र क्षुद्रा=कण्टकारी, वासा=आटरूषकः, वरी=शतावरी, धीरा=गुडूची, नागवला="गंगेरन" इति प्रसिद्धा, तुरगीगन्धा=अश्वगन्धा सा च त्वरम्=शीघ्रं धातुदा=शुक्रक्षयानन्तरं क्रमशः क्षीयमाणानां मज्जास्थ्यादिधातूनां पोषणी भवति, वला=" खिरैटी " इति प्रसिद्धा, चपला=पिप्पली, शिलासंभवम्=शिलाजतु, तत्तु सर्वम्=सकलानिमान् रोगाननुपानतः प्रयुक्तं हन्ति । तच्च शुद्धमादेयम् । <u>शोधनप्रकारः</u>–शिलाजतु सूक्ष्मं विचूर्ण्य, चीनमृद्भाजने निक्षिप्य, ततो द्विगुणं गोदुग्धं वा त्रिफलाक्वाथं वा भृङ्गराजरसं वा केवलमत्युष्णजलं वा समावाप्य, हस्तेन सम्यग्विमर्द्य पटेन गालयेत् । तदनु तस्मिन्भाजने स्थितं तीव्रातपे निदध्यात् । द्रवस्योपरि सन्तानिकावत् या पर्पटिका समुत्तिष्ठेत्तां समुत्तार्यातपे विशोष्य शुद्धां काचकूप्यां स्थापयेत् । अवशिष्टे पुनरुष्णं जलं निक्षिप्य पर्पटिकां गृह्णीयात् । एवं मुहुर्मुहुः कुर्यात् । शिष्टं मृदादिकन्तु परित्यजेत् । अत्र श्लोकेऽपि पूर्ववच्छार्दूलविक्रीडितं छन्दः । अनुप्रासोऽलङ्कारस्तु सर्वत्राव्यभिचारी ।

वासापुष्परसोऽस्रपित्तशमनो "द्राक्षादिचूर्णं" तथा
तापं वापि "सितोपलादि" हरते सत्त्वं च सोमोद्भवम् ।
"एलाद्या गुटिका" कृणाति कसनं "चूर्णं लवङ्गादिजं"
प्रायः कर्म समीरितं क्षयगदे सर्वं हि सर्वार्थकृत् ॥ ५ ॥

वासेति—राजयक्ष्मरोगे प्रयुक्तो वासापुष्परसः=आटरूषकपुष्पजनितो रसोऽस्रपित्तशमनः=रक्तपित्तहरणो भवति । "द्राक्षादिचूर्ण"–मपि तथाविधमेव । प्रसिद्धं "सितोपलादिचूर्णं" तथा सोमोद्भवं सत्त्वम्=गुडूचीसत्त्वं च तापम्=ज्वरं हरते । " एलाद्या गुटिका " " लवङ्गादिचूर्णं " च कसनम्=कासं कृणाति=हिनस्ति, नाशयतीत्येतत्

क्षयगदे="रक्तपित्तं ज्वरः कासस्त्रिरूपे राजयक्ष्मणि" इत्युक्तलक्षणे त्रिरूपात्मके यक्ष्मरोगे क्रमशः प्रत्येकस्मिन् रूपे द्विद्वियोगप्रदर्शनरूपं कर्म=चिकित्सितं प्रायः समीरितम्। कथं प्राय इति चेदाह-हि=यतः सर्वमप्येतच्चिकित्सितं प्रत्येकमपि सर्वार्थकृद्भवतीति। अत्रत्यौषधनिर्माणप्रकारस्त्वित्थं ज्ञेयः—"द्राक्षादिचूर्णम्"—द्राक्षा, लाजा, श्वेतकमलपुष्पम्, मधुयष्टी, खर्जूरफलत्वक्, सारिवा, वंशरोचना, 'नेत्रवाला'-ख्यम्, आमलकम्, मुस्तम्, श्वेतचन्दनम्, तगरम्, कङ्कोलम्="शीतलचीनी" इति प्रसिद्धम्, जातीफलम्, दारुचितैलातमालपत्रनागकेसरस्वरूपं चातुर्जातकम्, पिप्पली, धान्यकम्-इत्येतेषां द्रव्याणां चूर्णं विधाय सर्वसमानां सितां प्रक्षिप्य सेवेत। "सितोपलादिचूर्णम्"—सिता १६ तो०, वंशरोचना ८ तो०, पिप्पली ४ तो०, एला २ तो०, दारुसिता १ तो०-सर्वमिदं विचूर्णयेत्। "एलाद्या गुटिका"—एला ६ माषकमिता, पत्रम् ६ मा०, दारुसिता ६ मा०, पिप्पली २ तो०, सिता ४ तो०, मधुयष्टी ४ तो०, खर्जूरफलत्वक् ४ तो०, द्राक्षा ४ तो०—सर्वाण्येतानि प्रपिष्य मधुना तोलकमितां ततो न्यूनां वा वटिकां कुर्यात्। "लवङ्गादिचूर्णम्"—लवङ्गम्, कङ्कोलम्, उशीरम्, श्वेतचन्दनम्, तगरम्, नीलोत्पलम्, कृष्णजीरकम्, एला, कृष्णागुरु, नागकेशरम्, पिप्पली, शुण्ठी, जटामांसी, ह्रीवेरम्, शुद्धकर्पूरम्, जातीफलम्, वंशरोचना-सर्वाण्येतानि तुल्यमानानि गृहीत्वा, सितां च सर्वेभ्योऽर्धमानानादाय चूर्णं विधेयम्। अत्र श्लोके काव्यलिङ्गोत्तरालङ्कारयोः सङ्करः। वृत्तं पूर्वोक्तम्।

योऽश्विभ्यां च्यवनर्षये करुणया दत्तोऽवलेहोत्तमः
स क्षीणेषु दयी क्षयायजयी संसेव्यतां सामयैः।
यद्वागस्त्यहरीतकी कवलिता शोषामयध्वंसनी
तद्वत्खण्डकणावलेहसदृशो वासावलेहः क्वचित्॥ ६॥

य इति—ग्येऽस्मिन्विशिष्टगुणत्वाद्यक्ष्मनाशकं योगचतुष्टयमुपनिबद्धम्। तत्र—अश्विभ्यां महर्षये च्यवनाय करुणया दत्तोऽवलेहोत्तमः "च्यवनप्राशः" इति प्रसिद्धः। तन्निर्माणविधिः-बिल्वः, अग्निमन्थः, श्योनाकः, गंभारी, पाटला, बला, मुद्गपर्णी, माषपर्णी, शालपर्णी, पृश्निपर्णी, पिप्पली, गोक्षुरः, क्षुद्रा बृहती चेति कण्टकारीद्वयम्, कर्कटशृङ्गी, भूम्यामलकी, द्राक्षा, जीवन्ती, पुष्करमूलम्, अगुरु, हरीतकी, गुडूची, ऋद्धिः, जीवकः, ऋषभकः, कर्पूरः, मुस्तकम् पुनर्नवा, मेदा, महामेदा, एला, कमलम्, श्वेतचन्दनम्, विदारीकन्दः, आटरूषकः, काकोली, काकनासा—इत्येतानि द्रव्याणि, एषु केषाञ्चिदभावे तु तत्प्रतिनिधिभूतानि, प्रत्येकं पलमितानि गृहीत्वा, स्थूलस्थूलं विचूर्ण्य, स्वच्छे महति कटाहे तत्सर्वं निक्षिप्य पञ्चशतानि (५००) उत्तमान्यामलकान्यपि तत्र दत्त्वा, द्रोण(१६ प्रस्थ०)परिमितं, जलं चावाप्य विपचेत्। चतुर्थांशावशेषे तु कटाहम-

धोऽवतार्य क्वाथमध्यादामलकानि पृथग्विचिनुयात्। तानि च निरस्थिकानि कृत्वा, प्रगाढ़वस्त्रे निक्षिप्य, हस्तेन सम्यग्विमर्द्य ततो गालयेत्। क्वाथजलं चापि वस्त्रेण गालयित्वा पृथक्स्थापयेत्। तदनु–कस्मिंश्चिद्भाजने द्वादशपलप्रमितं गव्यं घृतं निक्षिप्य तानि वस्त्रगालितान्यामलकानि तेन भर्जयेत्। क्वाथजले च तस्मिन् पञ्चाशत्पलमितामसम्मतेन तु शतपलमितां सितां निक्षिप्य त्रितारां तन्तुलीं विदध्यात्। तत्र च भर्जितान्यामलकानि दत्त्वा लेहवत्संसाध्य शीततां गते तस्मिन् षट्पलमितं मधु दत्त्वा, पिप्पली द्विपला, वंशरोचना चतुष्पला, दारुसितैलापत्रनागकेशराणां प्रत्येकमेकैकस्तोलकः—इति सर्वेषामेषां चूर्णं संमेल्य, सर्वमेकीकृत्य काचभाण्डेषु स्थापयेत्। सोऽयं "च्यवनप्राशो" नामावलेहः सिद्ध्यति। "अगस्त्यहरीतकी—शतं (१००) हरीतक्यः, यवाः ४ प्रस्थमिताः, दशमूलम् २० पलम्, चित्रकः, पिप्पलीमूलम्, अपामार्गः, कर्चूरः, कपिकच्छुः, शङ्खपुष्पी, भार्ङ्गी, गजपिप्पली, बला, पुष्करमूलम्—इत्येतानि पृथग्द्विपलमितानि, जलं विंशतिप्रस्थप्रमितमिति सर्वमेकत्र विमिश्र्य पचेत्। यवेषु स्विन्नेषु पात्रमधोऽवतार्य हरीतकीः पृथक्कृत्य तदस्थीनि निष्कासयेत्। ताश्च मनाग्घृतेन भर्जयेत्। क्वाथं तु वस्त्रेण गालयित्वा तत्र शतपलमितं गुडं सम्मेल्य पुनर्वस्त्रेण संगाल्य ता हरीतकीस्तत्र दद्यात्। घृतस्य तैलस्य चाप्यष्टपलानि तत्र क्षिपेत्। तदनु मन्दाग्निना विपाच्य लेहतां याते शीते तस्मिन् मधु कुडवमितं पिप्पलीचूर्णमपि कुडवमितमेव संमिश्र्य काचामत्रेषु स्थापयेदिति। "खण्डकणावलेहः"—पिप्पली १ प्रस्थः, जलस्य ४ प्रस्थाः, गव्यघृतम् १ कुडवमितम्, सिता ४ प्रस्थमिता–सर्वमिदमेकत्र विपचेत। किञ्चिद्घनतामापन्ने च तस्मिन् दारुसितैलापत्रकनागकेशरलवङ्गशुण्ठीमरिचपिप्पलीमूलचन्दनमधुयष्टीजातीफलानां प्रत्येकस्य कर्षमितं चूर्णं निक्षिप्य शीते च कुडवमितं मधु दत्त्वा काचभाण्डे निदध्यादिति। अथ "वासावलेहः"—२५ पलमितायां वासायां २०० पलमितं जलं दत्त्वा समुत्क्वाथ्य ५० पलान्यवशेषयेत्। वस्त्रपूते तस्मिन्क्वाथे हरीतकीचूर्णं १ प्रस्थमितं सितां च २५ पलमितां प्रक्षिप्य पुनः पचेत्। लेहत्वमापन्ने तस्मिन् १ पलमितां वंशरोचनामर्धपलं पिप्पलीचूर्णं कर्षतुलितं त्वगेलापत्रकनागकेशरात्मकं चातुर्जातं च संमेल्य शीतीभूते २ पलमितं मधु मिश्रयेदिति। यद्वा—वासकस्य स्वरसं वा क्वाथं वा प्रस्थमितमादाय तत्रार्धप्रस्थप्रमितां सितां पलद्वयं घृतं च निक्षिप्य विपचेत्। लेहवद्घनीभूते तस्मिन् पलद्वयं पिप्पलीचूर्णं मिश्रयेत्। शीतीभूते चार्धप्रस्थप्रमितं मधु संमिश्रयेदिति तेन "वासावलेहः" सम्पत्स्यते।

सक्षौद्रं नवनीतकं मणिरजः सम्यङ्मृतं काञ्चनम्
छागीनव्यपयोऽप्ययोऽभ्र*रजः सत्त्वं च सिंहास्यजम्।

व्यस्ता विह्वलयन्ति शोषमथ किं युक्ताः प्रयुक्ताः पुन-
र्नानाव्याधिविघातनाय रचिता योगा विधात्रा ह्यमी ॥ ७ ॥

सक्षौद्रमिति—सक्षौद्रं नवनीतकमिति सर्वेषामेतच्छ्लोकस्थयोगानां सामान्यमनुपानं दर्शयति। नवनीतकमत्र क्षीरोत्थं ग्राह्यम्। किञ्च—क्षौद्रं न्यूनमात्रया नवनीतं त्वधिकमात्रयाऽऽदेयम्, समानत्वे तु संयोगविरुद्धता स्यात्। मणिरजः=मुक्ताप्रवालयोर्भस्म, शतपत्रिकार्कैर्विहितं पिष्टं वा। सम्यङ्मृतं काञ्चनम्=स्वर्णभस्म। तत्तु विधिनानेन सम्पाद्यम्—ज्वराधिकारोक्ते चन्द्रोदयरसे सुवर्णस्योड्डयनासंभवादधः कूपिकातले तद्भस्म प्राप्यते, तदेव भूयोऽपि चन्द्रोदयोपादानद्रव्ये क्षेप्यम्। एवं वारत्रयं करणेन पारदविद्धं विशुद्धं "स्वर्णभस्म" भविष्यति। अयोऽभ्रकरजः=लोहभस्माभ्रकभस्म च। तत्रैतद्ग्रन्थाभिमतो लोहभस्मविधिः—उत्तमलोहस्य प्रतनूनि पत्राणि वह्नौ प्रताप्य प्रताप्य त्रिधा त्रिधा तैले, तक्रे, गोमूत्रे, काञ्जिके, कुलत्थक्वाथे च निर्वापयेत्। तदेवं विशुद्धस्य लोहस्य चूर्णं विधाय, तद्दशमांशं हिङ्गुलं निक्षिप्य गोमूत्रेण गजपुटो देयः। एवं सप्त पुटान्दत्त्वा सप्तैव पुनर्नवास्वरसेन क्वाथेन वा, सप्त कुमारिकास्वरसेन, तावन्त एव च त्रिफलाक्वाथेन पुटाः प्रदेयाः। प्रतिपुटं च दशमांशं हिङ्गुलमवश्यं क्षेप्यम्। तदेवमष्टाविंशतिपुटैरनुत्तमं "लोहभस्म" सम्पत्स्यते। अभ्रकभस्मविधिस्तु ज्वराधिकारे उक्तः। सिंहास्यजं सत्त्वम्=आटरूषकसत्त्वम्। एते पदार्थाः व्यस्ताः=पृथग्दत्ता अपि शोषम्=क्षयरोगं विह्वलयन्ति=नाशयन्ति, युक्ताः=यथार्हमानेन मेलिताः सन्तः प्रयुक्ताः शोषं विह्वलयन्तीति पुनः किमु वक्तव्यम्? हि=यतोऽमी योगा विधात्रा नानाव्याधिविघातनाय रचिताः सन्तीति।

कल्ये "काञ्चनपर्पटीं" कवलयन्कृष्णातुगामाक्षिकै-
र्मध्याह्ने मधुना "प्रवालभसितं" सायं त्वयःपर्पटीम्।
आजक्षीरफलाशनो विजयते स्नेहाक्तदेहो जनः
पाण्डुश्वासचिरज्वरग्रहणिकायक्ष्मप्रमेहामयान् ॥ ८ ॥

कल्ये इति—प्रातः पिप्पलीवंशरोचनामधुभिः "स्वर्णपर्पटीं" मध्याह्ने मधुना सह "प्रवालभस्म" सायं तु "लोहपर्पटीं" कवलयन्, कल्पविधिना केवलमजादुग्धमेवोपभुञ्जानः, वक्ष्यमाणलाक्षाद्यचन्दनाद्यादितैलैरभ्यङ्गं कुर्वाणो जनो यक्ष्मग्रहण्यादिरोगानवश्यं विजयते। स्वर्णपर्पटीलोहपर्पट्योर्निर्माणविधिर्ग्रहणीचिकित्सायामुक्तः। "प्रवालभस्म" तु प्रवालस्य घृतकुमारिकारसेन द्वित्रैः पुटदानैः सम्पद्यते। पर्पटीकल्पस्त्वयम्—प्रथमदिने एकरक्तिमितां स्वर्णपर्पटीं पिप्पलीवंशरोचनामधुभिर्भक्षयेत्। द्वितीयदिने रक्तिकामेकां वर्धयेत्। क्रमेणानेन तृतीयादिषु दिनेष्वेकैकरक्तिवृद्धया द्वादशरक्ति-

पर्यन्तं गच्छेत् । ततश्चतुर्विंशतिदिनपर्यन्तं प्रत्यहं द्वादशरक्तिमितामेव पर्पटीं सेवेत । अनन्तरमेकामेकां रक्तिकां ह्रासयेत् । अयं प्रातरौषधसेवनविधिः । मध्याह्ने तु प्रत्यहं मधुना रक्तिमितं प्रवालभस्म सायंकाले तु रक्तिमितामेव लोहपर्पटीं सेवेत । अन्नजलयोः परित्यागो विधेयः । क्षुधि तृषि च केवलमजादुग्धमेव पेयम् । अजादुग्धं पातुमशक्तस्तु गोदुग्धमपि पिबेत् । दुग्धपानेऽप्ययं नियमः—पर्पटीसेवनप्रभावान्मनुष्यः १५ प्रस्थमितं यावद्दुग्धं पातुं प्रभवति । तत्र न केवलमेकदैवेयद्दुग्धं पेयम्, किन्तु अर्धघण्टान्तरेण पलं द्विपलं चतुष्पलं वा यथाग्निबलं प्रपिबेत्, अन्यथाऽतिसारप्रवृत्तिः स्यात् । एवं कृतेऽपि प्रवर्तमानोऽतिसारस्तु स्वयमेवोपशाम्यति । तदुपशान्तये कदाचित्कदाचित् शङ्खभस्मसैन्धवयोश्चूर्णं गुञ्जात्रयमितं मधुनोपयोज्यम् । १२ दिनानि वर्धने, २४ दिनानि वृद्धाया मात्रायाः सेवने, १२ दिनानि मात्राह्रासे—एवं सम्भूयाष्टचत्वारिंशद्दिनानि भवन्ति । ततश्च—" दिवसैर्यत्रतत्रापि वसुसागरसम्मितैः । भिषक्क्रियोपयोगाय मण्डलं भिषजां मतम् । " इत्युक्तलक्षणं मण्डलं यावत्पर्पटीसेवनमर्यादा सिद्ध्यति । अस्मिन्कल्पे मेषऔष्ण्यमधिकं चेत्प्रतीयेत तर्हि लोहभस्मनः परित्यागोऽपि विधेयः । अयमेव कल्पो ग्रहण्यादिरोगेषु बोध्यः । ग्रहणीविषये इयान्विशेषः—तत्र क्षुधि तृषि च दधि, दुग्धं, तक्रञ्चेति त्रिष्वेषु यत्किंचिदप्येकं यथेच्छं प्रयोक्तुं शक्यते, यक्ष्मणि तु केवलं दुग्धमेव सेव्यम् । केवलेन दुग्धसेवनेन निर्विण्णस्तु मध्ये मध्ये फलान्यपि सेवितुं शक्नोति । तीव्रतृष्णोद्गमे नानाविधा अर्काः सेव्याः । विशुद्धं जलमपि देयम् । कल्पासहिष्णुस्तु लघ्वन्नं खादेत् ।

**का त्वं, चन्द्रकलास्मि, का त्वमबले ! नाम्ना शिवाऽहं कले !**
**क्षुद्रे ! किं मम गौरवं न विदितं, किं ते महत्त्वं वद ।**
**धन्याहं स्फुटयाम्यये रसकरैर्दोषान्धलोकं शिवे !**
**नानादुःखनिषूदनी त्वदधिका साहं शिवा शर्मदा ॥ ९ ॥**

केति—आयुर्वेदे प्रसिद्धयोर्यक्ष्मणि प्रयुज्यमानयोश्चन्द्रकलाशिवानाम्न्योर्वटिकयोः गुणवर्णनगर्भं वाकोवाक्यमिदम् । तत्र यक्ष्मप्रत्यनीकेषु महाप्रभावौषधेषु स्थिता "शिवा" नाम वटी तत्रैव स्थितां " चन्द्रकलां " नाम वटीं पृच्छति—का त्वम् ? चन्द्रकला—अहं खलु चन्द्रकलाऽस्मि । त्वं पुनरबले कासि ? शिवा—चन्द्रकले ! अहं नाम्ना शिवाऽस्मि । पुनश्चन्द्रकला—( स्वनामप्रश्नेन क्रुद्धा सती ) अयि क्षुद्रे ! मम गौरवं त्वया किं न विदितं येनैवमसभ्यतया मदीयं नाम पृच्छसि ? अत्र " शिवा " इति नाम्नोऽल्पाक्षरत्वात्क्षुद्रे इति सम्बुद्धिः । शिवा—हन्त ! किं ते महत्त्वं वर्तते ? वद, मया तु न विदितम् । चन्द्रकला—अये शिवे ! अहं खलु रसकरैः=रसरूपैः किरणैर्दोषान्धलोकम्—दोषैः=वातादिभिर्मलैर्-

न्धमिवान्धम्=अप्रकाशमानं लोकं स्फुटयामि=नीरोगतासम्पादनपुरःसरं सुखिनं विधाय प्रकाशयामि, ततश्चाहं धन्या, त्वं पुनः किमपि कर्तुमशक्ताऽधन्याऽसि। शिवा—अहं खलु नानादुःखनिषूदनी=त्रिविधदुःखविनाशिनी, अत एव शिवा=कल्याणजननी, किञ्च—"स्तिमितमतिरप्यज्ञानान्धः सदस्यपटुः पुमान्सकृदपि यया ज्ञानोपेतः श्रुतिस्मृतिमान्भवेत्। व्रजति च यया युक्तो योगी शिवस्य समीपतां शिवगुटिकया कस्तामेतां करोति न मानुषः।" इत्येवं सर्वैर्लोकैरुपवर्ण्यमानमाहात्म्याहं शर्मदा=जगति दृष्टान् श्रुतांश्च सर्वविधानपि दुःसाध्यानसाध्यान्वा रोगान्विनाश्यारोग्यदानपूर्वकं मोक्षप्रदानसमर्था सा=एतादृश्यस्मि। त्वमिव न केवलं रोगहेतुदोषप्रशमनादारोग्यप्रदैव। अतश्च त्वदधिकैवास्मि, न तु न्यूनेति मैवं पुनः कथने साहसं कार्षीरिति। अत्रानेकार्थकानां शब्दानामभिधायाश्चन्द्रकलाशिवागुटिकारूपार्थे नियन्त्रणेऽपि सहृदयानां वासनावलाद्व्यञ्जनया चन्द्रकलापार्वतीरूपोऽर्थस्तेन सहोपमानोपमेयभावश्च व्यज्यते। एवञ्च—अये शिवे !=पार्वति ! अहं रसकैः=सुधास्राविभिः किरणैर्दोषा=रात्र्याऽन्धं लोकं स्फुटयामि=प्रकाशदानेन चक्षुष्मन्तं विदधामीत्येवं रूपोऽर्थः शिवप्रिययोश्चन्द्रकलापार्वत्योः पक्षेऽपि योज्यः। शिष्टन्तूभयत्र समानम्। अथ चन्द्रकलागुटिकाया निर्माणविधिः—शुद्धपारदः १ तो०, शुद्धगन्धकः २ तो०, ताम्रभस्म १ तो०, अभ्रकभस्म १ तो०—पारदगन्धकयोः कज्जलीं विधाय तत्र ताम्रभस्मादि संमेल्य मुस्तकक्वाथेन, दाडिमरसेन, दूर्वारसेन, केतकीमूलजलेन, सहदेवीरसेन, कुमारिकारसेन, पर्पटरसेन क्वाथेन वा, शतावरीरसेन च पृथगेकैकं दिनं विमर्द्य तत्र कटुकी १ तो०, गुडूचीसत्त्वम् १ तो०, पर्पटः १ तो०, उशीरम् १ तो०, पिप्पली १ तो०, चन्दनम् १तो०, सारिवा १तो०, इत्येतेषां चूर्णं दत्वा,द्राक्षाफलक्वाथेन सप्तधा भावयित्वा चणकोपमा वटीर्विधाय छायायां शोषयेत्। सोऽयं रसश्चन्द्रकलाभिधानो यक्ष्मप्रमेहादिमहागदघ्नः। शिवागुटिकाया निर्माणम्—रवितापाढ्ये ग्रीष्मे शरदि वा पूर्वोक्तविधया शुद्धं १६ पलप्रमितं शिलाजतु समादाय, "शिलाजतुसमं द्रव्यं क्वाथ्यमष्टगुणे जले। पादावशिष्टं तत्पूतं तस्मिन्कोष्णे विनिक्षिपेत्।" इतिपरिभाषानुसारं १६ पलमितां त्रिफलामष्टगुणे जले समुत्क्वाथ्य, पादावशिष्टेऽष्टमांशावशिष्टे वा पटपूते तस्मिन्क्वाथे तच्छिलाजतु सम्मेल्य, तीव्रातपे निदधीत। इयं त्रिफलाक्वाथेनैकाभावना सम्पद्यतेऽहोरात्रेण। इत्थं तिस्रो भावना दद्यात्। तदनु—अनेनैव विधानेन क्रमशो दशमूलक्वाथेन, गुडूचीस्वरसेन, बलाक्वाथेन, पटोलपत्रक्वाथेन स्वरसेन वा, मधुयष्टिकाक्वाथेन, गोमूत्रेण च पृथक् तिस्रस्तिस्रो भावना दद्यात्। ततो गोदुग्धेनैकां भावनां दद्यात्। अनन्तरम्—द्राक्षा, शतावरी, विदारीकन्दः, क्षीरविदारी="क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी" इत्युक्तलक्षणा, शालिपर्णी, पृश्निपर्णी, पुष्करमूलम्, पाठा, इन्द्रयवः, कर्कटशृङ्गी, कटुकी, रास्ना, मुस्तकः,

गोरक्षमुण्डी, दन्तीमूलम्, चित्रकः, चव्यम्, गजपिप्पली, जटामांसी, काकोली, क्षीरकाकोली, जीवकः, ऋषभकः, मेदा, महामेदा, ऋद्धिः, वृद्धिः, जीरकः—एतेषामष्टाविंशतिद्रव्याणां चूर्णं विधाय चतुष्पलतुलिताः सप्तभागाः कार्याः । द्रव्याणि तु पृथक्पलमितानि । तत्र सप्तसु भागेषु भागमेकं गृहीत्वा तस्मिन् ९शराव१पल९माषक१रक्तिमितं जलमावाप्य निष्क्वाथ्य च २शराव १कर्ष२माषकमितं जलं पादावशिष्टतया स्थाप्यम्। अर्थात्—चतुष्पलतुलिते एकस्मिन्भागेऽनुमानतः सार्द्धचतुःप्रस्थमितं जलं निक्षिप्य प्रस्थैकमितं क्वाथमवशेषयेदिति । तदनु पटपूते कोष्णे तस्मिन्क्वाथे पूर्वोक्तं शिलाजतु संमेल्याहोरात्रमेकां भावानां दद्यात् । एवं सप्तभिर्भागैः सप्त भावनाः प्रदेयाः । एवं शोधिते भाविते च शिलाजतुनि—आमलकम् २ प०, कर्कटशृङ्गी २ प०, पिप्पली २ प०, मरिचम् २ प०, शुण्ठी २ प०, विदारीकन्दः १ प०, तालीसम् ४ प०, गव्यघृतम् ४ प०, तिलतैलम् २ प०, मधु ८ प०, सिता १६ प०, वंशरोचना १ प०, पत्रकम् १ प०, नागकेशरः १ प०, दारुसिता १ प०, एला १ प०—इत्येतानि द्रव्याणि यथायथं प्रपिष्य, पटेन पावयित्वा च संमेलनीयानि । तत—कर्षमिताः आधुनिकमात्रया तु द्विमाषकमिता वटीर्विधाय, छायायां संशोष्य, जातीकुसुम( चमेली )—सुवासिते काचभाजने निदध्यात् । ततः शुभेऽह्नि कृतोर्ध्वाधःशोधनः तिक्तकघृतं पीत्वा स्नेहितकोष्ठः क्षयामयी स्वस्त्ययनमङ्गलादिकं विधाय, प्रातर्भोजनात्पूर्वं मुद्गपानीयेन, जांगलमांसरसेन, शीतेन शृतशीतेन वा जलेन, मार्द्वीकमद्येन, गोदुग्धेन वा प्रत्यहमेकैकां वटीं परिशीलयेत् । पथ्यम्—सप्ताहं लघुभोजनः स्यात्तदुत्तरं तु यथेच्छाहारविहाराः । सेयं "शिवा" नाम वटी महाप्रभावाऽनेकान् रोगान्नाशयति ।

त्रिक्षारं पटुपञ्चकं त्रिकटुकं सूतो बलिः सागरः
त्रिः क्षुद्रास्वरसैर्विभाव्य भजताद्यक्ष्मापहृत्यै नरः ।
यद्वात्रैव विमिश्र्य लेढु सुकृती वातामतैलं पुनः
पथ्याशी कतिभिर्दिनैः प्रतिभयैर्मुच्येत ना श्लेष्मजैः ॥ १० ॥

त्रिक्षारमिति—त्रिक्षारम्=स्वर्जिक्षारो यवक्षारष्टङ्कणक्षार एव च । पटुपञ्चकम्=सौवर्चलं सैन्धवं च विडमौद्भिदमेव च । सामुद्रेण समायुक्तं ज्ञेयं लवणपञ्चकम् । त्रिकटुकम्=पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् । सूतः=शुद्धपारदः । बलिः=शुद्धगन्धकः । सागरः=नवसादरः । औषधान्येतानि समानान्यादाय, पारदगन्धकयोः कज्जलीं विधायावशिष्टानि पिष्टानि पटपूतानि तत्रावाप्य, क्षुद्रायाः=कण्टकार्याः स्वरसैस्त्रिर्विभाव्य भजतात् । यद्वा—तत्र वातामतैलम्="बादामकातैल" "रोगन बादाम" इत्यादिप्रसिद्धं समेत्य मात्रया लिह्यात् । सुकृती=रसात्मस्मरणादिना सुकृतमुपार्जयन् । वाता-

मतैलमापणेषु तद्विक्रेतृभ्यः प्राप्यते। स्वयं निर्मित्सा चेत्—वातामगुलिका जले निमज्ज्य कञ्चित्कालमुपेक्ष्य तत्त्वचः पृथक्कार्याः। ततस्ताः संक्षोद्य काचभाजने चीनमृद्भाजने वा निधायातपे धरेत। उष्णजलेनाभ्युक्ष्याभ्युक्ष्य करतलेन प्रताड्य प्रताड्य च तत्तैलं गृह्णीयात्। परं विधिनानेन स्वल्पस्य तैलस्य लाभो भवति। अतस्तत्तैलनिष्कासनाय निर्मितेन यन्त्रेणैव तैलं निष्कासनीयम्। परिश्रमासहिष्णुभिस्त्वापणे विक्रीयमाणं ग्राह्यमिति।

क्षयं जयति दुर्जयं ज्वरकफास्रकासालयम्,
हिनस्ति मलसञ्चयं चलितरेतसां वा रयम्।
समस्तगदसादनः सपदि सम्मदापादनो
"वसन्तकुसुमाकरः" "कनकसुन्दरो" वा वरः॥ ११॥

क्षयमिति—मलसञ्चयम्=वातादिदोषसमूहम्। चलितरेतसां रयम्=प्रमेहादिद्वारेण निर्यद्वीर्यवेगम्। समस्तगदसादनः=निखिलरोगनाशनः। सम्मदापादनः=हर्षजननः। "वसन्तकुसुमाकरः" "कनकसुन्दरः" इति प्रसिद्धं रसद्वयम्। तत्र "वसन्तकुसुमाकर"-प्रकारः—प्रवालभस्म ४ तो०, मुक्तापिष्टम् ४ तो०, अभ्रकभस्म ४ तो०, रजतभस्म २ तो०, सुवर्णभस्म २ तो०, लोहभस्म ३ तो०, नागभस्म ३ तो०, वङ्गभस्म ३ तो०, —सर्वाण्येतान्येकत्र प्रपिष्य गव्यदुग्धेन, इक्षुरसेन, हरिद्राक्वाथेन, आटरूषकस्वरसेन, लाक्षाक्वाथेन, ह्रीवेरक्वाथेन, कदल्या मूलरसेन पुष्परसेन च, कमलपुष्परसेन यद्वा गुलाबार्केण, मालती-( चमेली )-पुष्पस्वरसेन, चन्दनक्वाथेन, कस्तूरिकापानीयेन च पृथगेकैकवारं भावयित्वा द्विगुञ्जामिता वट्यो विधेयाः। सोऽयं वसन्तकुसुमाकरो नाम वसन्तकुसुमाकर इव चेतश्चन्दयति तैस्तैरनुपानैर्नानामयान्निहन्ति च। तत्र कांश्चिदनुपानप्रकारान्निर्दिशामः—सर्वविधेषु क्षयगदेषु गुञ्जाद्वयमितं रसमिमं मधुना मरीचैश्च सेवेत, सर्वेषु प्रमेहेषु मधुशर्करायुक्तेन हरिद्राक्वाथेन, रक्तपित्ते चन्दनशर्करोदकेन सितामधुयुक्तेनाटरूषकपत्रस्वरसेन वा, पुष्ट्यर्थं कामोद्दीपनाय च त्रिजातागुरुचन्दनैः, वमने शङ्खपुष्पीस्वरसेन, अम्लपित्ते सितामधुयुक्तेन शतावरीस्वरसेन। अन्येष्वपि रोगेषु यथार्हानुपानैः प्रयोज्यः। अथ "कनकसुन्दररस"-निर्माणप्रकारः—सुवर्णभस्म ४ तो०, पारदः १ तो०, गन्धकः १ तो०, स्वर्णमाक्षिकभस्म १ तो०, तालभस्म १ तो०, मनःशिलाभस्म १ तो०, खर्परभस्म यद्वा यसदभस्म १ तो०, तुत्थभस्म १ तो०—सर्वाणीमान्येकत्र प्रपिष्य दिनमेकमर्कदुग्धेन भावयेत्। तदनु-अग्निमन्थस्वरसेन, अगस्त्यपुष्पस्वरसेन, विभीतकक्वाथेन, चित्रकक्वाथेन, भृङ्गराजरसेन, आटरूषकस्वरसेन चैकैकं दिनं विमर्द्य, गोलकं

बद्ध्वा, कस्याश्चन हण्डिकाया अर्धं लवणेन परिपूर्य, तत्र तं गोलकं निधाय, हण्डिकाशेषं पुनर्लवणेन भृत्वा, मुखं संमुद्य च दिनमेकं यथार्हवह्निना विपचेत् । स्वाङ्गशीतं गोलकं समुद्धृत्यार्द्रकरसेन सप्त भावना दद्यात् । ततस्त्रिकटुक्वाथेन भावनामेकां दत्त्वा गुञ्जाद्वय-मिता वट्यो विधेयाः । अत्र पित्तकरं विदाहि च वस्तु त्याज्यम् । एतस्य तथा वक्ष्य-माणमृगाङ्करसस्य च निर्माणे गोलकं शरावसम्पुटस्थं कृत्वा लवणपूर्णहण्डिकामध्ये स्थाप्यम् । इत्थमेव लवणयन्त्रसाध्येषु सर्वेषु रसेषु कार्यमिति केषांचिन्मतं युक्तं प्रति-भाति । तथा कृते रसे लवणादिपदार्थस्य मेलनासंभवादिति सुधियो विभावयन्तु । श्लोकेऽत्र पृथ्वीच्छन्दः ।

सुवर्णदलपिप्पलीमधुकवंशजा द्राविडी
विचूर्ण्य परिभाविता रुचिरकेशरावारिभिः ।
द्विसन्ध्यमुपसेविता द्विगुणमाक्षिकैः संयुता
उरःस्थजलशोषणा जगति सन्ति पञ्चैव ते ॥ १२ ॥

सुवर्णेति—सुवर्णदलानि="सोनेके वर्क" इत्याख्यातानि । मधुकम्=मधुयष्टिका । वंशजा=वंशरोचना । द्राविडी=सूक्ष्मैलाबीजानि । रुचिरकेशरावारिभिः="गुलाब का अर्क" इति प्रसिद्धैः शतपत्रिकार्कैः । उरःस्थजलशोषणा इति—यक्ष्मणि फुफ्फुसयोः कोथेन तत्र जलमुद्भवति, यद्धि " प्लूरसी " ( Pleurisy ) इति नाम्ना पाश्चात्यैरभि-लप्यते । तत्रायं प्रयोगः । तदभावेऽपि यक्ष्मणि न निषिध्यते । सुवर्णदलस्थानेऽत्र सुवर्णभस्मापि प्रयोक्तुं शक्यते । छन्दः पूर्वोक्तम् ।

मुक्ताविद्रुमहेमचन्द्रचपलाकाश्मीरशुभ्रामृता-
सत्त्वत्वक्त्रुटिपत्रपुष्पमधुराशैलोत्थचन्द्रोदयैः ।
कस्तूरीतरुणीवृषाम्बुविहिता माषप्रमाणा वटी
दैतेयानिव जीवयत्यवितथा सा "शुक्रसञ्जीवनी" ॥ १३ ॥

मुक्तेति—मुक्ता=अविद्धमौक्तिकपिष्टिः, विद्रुमः=प्रवालपिष्टिः, हेम=स्वर्णभस्म, चन्द्रः= भीमसेनाख्यकर्पूरः, चपला=पिप्पली, काश्मीरम्="केशर" इति ख्यातम्, शुभ्रा=वंशरो-चना, अमृतासत्त्वम्=गुडूचीसत्त्वम्, त्वक्=दारुसिता, त्रुटिः=सूक्ष्मैला, पत्रम्="तेज-पात" इति प्रसिद्धम्, पुष्पम्=लवङ्गम्, मधुरा=मृद्वीका, शैलोत्थम्=शुद्धं शिलाजतु, चन्द्रोदयः=प्रसिद्धो रसः, कस्तूरी चेति षोडश द्रव्याणि । तत्र-मुक्ताविद्रुमहेमचन्द्रकस्तूरी-चन्द्रोदयानेकभागिकान्, शिष्टानि द्रव्याणि तु द्विभागिकानि गृहीत्वा तरुण्यर्केण आटरूषक-स्वरसेन च विमर्द्य माषप्रमाणा वट्यो विधेयाः । सेयमवितथा=नामानुसारं गुणवती

"शुक्रसञ्जीवनी" नाम वटी यक्ष्मार्त्तान् सा=पुराणेषु प्रसिद्धा शुक्रसञ्जीवनी=शुक्राचार्यस्य सञ्जीवनी नाम विद्या दैतेयान्=दितेरपत्यानि दैत्यानिव जीवयति। पुराकाले हि शुक्राचार्योऽहरहर्मृतानप्यसुरान् देवासुरसंग्रामे मृतसंजीवन्योषधिप्रभावेण पुनरुज्जीवयतिस्म स्वशिष्यैरसुरैर्भूयोभूयो व्यापादितमपि बृहस्पतिपुत्रं कचं संजीवन्या विद्यया पुनरुज्जीवयच्चेति पुराणादिषु प्रसिद्धमिदं हन्त! भारतीयविज्ञानेषु किमप्येकं विज्ञानं येन भारतस्य मुखमुज्ज्वलं भवति।

**पित्तास्रदाहकसनश्वसनव्यथा 'वा'**
**येन प्रयाति कृतगाढतराधिवा'सा'।**
**तद्भेषजं बहुगुणं भज देशदा'स'!**
**यद्वै विभर्त्ति गदराजविनाशक'त्वम्' ॥ १४ ॥**

पित्तेति—अयि देशदास! स्वदेशभक्ताय ते चेत्स्वदेशीयमेवौषधं रोचते तर्हि येन कृतो गाढतरोऽधिवासः=स्थितिर्यया सा तादृशी पित्तास्रादीनां व्यथा प्रयाति, यच्च गदराजविनाशकत्वं विभर्त्ति बहुगुणं तद्भेषजं भज। तन्नाम तु चतुर्णां पादानामन्त्याक्षरैर्निष्पन्नं "वासासत्त्वम्" इत्यवगन्तव्यम्। वासासत्त्वम्=आटरूषकसत्त्वम्। तच्च मध्वादिना लेह्यम्। वसन्ततिलकावृत्तम्।

**गोप्यं भणामि सकृदेव निधेहि कर्णं**
**लेह्यं सितामधुघृतैः सह हेमपर्णम्।**
**यत्रासतः क्षयरुजोऽपसरन्ति तूर्णं**
**काकोदराः समवलोक्य यथा सुपर्णम् ॥ १५ ॥**

गोप्यमिति—श्रूयते, कश्चिद्राजा स्वसभास्तारान् वैद्यविद्याविदुषः प्रायोऽनेकरोगनाशकान्प्रयोगान्पृच्छति स्म। ते च यत्किञ्चिदौषधं ब्रुवन्तः समयमतिवाहयन्ति स्म। कस्मिंश्चित्पर्वणि राजा सापदेशं तान्पण्डितान् गङ्गायां प्रवेश्य सशपथं प्रयोगान्वक्तुमादिदेश। तदानीं कश्चिद्वैद्यः—"घृतमधुसिताप्रयुक्तो वरसो हेमभवः क्षयं क्षिणोति। वितथः प्रभवेदयं प्रयोगो यदि तन्मे शपथः सदाशिवस्य"। इत्येवं राजयक्ष्मप्रत्यनीकमौषधमुवाच। तस्यैवानुवादरूपं पद्यमिदम्। हेमपर्णमेकमेवादेयं तच्च पूर्वं सितया सह प्रपिष्य मधुघृताभ्यां संमिश्र्य लेह्यम्। मधुघृतयोस्तुल्यता न स्यादिति तु सर्वत्र स्मर्तव्यमेव। अत्रापि-वसन्ततिलका।

"मृगाङ्कं" पुराराधमानो मृगाङ्कः क्षयातङ्कतो निर्विशङ्कं विमुक्तः।
इदानीं रसे विद्यमानेऽपि तस्मिन्किमर्थं पुनः सीदसि क्षीणधातो!॥

मृगाङ्कमिति—पुरा मृगाङ्कः=चन्द्रो मृगाङ्कं नाम रसमाराधमानः क्षयरोगाद्विमुक्तः। हे क्षीणधातो! इदानीं तस्मिन् रसे विद्यमानेऽपि त्वं पुनः किमर्थं सीदसि=दुःखमनुभवसि। "मृगाङ्करस" प्रकारः—शुद्धपारदः १ तो०, स्वर्णभस्म १ तो०, अविद्धमौक्तिकानि २ तो०, शुद्धगन्धकः १ तो०, टङ्कणम् ३ मा०—सर्वमिदं काञ्जिकेन प्रपिष्य, दृढं गोलकं बद्ध्वा, लवणपूर्णहण्डिकाया मध्ये निधाय, हण्डिकामुखं संमुद्रय यामचतुष्टयं यावद्विपचेत्। स्वाङ्गशीतं समुद्धृत्य द्वित्रिगुञ्जामितं मधुपिप्पलीभ्यां सेवेत। अस्य सेवने विदाहीनि द्रव्याणि वर्जनीयानि। किञ्च सेवयिता कोपादिकं दूरे परिहृत्य ब्रह्मचर्यं पालयेत्।

पञ्चामृताख्यः कुमुदेश्वरो वा लक्ष्मीविलासोऽपि च सार्वभौमः।
इमे रसाः सन्ति यथानुपानैः क्षयामयानां क्षपणाय लोके॥ १७॥

पञ्चेति—अत्र प्रथमार्धेन चत्वारो रसाः समुपनिबद्धाः। तत्र "पञ्चामृताख्यरस"—निर्माणप्रक्रिया—सुवर्णभस्म १ तो०, रजतभस्म २ तो०, ताम्रभस्म ३ तो०, पारदभस्म ४ तो०, अभ्रकसत्त्वम् ५ तो०, त्रिफला १ तो०, त्रिकटु १ तो०, त्रिजातम् १ तो०, विडङ्गम् १ तो०, मुस्तकः १ तो०—सर्वमिदं सूक्ष्मं विमर्द्य—कट्फलः, निर्गुण्डी, दशमूलम्, चित्रकः, हरिद्रा, शुण्ठी, मरिचम्, पिप्पली, आर्द्रकम्—इत्येतेषां क्वाथैरेकैकां भावनां दत्त्वा त्रिगुञ्जामिता वट्यो विधेयाः। तत्तद्रोगहरानुपानैः सर्वत्र प्रयोज्याः। अथ "कुमुदेश्वरो रसः"—शुद्धपारदः १ तो०, शुद्धगन्धकः १ तो०, अभ्रकभस्म १ तो०, शुद्धं हिङ्गुलम् १॥ तो०, शुद्धमनःशिला ९ मा०, लोहभस्म सर्वापेक्षयार्द्धमिति सर्वं प्रपिष्य, शतावरीरसेन चतुर्दश भावना दत्त्वा, द्वित्रगुञ्जामिता वट्यः कार्याः। प्रातः सेवनीयाः। कुमुदेश्वरस्यान्योऽपि प्रकारः— रजतभस्म, वङ्गभस्म, सुवर्णभस्म, लोहभस्म, अभ्रकभस्म, नागभस्म, प्रवालभस्म, वैक्रान्तभस्म, शङ्खभस्म, स्वर्णमाक्षिकभस्म, यसदभस्म, शुद्धपारदः, शुद्धगन्धकः, टङ्कणम्, मुक्ता, शुद्धहिङ्गुलम्—सर्वाण्येतानि समानानि गृहीत्वा गोदुग्धेन, इक्षुरसेन, आटरूषकरसेन, मुसलीरसेन, केतकीरसेन, कदलीरसेन, शाल्मलिमूलरसेन, गोक्षुररसेन चैकैकं वारं भावयित्वा गुञ्जात्रयमिता वटयः कार्याः। सितया मधुना घृतेन वा सेव्याः। "लक्ष्मीविलासरस" प्रकारः—सुवर्णभस्म, रजतभस्म, अभ्रकभस्म, ताम्रभस्म, वङ्गभस्म, लोहभस्म, कान्तलोहभस्म, "फौलादाख्य" लोहभस्म, नागभस्म, प्रवालभस्म, मुक्ताभस्म—सर्वाण्येतानि समानानि गृहीत्वा, सर्वसमानं पारदभस्म दत्त्वा, दिनत्रयं मधुना संमर्द्य, वज्रमूषायामवरुद्ध्य कुक्कुटपुटे विपचेत्। "वज्रमूषा"

च—"मृदस्त्रिभागाः शणलद्दिभागौ भागश्च निर्दग्धतुषोपलादेः । किट्टार्धभागं परिखण्ड्य वज्रमूषां विदध्यात्खलु सत्त्वपाते ॥ "—इत्युक्ता विज्ञेया । "कुक्कुटपुटं" च—"पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम् । तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ॥—" इत्युक्तं द्रष्टव्यम् । तदनु स्वाङ्गशीतं तत्समुद्धृत्य दिनद्वयं चित्रकक्वाथेन भावयित्वा—शतावरी, भूमिसिता ( "दीमक—" नामककीटस्य द्वित्रिहस्तपरिमितविलखननेनैकं मृत्तिकागोलं प्राप्यते यत्र "दीमककी रानी" इति प्रसिद्धः स्थूलकीटो भवति, तद्गोलमृत्तिकाऽन्यापेक्षया मधुरा भवति, सैव "भूमिसिता" इत्युच्यते ), विदारीकन्दः, गोक्षुरः, इक्षुः, बला, नागबला, अतिबला "गुलसिकरी" इति प्रसिद्धा, शाल्मलिमूलम्, कर्कटी, पोटा "तिपतिया" इति ख्याता, गुडूची, मधुयष्टी, शुण्ठी, द्राक्षा, ब्रह्मदण्डी, भङ्गा, उक्षिणः, उदुम्बरः, खाखसम्, शारिवाद्वयम्—यथालाभं यथासम्भवश्चैषां द्रव्याणां स्वरसैः क्वाथैर्वा पृथक् सप्त सप्त भावना दत्त्वा, ततः कस्तूरीरसेन विभाव्य, त्रिगुञ्जामिता वटयो विधेयाः । सोऽयं "लक्ष्मीविलासो" रसः । अथ "सार्वभौमरसः"—सुवर्णभस्म, हीरकभस्म, अभ्रकभस्म—त्रीणीमानि तुल्यानि, सर्वतुल्यं भूनागसत्त्वभस्म ( "केंचुआ" इति ख्यातजीवविशेषस्य सत्त्वस्य भस्म )—सर्वमिदं चित्रकरसेन भावयित्त्वा शरावसम्पुटे निरुद्धय गजपुटे पचेत् । इत्थमेव—शृङ्गिकविषक्वाथेन, कुमारीस्वरसेन, त्रिकटुक्वाथेन, त्रिफलाक्वाथेन चैकैकवारं भावयित्वा पुटेत् । रक्तिमितं द्राक्षया भक्षेत् । अथवाऽयं प्रकारो बोध्यः—अभ्रकभस्म २ पलम्, शुद्धकर्पूरः ३ मा०, जातीपत्री ४ मा०, ह्रीवेरम् ४ मा०, गजपिप्पली ४ मा०, तमालपत्रम् ४ मा०, लवङ्गम् ४ मा०, जटामांसी ४ मा०, तालीसम् ४ मा०, त्वक् ( तज ) ४ मा०, नागकेशरः ४ मा०, कुष्ठम् ४ मा०, धातकीपुष्पाणि ४ मा०, हरीतकी २ मा०, बिभीतक २ मा०, आमलकम् २ मा०, शुण्ठी २ मा०, मरिचम् २ मा०, पिप्पली २ मा०, एला ८ मा०, जातीफलम् ८ मा०, शुद्धगन्धकः ८ मा०, पारदभस्म ४ मा०—सर्वमिदं शतावरीरसेन विमर्द्य स्विन्नचणकसमाना वटी कार्या । अयं "शृङ्गाराभ्ररसः" इति प्रसिद्धयति । अत्रैव सुवर्णभस्म लोहभस्म वा चेद्दीयेत तर्हि "सार्वभौमरसो" भवेत् । अथात्र रसेषु यानि सुवर्णरजतलोहताम्रादिभस्मानि तान्युक्तानि वक्ष्यन्ते च । वङ्गभस्मविधिरयम्—पूर्ववत्तैलादिषु विशुद्धं वङ्गं खर्परे गालयित्वा तत्र प्रस्थमाने हरिद्रा—यवानी—लवङ्ग—जीरक—चिञ्चात्वग्—अश्वत्थत्वग्—अपामार्गाणां चूर्णानि पर्यायेण क्षिप्त्वा क्षिप्त्वा घर्षयेत् । अत्रादितश्चतुर्णां मानं प्रत्येकमष्टौ पलानि, अन्त्यानां त्रयाणां तु प्रत्येकं द्वौ द्वौ प्रस्थाविति बोध्यम् । तदेवं सम्पन्नं तद्भस्म पटेन पावयित्वा, कन्यारसेन पिष्ट्वा, चक्रिकाः कृत्वा गजपुटे पचेत् । ततः—यवानीजीरकलवङ्गहरिद्राणां पृथक्पलमितानां क्वाथैः पुटान्दद्यात् । कांश्चित्पुटांस्तु केवलाया हरिद्राया एव क्वाथेन दद्यात् । एवं विशुद्धं वङ्गभस्म भवति ।

वैक्रान्तभस्म हीरकभस्मवद्विधेयम् । अथ यसदभस्मविधिः—यसदं प्रताप्य प्रताप्य सप्तवारं निम्बुकरसे निर्वापयेत् । ततः कटाहे गालयित्वा तत्समानं पारदं तत्र दत्त्वा सिताचूर्णं क्षेपं क्षेपं "बकायना"—ख्यमहानिम्बकाष्ठदण्डेन घर्षयेत् । एवं कृते विशुद्धं भस्म भवेत । हिङ्गुलशुद्धिः—हिङ्गुलं निम्बुकरसे पेषयेत्तेन शुद्धिः । यद्वा—मेषीदुग्धे दोलायन्त्रेण शोधयेत । यद्वा—ग्रहण्यधिकारोक्तशुद्धिप्रकारस्य हिङ्गुलस्य सर्वत्र ग्रहणं विधेयमिति ।

शुक्तिर्वासारसश्छागीक्षीरमाम्रं सितापिचुः ।
प्रभाते पिबतामेतद्यक्ष्मापैति न संशयः ॥ १८ ॥

शुक्तिरिति—आटरूषकस्वरसः २ तो०, अजादुग्धम् १ प०, सिता १ तो०, सर्वमिदमेकत्र संमेल्य, वस्त्रेण गालयित्वा प्रातरेव पेयम् । उत्तमः प्रयोगोऽयं प्रायो नूतने रोगे महदुपकरोति ।

चातुर्जातं मुष्ट्युन्मानं कृष्णामुष्टी द्वे चादेये ।
यष्टिः श्वेता खर्जूराख्यो मृद्वीका चैत्यञ्जल्यंशाः ॥ १९ ॥
क्षुण्णैरेतैर्बद्धा वट्यः कर्षोन्मानाः स्वर्या वृष्याः ।
वासापुष्पोद्भूतैरर्कैर्नूनं सेव्या वक्षोरुक्षु ॥ २० ॥

चातुर्जातमिति—चातुर्जातम्=दारुसितैलातमालपत्रनागकेशराः, मुष्ट्युन्मानम्=पलप्रमितम् । कृष्णा=पिप्पली । श्वेता=सिता । खर्जूराख्यः=छोहाराफलत्वक् । अञ्जल्यंशाः=कुडवोन्मानाः । वासापुष्पोद्भूतैरर्कैरिति—रात्रौ यन्त्रभाण्डे वासापुष्पाणि जलं च भृत्वा रक्षेत् । प्रातर्यन्त्रं संमुद्रय योग्याग्निदानेनार्कं निष्कासयेत् । वक्षोरुक्षु=राजयक्ष्मकासादौ । विद्युन्मालावृत्तम् ।

द्राक्षासितोपलावांशीचपलाद्राविडीत्वचः ।
अन्त्यादूर्ध्वं द्विगुणिता ग्रहीतव्याश्चिकित्सकैः ॥ २१ ॥
द्राक्षासितोपले पक्त्वा तत्रान्यांश्चूर्णितान्क्षिपेत् ।
अयं लेहोऽमृतास्वादः शोषयेच्छोषमप्यरम् ॥ २२ ॥

द्राक्षेति—अन्त्यादूर्ध्वं द्विगुणिता इति—दारुसिता १ तो०, सूक्ष्मैलाबीजानि २ तो०, पिप्पली ४ तो०, वंशरोचना ८ तो०, सितोपला १६ तो०, द्राक्षा ३२ तो०—इति क्रमेणेत्यर्थः । द्राक्षासितोपले कस्मिंश्चिद्योग्यभाजने सहैव निक्षिप्य, किञ्चिज्जलं दत्त्वा मन्दाग्निना विपचेत । तदनु शिष्टद्रव्याणि चूर्णितानि तत्र मेलयित्वाऽवलेहो विधेयः । "अमृतास्वादो" नामायमवलेहः शोषमप्यरम्=शीघ्रं शोषयेदिति ।

"उन्नाभशार्करो" यद्वद्रक्तागमनिवारकः ।
"वासाकुसुमकन्दो"ऽपि स तद्वद्गुणधारकः ॥ २३ ॥

उन्नाभेति—"उन्नाभ" इति नाम्ना प्रसिद्धं निष्कण्टकबदरीफलं चतुर्गुणे जले विपचेत् । अर्धशेषे तत्र त्रिगुणां सितां प्रक्षिप्य पुनः पचेत् । तन्तूद्गमानन्तरं सिद्धमुन्नाभशार्करं काचकुपिकासु रक्षेत । इयमत्र तन्तूद्गमपरिभाषा—पच्यमानां सितां तृणादिना किञ्चिदुद्धृत्याङ्गुष्ठतर्जनीभ्यां तारं परीक्षेत । शार्करे सालसाख्ये चैकतारोद्गमेन, अवलेहे तारत्रयोद्गमेन, पाके च गुटिकाबन्धेन सिद्धिं विद्यात् । वासाकुसुमकन्दस्त्वेवं निर्मातव्यः—तरुणान्याटरूषकपुष्पाणि गृहीत्वा, तानि किञ्चित्संक्षोद्य, तत्र यथेच्छं द्विगुणां त्रिगुणां वा पिष्टां सितां प्रक्षिप्य, हस्तेन सम्यग्विमर्द्य द्वयं मेलयेत् । तदनु सूर्यातपे निदध्यात् । एवं चत्वारिंशदहोरात्रैः सुमकन्दसिद्धिः । क्वचित्तु—वर्षेण सिद्धिरभिहिता । किञ्च—एवं सर्वविधानां पुष्पाणां सुमनःकन्दाः ( गुलकन्द ) निर्मातुं शक्यन्ते, ये हि स्वस्वोपादानद्रव्यगतगुणैस्तुल्या भवन्ति । भेषजद्वयमिदं यक्ष्मणि पित्तादृक्तागमे सेव्यम् ।

यथा "द्राक्षासवः" सद्यः प्राणमार्गं विशोधयेत् ।
तथाऽऽटरूषकक्षारो वक्षःस्रोतोविशोधनः ॥ २४ ॥

यथेति—"द्राक्षासवः" कफोत्तरे यक्ष्मणि श्वासनलिकामुपरुध्य पीडयन्तं कफं दूरीकृत्य रोगिणमुल्लाघयेत् । "आटरूषकक्षारः" अपि तदर्थकृदिति योगद्वयम् । द्राक्षासवविधिः—द्राक्षां ५०पलमितां द्विद्रोणे ( ३२ प्रस्थप्रमिते ) जले विपचेत् । पादशेषं कषायं वस्त्रेण पावयित्वा शीते तस्मिन् गुडं २०० पलमितम्, धातकीपुष्पाणि द्विकुडवमितानि, विडङ्गम् १ प०, प्रियङ्गुः १ प०, पिप्पली १ प०, दारुसिता १ प०, एला १ प०, पत्रम् १ प०, नागकेशरः १ प०, मरिचम् १ प०–सर्वाण्येतानि प्रक्षिप्य भाण्डस्य मुखं मुद्रयित्वा रक्षेत् । त्रिंशद्दिनैर्जातरसं तं पुनर्वस्त्रेण संगाल्य मात्रया पिबेत् । इयानत्र विशेषः—सर्वेण द्रव्येण भाण्डं तथा पूरणीयं यथा तस्यार्धभागो रिक्तस्तिष्ठेत् । अन्यथोत्फणितस्य द्रव्यस्य बहिर्निर्गमसंभावना । किञ्च मादकतासम्पादनेच्छुभिरत्र बदरीमूलवल्कमर्धप्रस्थमितं बब्बूलवल्कलमप्यर्धप्रस्थमितं प्रक्षेप्यम् । धातकीपुष्पाण्यपि किञ्चिदधिकानि । उत्फणितस्य च द्रव्यस्य यदा पुनस्तलस्थता भवेत्तदा यन्त्रे भृत्वाऽर्कं निष्कासयेत् । सोऽयमर्क एव "द्राक्षासवः" स्यात् । एतस्य सम्यक्सिद्धिपरीक्षा तु—किञ्चिदर्कं पृथङ्निक्षिप्य तत्र वह्निदानेन चेज्ज्वलनं स्यात्तेन भवति । तदभावे पुनर्यन्त्रेण तस्यैवार्कं निष्कासयेत् । तदानीं सम्यक्सिद्धिः स्यात् । "आटरूषकक्षारः"—साङ्गोपाङ्गमाटरूषकं दग्ध्वा, तद्भस्मनि चतुर्गुणं जलं प्रक्षिप्य, काष्ठदण्डेन सम्यक्संचाल्य पञ्चषाणि

दिनान्युपेक्षेत । तदनु—तदीयं निर्मलं जलं परिस्राव्य, कटाहे निक्षिप्य शोषयेत् । कटाहमध्यलग्नं क्षारं शस्त्रादिनोल्लिख्य गृह्णीयात् । इत्थमेव सर्वे क्षारा निर्मीयन्ते इति ।

क्षीराढकं वलाप्रस्थो द्रोणार्धं सलिलस्य च ।
यन्त्रे भृत्वार्कऽमाकृष्य पिबेच्छुक्तिं क्षयामयी ॥ २५ ॥

क्षीरेति—क्षीरस्याढकम्=चत्वारः प्रस्थाः । वला=" खिरैंटी " इति ख्याता । तस्या बीजानि ग्राह्याणि । द्रोणार्धम्=अष्टौ प्रस्थाः । शुक्तिम्=तोलद्वयम् ।

शरावः सिंहिकामूलात्पयसोराढकं पृथक् ।
कृतोऽर्कः श्वासकासघ्नः क्षयज्वरविधूननः ॥ २६ ॥

शराव इति—सिंहिकामूलात्=आटरूषकमूलात् । शरावः=अर्धप्रस्थः । पयसोः=दुग्धजलयोः पृथगाढकम्=चत्वारश्चत्वारः प्रस्थाः ।

चूर्णोपादानभैषज्यकल्पितोऽर्कः "सुदर्शनः" ।
क्षयज्वरेऽपि युज्येत क्वचिदस्य चिकित्सकैः ॥ २७ ॥

चूर्णेति—सुदर्शनचूर्णोपादानभैषज्यानि—त्रिफला, हरिद्रा, दारुहरिद्रा, क्षुद्राकण्टकारी, बृहती कण्टकारी, कर्चूरः, त्रिकटु, पिप्पलीमूलम्, मूर्वा, गुडूची, धन्वयासकः, कटुका, पर्पटः, मुस्तम्, त्रायमाणा, र्ह्रीवेरम्, निम्बत्वक्, पुष्करमूलम्, मधुयष्टी, कुटजत्वक्, यवानी, इन्द्रयवः, भार्ङ्गी, शोभाञ्जनबीजानि, सौराष्ट्री, वचा, दारुसिता, पद्मकम्, उशीरम्, चन्दनम्, अतिविषा, वला, शालिपर्णी, पृष्ठिपर्णी, विडङ्गम्, तगरम्, चित्रकः, देवदारु, चव्यम्, पटोलपत्रम्, जीवकः, ऋषभकः, लवङ्गम्, वंशरोचना, कमलम्, काकोली, पत्रकम्, जातीपत्री, तालीसपत्रम्—सर्वाण्येतानि समभागानि, सर्वापेक्षयाऽर्धं कैरातं चेति । एतैरेवौषधैरर्कविधया निष्कृष्टः " सुदर्शनार्कः " क्षयज्वरे संसेव्यः ।

दीर्घालावूः प्रस्थमानाः प्रस्थं कूष्माण्डसंज्ञकम् ।
प्रस्थार्धं कासनीपत्रं तन्मूलं तु तदर्धकम् ॥ २८ ॥
गुडूची काञ्चनारस्य मज्जा च कुडवं पृथक् ।
गोजिह्वा कुलफा धात्री वनप्सा नीलमुत्पलम् ॥ २९ ॥
बीजं बादावर्दजातं सोशीरं त्रिपलं पृथक् ।
शाह्तूकस्तरुणीपुष्पं द्विपलं चन्दनद्वयम् ॥ ३० ॥

सर्वमेतत्समाप्लाव्य यामं पञ्चगुणे जले।
क्षीरं दत्त्वा समं यन्त्रे भृत्वाऽर्कं पातयेत्पुनः॥ ३१ ॥
तं त्रिसन्ध्यं पिवेत्कर्ष शोपकासास्रपित्तवान्।
परीक्ष्य दत्तवान्मह्यं रामनारायणः सुधीः॥ ३२ ॥

दीर्घेति—पञ्चभिः कुलकम्। दीर्घालावुः="लंबी घीया" इति प्रसिद्धा। कुष्माण्डम्="पेठा" इति ख्यातम्। कासनी=एतन्नाम्नात्र विख्याता बलासदृशबीजिका, प्रायो ग्रीष्मे पिबन्तीमां शताह्वासङ्गतां जनाः। तस्याः पत्राण्यादेयानि, अभावे तु बीजानि। तन्मूलम्=कासनीमूलम्। गोजिह्वा="गावजवां" इत्याख्याता। कुल्फा=अनेनैवाभिधानेनाख्याता। धात्री=आमलकी। नीलमुत्पलम्='नीलोफर' इति प्रसिद्धम्। बादावर्दजातं बीजम्="बादावर्द" इति नाम्ना यवनवैद्येषु प्रसिद्धा कण्टकिनी काचिदौषधिः पञ्चनदादौ भवति, तद्बीजानि "तुख्म बादावर्द" इति प्रसिद्धानि। झावुकः=नद्यादितटोत्पन्नः कश्चन लघुको वृक्षो यच्छाखाभिः कण्डोलादिपात्राणि निर्मीयन्ते तस्य पत्राणि ग्राह्याणि। चन्दनद्वयं श्वेतरक्तभेदात्। द्विपलमिति चतुर्षु सम्बध्यते। सर्वमौपधजातं जले पञ्चगुणे समाप्लाव्य यामं रक्षेत्। तदनु—हस्तेन विमथ्य पञ्चगुणमेव दुग्धं गव्यमाजं वा दत्त्वाऽर्कमाकृष्य तोलमात्रया पिबेत्त्रिसन्ध्यम्। रामनारायणः सुधीर्हिसारमण्डलान्तर्गत-सातडौजग्रामवास्तव्यः।

घृतं पूजितं गोक्षुराद्यं बलाद्यं तथा यष्टिकाद्यं च तत्राशु खाद्यम्।
पिबेच्छागदुग्धोत्थसर्पिः पलं वा तथैवामृतप्राश्यलेहं च लिह्यात्॥३३॥

घृतमिति— "गोक्षुराद्यं घृतं" यथा— गोक्षुरः १ प०, यवासः १ प०, शालपर्णी १ प०, पृश्निपर्णी १ प०, मापपर्णी १ प०, मुद्गपर्णी १ प०, बला १ प०, पर्पटकः १ प०— अष्टानामेषां समुदितमानापेक्षयाऽत्र दशगुणं जलं दत्त्वा निष्क्वाथ्य, दशमांशमवशेष्य, वस्त्रेण पावयित्वा, तत्र—शटी "कर्पूरकाचरी" इति प्रसिद्धा १ तो०, पुष्करमूलम् १ तो०, पिप्पली १ तो०, त्रायमाणा १ तो०, तामलकी "भुइं आंवला" इति प्रसिद्धा १ तो०, किराततिक्तः १ तो०, कुटजत्वक् १ तो०, त्रिफला १ तो०, शारिवा १ तो०—एतेषां कल्कं दत्त्वा, १ प्रस्थमानं घृतं, २ प्रस्थ-मितं दुग्धं मिश्रयित्वा पचेत्। केचिदिह—दशगुणं जलं घृतापेक्षया गृह्णन्ति न द्रव्यापेक्षया। तथा सति क्वाथस्याल्पताप्रसङ्गात्। तस्मात्प्रस्थघृताद्दशगुणे तोये दशभागाव-शिष्टे प्रस्थमानत्वं कषायस्य भवति, तच्च जतूकर्णानुमतमिति। अथ "बलाद्यं घृतम्"— बला, गोक्षुरः, बृहती कण्टकारी, क्षुद्राकण्टकारी, शालपर्णी, पृश्निपर्णी, निम्बत्वक्, पर्पटकः,

मुस्तकः, त्रायमाणा, यवासः—एतेषां द्विप्रस्थं क्वाथं, द्विप्रस्थमेव दुग्धमेकप्रस्थं घृतं—तामलकी, शटी, द्राक्षा, पुष्करमूलम्, मेदा, आमलकम्—एतेषां घृताच्चतुर्थांशं कल्कश्चेति सर्वमैकध्यं विपचेत्। अथ "यष्टिकाद्यं घृतम्"—मधुयष्टी, नागवला "गंगेरन" इति प्रसिद्धा—एतयोः—त्रिप्रस्थमितः क्वाथः, एकप्रस्थमितं गोदुग्धम्, एकप्रस्थमितं घृतम्, पिप्पलीवंशरोचनयोर्घृताच्चतुर्थांशः कल्कश्चेति सर्वमेकत्र पचेत्। पिबेदिति—छागदुग्धान्निष्कासितं सर्पिः=घृतं पलम्=पलमात्रया पिबेदिति सम्बन्धः। यद्वा—पलमिति पृथक्कृत्य छागलं मांसं मांसाशिभिः सेव्यमिति योजना। यक्ष्मण्यमृतप्राश्यलेहं लिह्यात्। "अमृतप्राश्यलेह"विधिः—जीवकः, ऋषभकः, अतिविषा, जीवन्ती, शुण्ठी, शटी, मेदा, महामेदा, शालपर्णी, पृश्निपर्णी, माषपर्णी, मुद्गपर्णी, काकोली, क्षीरकाकोली, क्षुद्राकण्टकारी, बृहती कण्टकारी, श्वेतपुनर्नवा, रक्तपुनर्नवा, मधुयष्टी, कपिकच्छूबीजम्, शतावरी, ऋद्धिः, परूषकफलम्, भार्गी, द्राक्षा, आटरूषकः, शृङ्गाटकः "सिंघाडा" इति ख्यातः, तामलकी, विदारीकन्दः, पिप्पली, बला, बदरीफलम्, अक्षोटफलम्, खर्जूरीफलम्, वातादफलम्, अजीरः—प्रत्येकं कर्षमितानामेषां कल्कं विधाय, तत्र—आमलकस्वरसः १ प्र०, विदारीस्वरसः १ प्र०, इक्षुरसः १ प्र०, छागमांसरसः १ प्र०, गोदुग्धम् १प्र०, घृतम् १ प्र०—एतानि दत्त्वा विपाचयेत्। लेहभावसिद्धिं दृष्ट्वाऽग्नेरवतार्य तत्र शीते मधु प्रस्थार्धमितं, सितां पञ्चाशत्पलतुलितां च मिश्रयित्वा स्थापयेत्। यथाग्निबलं दुग्धाद्यनुपानेन सेवेत।

**तैलं तुरगगन्धाद्यं लाक्षाद्यं वा बलादिकम्।**
**मर्दनाच्चन्दनाद्यं वा क्षयज्वरमुदस्यति ॥ ३४ ॥**

तैलमिति—तुरगगन्धाद्यं तैलम्="अश्वगन्धाद्यं तैलम्" इति प्रसिद्धं तद्विधानं यथा—अश्वगन्धा १ प्र०, बला १ प्र०, लाक्षा १ प्र०—त्रयमेतत् १६ प्रस्थमिते जले निष्क्वाथ्य, चतुर्थांशं क्वाथमवशोष्य वस्त्रेण पावयेत्। गव्यं दधि वस्त्रे बद्ध्वा, 'खूंटी' इति ख्यातायां नागदन्तिकायामवलम्ब्याधः स्थापिते पात्रे स्रुतं "मस्तु"—संज्ञकं तज्जलं क्वाथसमानं गृह्णीयात्। अश्वगन्धा, हरिद्रा, देवदारु, रेणुका तदभावे निर्गुण्डीबीजानि, कुष्ठम्, मुस्तः, चन्दनम्, दारुहरिद्रा, कटुकी, शतपुष्पा, लाक्षा, मूर्वा, मूलकम्, मञ्जिष्ठा, मधुयष्टी, उशीरम्, शारिवा—एतेषां समानभागानां कल्कं कुडवमितं कुर्यात्। ततश्चुल्लीस्थे कटाहे कल्कं, तदुपरि प्रस्थैकमितं तैलं, पूर्वोक्तं क्वाथं, मस्तु चेति सर्वं निक्षिप्य विपचेत्। अथ "लाक्षाद्यतैल"—विधिः—आढकमिते लाक्षाक्वाथे प्रस्थं तैलमाढकमितं "मस्तु" संज्ञकं दधिजलं चावाप्य विपचेत्। कुष्ठम्, मधुयष्टी, देवदारु, हरिद्रा, मुस्तम्, मूर्वा, कटुकी, शतपुष्पा, रेणुका, रास्ना, अश्वगन्धा, शतावरी, श्वेतचन्दनम्—

इत्येतेषां त्रयोदशद्रव्याणां प्रत्येकं तोलकतुलितानां तत्र कल्को देय इति। अथ "वलादिक-तैलम्"—वलामूलक्वाथः ८ भागाः, दशमूलक्वाथः ८ भा०, यव-वदर-कुलत्थानां क्वाथः ८ भा०, दुग्धम् ८ भा०, तैलम् १ भा०—इति सर्वे वक्ष्यमाणानां समानमानानां द्रव्याणां तैलात्पादिकं कल्कं दत्त्वा विपचेत्। तानि द्रव्याणि—जीवकः, ऋषभकः, भेदा, महामेदा, काकोली, क्षीरकाकोली, मधुयष्टी, माषपर्णी, मुद्गपर्णी, जीवन्ती चेति दशकं मधुरगणसंज्ञकम्, सैन्धवम्, अगुरु, रालः, सरलः "धूपसरल" इति ख्यातः, देवदारु, मञ्जिष्ठा, चन्दनम्, कुष्ठम्, एला, शारिवा, जटामांसी, शैलेयम् "छरछरीला" इति ख्यातम्, पत्रम्, तगरम्, वचा, शतावरी, अश्वगन्धा, शतपुष्पा, पुनर्नवा चेति। "चन्दनाद्यतैलस्य" विधानमुक्तं प्राग्ज्वराधिकारे।

अथ यक्ष्मचिकित्सानन्तरं धनुरायास-भारोद्वहन-बलवद्विग्रह-विषमोच्चपतन-हयवृषादिनिग्रहादिहेतुकस्योरःक्षतस्यापि यक्ष्महेतुत्वात्तच्चिकित्सामाह—

सद्यो वक्षःक्षतारम्भे लाक्षाक्षोदस्य भक्षणम्।
पायसैः पावकैर्वापि क्षीरैः सप्ताहमिष्यते॥ ३५॥

सद्य इति—वक्षःक्षतस्यारम्भे=प्राथमिकदशायामेव सद्यो लाक्षायाः क्षोदस्य पायसैः="खीर" इति ख्यातैर्दुग्धपाकैः, पावकैः="हलुवा" इति ख्यातैः, क्षीरैः=दुग्धैर्वा भक्षणं सप्ताहं यावत्कर्तव्यम्। लाक्षा च शुद्धा "किणजा" इति प्रसिद्धा पैप्पली समादेया। तस्या मात्रा द्वितोलकमिता। अत्र पूर्वार्धे क्षकारानुप्रासो द्रष्टव्यः।

इति राजयक्ष्माधिकारः

---

## अथ कासाधिकारः।

अथ यक्ष्मरूपेषु कासस्य पाठात्तस्य क्षयहेतुत्वाच्च यक्ष्मचिकित्सानन्तरं कासचिकित्सितमुच्यते। तत्रापि पृथग्वाताद्यारब्धकासनाशनयोगाभिधानपूर्वकं सर्वसाधारणप्रयोगा उच्यन्ते—

कसनमनिलजन्यं कुष्ठकाश्मीरचूर्णं
कमलमपि किलैकं क्लीतजं पित्तकासम्।
कफकसनकदम्बं कण्टकारीकषायः
कसनमखिलमेकः किङ्किरातः कृणाति॥ १॥

कसनमिति—कुष्ठम्=“कूठ” इति प्रसिद्धम् । काश्मीरम्=पुष्करमूलम् । अनयोश्चूर्णं पृथग्वातकासे सेव्यम् । क्लीतकं कमलम्=मधुयष्टिकृतं जलं, क्काथ इत्यर्थः । कण्टकारी क्षुद्रा ग्राह्या । किङ्किरातः=बब्बूलस्तस्य त्वचमुत्क्काथ्य पिबेत् । कृणाति=हिनस्ति । अत्र ककारारब्धो वृत्त्यनुप्रास आस्वाद्यः । मालिनी नाम छन्दः ।

> कमलमिव करीन्द्रः कुध्रपक्षानिवेन्द्रः
> कवचमिव कृपाणः कालकोपं कपाली ।
> कलिकलुषकलापं कीर्तनं कृष्णनाम्नः
> कसनजनितकष्टं कालयेद्वै कलिद्रुः ॥ २ ॥

कमलमिति—कलिद्रुः=विभीतकः कसनजनितमखिलं कष्टं कालयेत्=नाशयेत् । अस्यार्थे कमलमिवेत्यादि पञ्चोपमाः । कुध्रपक्षान्=पर्वतपक्षान् । कपाली=रुद्रः । अथ प्रयोगः—विभीतकफलं किञ्चिद्घृतेनाभ्यज्य, गोधूमचूर्णलोप्त्र्या लिम्पेत् । ततोऽङ्गारेषु पुटपाकवद्विपाच्य, पक्वस्य तस्य त्वचं मुखे क्षिपेत् । यद्वा—विभीतकफलत्वचः क्काथः सेव्यः । यद्वा—वक्ष्यमाणविभीतावलेहं परिशीलयेत् । श्लोकेऽत्रापि पूर्ववद्वृत्तमलङ्कारश्च ।

अथाष्टाभिर्भुजङ्गप्रयातच्छन्दश्छटाभिः कासनाशनाः प्रयोगाः—

> शटीमुस्तशृङ्गीकणायासभार्ङ्गीगुडैर्वातकासेषु लेहः सतैलैः ।
> बलासिंहिकाधावनीगोस्तनीभिः शृतं पित्तकासेषु वासासखीभिः॥३॥

शटीति—शटी=कर्चूरः । शृङ्गी=“काकडासींगी” इति प्रसिद्धा । कणा=पिप्पली । यासः=धन्वयासकः “जवासा” इति प्रसिद्धः । भार्ङ्गी=“भाडंगी” इति प्रसिद्धा । शट्यादीनां समानानां चूर्णं विधाय तिलतैले मेलनीयं तत्रैव गुडोऽपि । अयं लेहो वातिकेषु कासेषु । बला=“खिरैंटी” इति प्रसिद्धा, सिंहिका=बृहती कण्टकारी, धावनी=क्षुद्रा कण्टकारी, गोस्तनी=द्राक्षा, वासा=आटरूषकः—पञ्चानामेषां क्काथं विधाय, तत्र सितां मधु च प्रक्षिप्य पित्तकासेषु पिबेत् ।

> कणा पौष्करं कट्फलं विश्वभार्ग्यौ शृतं तैः कफोद्रिक्तकासेषु पेयम् ।
> तथा द्राविडीकृष्णजातं सखण्डं कफारोचकच्छर्दिकासेषु देयम् ॥४॥

कणेति—कट्फलम्=“कायफल” इति प्रसिद्धम् । विश्वम्=शुण्ठी । शृतम्=क्काथः । द्राविडी= सूक्ष्मैला । कृष्णम्=मरिचम् । त्रुटिमरिचयोः कषायं विधाय खण्डमुपरिष्टात्क्षेप्यम् ।

**इषीकास्नुहीपाकजन्यो रसो वा ससौवर्चलः सिंहिकापाकजो वा ।**
**रसो वासिकापाकजः क्षौद्रमिश्रो जयेच्छ्लेष्मकासं यथा क्षार एषाम् ५॥**

इषीकेति—इषीकास्नुही="तुलियाथोर" इति लोके । तत्पुटपाकजन्यः। तत्प्रकारश्चायम्—इषीकास्नुहीकाण्डं संक्षोद्य, वटपत्रैः जम्बूपत्रैर्भूर्जपत्रैर्वा तद्वेष्टयित्वा, सूत्रेण बद्ध्वा गोधूमपिष्टेन लिम्पेत् । तदनु मृत्तिकया द्व्यङ्गुलं स्थूलं लेपं कृत्वाऽङ्गारेषु निदध्यात् । लेपस्याङ्गारवर्णतायां तदुद्धृत्य, मृदादिकं व्यपनीय, वस्त्रेण सम्यङ्निष्पीड्य रसं गृह्णीयात् । तन्मात्रा पलमिता । तत्र कर्षमात्रं मध्वपि देयम् । अयमेव विधिः सर्वत्र पुटपाकेष्ववधार्यः । सिंहिका=कण्टकारी । वासिका=आटरूषकः । एषां क्षारोऽप्यत्र देयः। तद्विधिरुक्तः ।

**अहो भस्मलेहोऽपि जम्बूफलानां भवेच्छ्वासकासप्रणाशाय सद्यः ।**
**कणावह्निपाठासमङ्गानतानां समूर्वानिशानां रजः स्यात्क्षतोत्थे ॥६॥**

अहो इति—जम्बूफलानि हण्डिकायां भृत्वा, तन्मुखं मुद्रयित्वा, आरण्योपलाग्निना भस्म विधेयम् । त्वरायां तु तवके भर्जयित्वापि विधीयते । तद्भस्मलेहो मधुना कार्यः। क्षयजनिते कासे कणा=पिप्पली, वह्निः=चित्रकः, पाठा="पाढ" इति प्रसिद्धा, समङ्गा= मञ्जिष्ठा, नतम्=तगरम्, मूर्वा='मरोडफली" "चुरनहार" इत्यादिनामभिः प्रसिद्धा, निशा=हरिद्रा—इत्येतेषां चूर्णं संसेव्यम् ।

**कणागोस्तनीयष्टिकाबार्हतानां घृतक्षौद्रयुक्तोऽवलेहः क्षयोत्थे ।**
**समस्तेषु कासेषु "वासावलेहः" स्मृतः कण्टकारीकृतो वापि लेहः॥७॥**

कणेति—बार्हतम्=बृहत्या कण्टकार्याः फलम् । कणादिवस्तूनि शिलायां प्रपिष्य घृतं मधु च संमिश्र्यावलेहो विधेयः । वासावलेहविधानमुक्तं राजयक्ष्माधिकारे । "कण्टकार्यवलेहविधिः—कण्टकारीं १०० पलमितामेकद्रोणमिते जले समुत्क्वाथ्याष्टांशशेषं क्वाथं वस्त्रेण गालयित्वा, तत्र—चित्रकः, पिप्पलीमूलम्, त्रिकटु, मुस्तम्, यासः, कर्चूरः, पुष्करमूलम्, हरीतकी, तुलसी, वचा भार्ङ्गी, गुडूची, रास्ना, कर्कटशृङ्गी–इत्येतेषां चूर्णानि पृथक्कर्षमितानि दत्त्वा, सितां २० पलमितां गव्यघृतं कुडवमितं चापि दत्त्वा पुनर्निपचेत् । घनीभूते तस्मिन् शीते मधु १ कुडवमितम्, पिप्पलीचूर्णं १ कुडवमितं वंशरोचनाचूर्णं १ कुडवमितं च मिश्रयेत् । सोऽयं मात्रया समस्तकासेष्ववचार्यः ।

**अथाप्यत्र युक्तं "लवङ्गादिचूर्णं" "लवङ्गादिजा वा वटी" सर्वकासे ।**
**यथैलादिवट्यः स्मृताः कासरोगे तथैवात्र योज्यो "बिभीतावलेहः" ८॥**

अयेति— लवङ्गादिचूर्णस्यैलादिवटिकायाश्च निर्माणमुक्तम् । "लवङ्गादिवटी-" प्रकारः—लवङ्गम् १ प०, मरिचम् १ प०, विभीतफलत्वक् १ प०, खदिरसारः "खैर-सार" इति प्रसिद्धः ३ प०—सर्वाण्येतानि वब्बूलवल्कलक्वथेन विमर्थ वट्यो विधेयाः । वटी-नामासां चूर्णं विधीयते । "विभीतावलेह" विधिः—अजामूत्रे १०० पलमिते विभी-तफलत्वचं १०० पलमितां पचेत् । मूत्रे ज्वलिते विभीतकत्वं च संशोष्य चूर्णीकृत्य च मधुना लिह्यादिति ।

**समं माक्षिकैर्वासिकापुष्पचूर्णं जयेत्कासपित्तास्रशोषानवश्यम् ।**
**विषाविश्वशृङ्गीयवक्षारमेघैः कृतं क्षौद्रयुक्तं रजः कासनाशि ॥ ९ ॥**

सममिति—कासादिषु आटरूपकपुष्पाणां चूर्णं मधुना लेह्यम् । तथा अतिविषा-शुण्ठी-कर्कटशृङ्गी-यवक्षार-मुस्तानां चूर्णमपि ।

**कणा क्लीतकं कर्कटा किङ्किरातः कृता तैर्गुटी कासनाशाय योज्या ।**
**शिवादाडिमीत्वग्विभीताम्बुदानां वटी पुष्पसारैश्च कासक्षयाय॥१०॥**

कणेति—क्लीतकम्=यष्टीमधु । कर्कटा=कर्कटशृङ्गी । शिवा=हरीतकी । दाडि-मीत्वक्=दाडिमीफलवल्कलम् । अम्बुदः=मुस्तकः । पुष्पसारैः=मधुभिः ।

**कृष्णा कर्कटशृङ्गी च कट्फलश्च कटुत्रिकम् ।**
**एते ककाराः कथिताः काशनाशनहेतवे ॥ ११ ॥**

कृष्णेति—ककाराः=ककारादिभेषजानि । एषां व्यस्तानां समस्तानां चोभयथापि प्रयोगः । स च मधुना लेहनरूपः ।

**कट्फलः कर्कटाख्या च कणा काश्मीरकं तथा ।**
**कदर्थयति कासानां कुलं कादिचतुष्टयी ॥ १२ ॥**

कट्फल इति—काश्मीरकम्=पौष्करं "पोहकरमूल" इति ख्यातम् ।

**सोमासिंहास्यासिंहीनां कषायो मधुमाञ्जयेत् ।**
**कसनं पित्तकफजं श्वसनं च क्षयं ज्वरम् ॥ १३ ॥**

सोमेति—सोमा=गुडूची । सिंहास्यः=आटरूषकः । सिंही=कण्टकारी । एषां क्वाथं विधाय मधु प्रक्षिप्य पिबेत् ।

**नित्यं निषेविता नक्तं पयःसन्तानिका ध्रुवम् ।**
**शुष्ककासं क्षिणोत्याशु श्रमं प्रौढा वधूरिव ॥ १४ ॥**

नित्यमिति—पयसः=दुग्धस्य सन्तानिका="मलाई" इति ख्याता। शुष्कका-सम्="सूखी खांसी" इति प्रसिद्धं वहिरनिर्यत्कफं कासविशेषम्।

**वेष्टितं रूप्यपर्णेन नवनीतं निशामुखे।**
**सेवितं शुष्ककासार्त्ति नाशयेन्निरुपद्रवाम् ॥ १५ ॥**

वेष्टितमिति—रूप्यपर्णेन="चान्दीका वर्क" इति ख्यातेन।

**यष्टिसत्त्वं तुगाक्षीरी सूक्ष्मैला चेति तद्रजः।**
**संलीढमतसीश्लेपैः शुष्ककासं नियच्छति ॥ १६ ॥**

यष्टीति—यष्टिसत्त्वम्=" मुलेठीका सत्त " " रब्बेशूप " इत्यादि प्रसिद्धम्। तुगाक्षीरी=वंशरोचना। अतसीश्लेपैः="अलसी का लुवाव" इति विदितैः। अतसीबी-जानि जले समाप्लाव्य, कञ्चित्कालमुपेक्ष्य, हस्तेन विमर्द्य श्लेपः सम्पादनीयः।

**खुब्बाजीखतमीबीजगोजिह्वाः पञ्चमाषिकाः।**
**गुन्द्रौ पृथक्चतुर्माषौ किङ्किरातकतीरजौ ॥ १७ ॥**
**इश्पगोलतुषातस्योः श्लेपः स्याद्राममाषिकः।**
**श्लेपः श्लेष्मातकानां च तावानेवात्र गृह्यताम् ॥ १८ ॥**
**पूर्वोक्तपञ्चकक्वाथैः श्लेपान्संमिश्र्य पीयताम्।**
**वातपित्तप्रधानस्य शुष्ककासस्य कृत्तये ॥ १९ ॥**

खुब्बाजीति—खुब्बाजी-खतमीति द्वयं यावनमौषधम्। तद्बीजानि ग्राह्याणि। गोजिह्वा="गावजवां" इति प्रसिद्धा। कतीरजो गुन्द्रः="गोंदकतीरा" इति लोके। इश्पगोलम्="ईशर-बोल" इति प्रसिद्धं तस्य तुषाः="भूसी" इति ख्याताः। अतसी="अलसी" इति लोके। द्वयोरनयोः श्लेपः="लुवाव" इति राममाषिकः=माषत्रयोन्मितो ग्राह्यः। श्लेष्मातकानाम्="ल्हेसवा" इति ख्यातस्य वृक्षस्य फलानां जले विमर्द्य सम्पादितः श्लेपस्तावानेव=माषत्रयोन्मित एव। खुब्बाजीबीज-खतमीबीज-गोजिह्वा-किङ्किरातगुन्द्र-कतीरगु-न्द्राणां क्वाथं विधाय, श्लेपत्रयं संमिश्र्य शुष्ककासनाशाय पीयताम्=पिबतु। पीङ्पाने इत्यस्य कर्तरि लोटि रूपम्।

**व्याघ्री वासा जूफिका पौष्करं त्वग्यष्टी विश्वा पर्णमूलं मुकूलम्।**
**एषां क्वाथः खादिरोन्मिश्रितश्चेत्पीतः कासान्ह्रासतां लम्भयेत॥२०॥**

व्याघ्रीति—व्याघ्री=कण्टकारी। जूफिका="जूफा" इति प्रसिद्धा। त्वक्=दारु-सिता। पर्णमूलम्=कुलिञ्जनं "पान की जड़" इति लोके। मुकूलम्="पिस्ता" इति

ख्यातं, तस्य पुष्पाणि ग्राह्याणि यानि भेषजविक्रेतृभ्यः प्राप्यन्ते । अत्र-सर्वेषां क्वाथं विधाय "खैरसार" इति प्रसिद्धं खादिरं निक्षिप्य प्रपिबेत् । अत्र—शालिनी नाम छन्दः ।

पिष्टिरहो विद्रुमजा कम्पयते कासरुजाः ।
क्षौद्रसखं चेदिह खं खादति ना याति सुखम् ॥ २१ ॥
लोहभवं तद्भसितं पुष्परसैर्वा रसितम् ।
नाशयते कासशतं वृत्तमिदं भूविदितम् ॥ २२ ॥
सर्वमिदं चेन्मिलितं क्षौद्रयुतं संस्वदितम् ।
उग्रमदं कासगदं लम्भयते मृत्युपदम् ॥ २३ ॥
योगमिमं शीलयतां शोषरुजाऽपैति सताम् ।
श्वासरयोऽप्येति लयं माणवकाक्रीडमिव ॥ २४ ॥

पिष्टिरिति— चतुर्भिः कलापकम् । विद्रुमं गुलाबार्केण प्रपिष्य तत्पिष्टिर्निर्मातव्या मधुना च लेह्या । खम्=अभ्रकभस्म यस्य विधानमुक्तं श्वासे वक्ष्यते च, तच्चेन्ना=मनुष्यः क्षौद्रसखम्=मधुयुतं खादति तर्हि सुखं याति । लोहभवं भसितम्=लोहभस्म यस्येतिकर्तव्यता यक्ष्मणि विहिता, तत्पुष्परसैः=मधुभिः, रसितम्=आस्वादितम् । इदं सर्वम्=विद्रुमपिष्ट्यभ्रकभस्मलोहभस्मरूपं त्रयम् । माणवकाक्रीडमिवेति— यथा बालकानां मृत्तिकया गृहनिर्माणादिरूपं क्रीडनकं क्षणेनैव तदिच्छाधीनस्थितिकत्वाल्लयमेति तथा त्रयाणामेषां सेवनात्कासश्वासादयोऽपि लयं यन्ति । अत्र—माणवकाक्रीडं नाम वृत्तं तच्च प्रस्तुतवाचकैः पदैरेवाभिहितमिति मुद्रालङ्कारः ।

मधुमधुकाभ्यामेवं वरामधुभ्यां मधुप्रवालाभ्याम् ।
कवलय कासातुर रे कृतिशौचार्थधातुपदवाच्याम् ॥ २५ ॥

मध्विति—रे कासातुर ! कृत्यर्थो धातुः "कृ" इति, शौचार्थो धातुश्च "ष्णा" इति, ताभ्यां घटितं पदं "कृष्णा" इति तद्वाच्या पिप्पली तां मधुमधुकाभ्याम्=क्षौद्रमधुयष्टिकाभ्याम्, वरामधुभ्याम्=क्षौद्रत्रिफलाभ्याम्, मधुप्रवालाभ्याम्=क्षौद्रप्रवालपिष्टाभ्यां वा त्रिष्वेषु प्रकारेषु केनाप्येकेन प्रकारेण कवलय । आर्या ।

विद्रुमभस्म वलक्षं माक्षिकमक्षं प्रदाय लीढ्वाऽनु ।
पक्त्वा यष्टीमधुकं सक्षीरं तस्य पीयतामुदकम् ॥ २६ ॥
प्रातः सायं मासं कासविनाशं विधातुमासेव्यः ।
तमकश्वासेऽलभ्यो योगो नव्यः क्षमापतेर्भव्यः ॥ २७ ॥

विद्रुमेति—विद्रुमं कुमारीरसेन प्रपिष्य गजपुटदानेन तस्य वलक्षं भस्म निष्पाद्यम् । तद्भस्म गुञ्जात्रयोन्मितं तोलकमितमधुना विमिश्र्य लिह्यात् । ततो द्वितोलस्य यष्टिमधुकस्य क्वाथे क्वाथसमानं गव्यमाजं वा दुग्धं दत्त्वा पिबेत् । लखनऊनगरप्रसिद्धेन स्वर्गीयक्षमापतिवाजपेयिमहोदयेन तमकश्वासपीडिताय कवये दत्तस्तेन स्वशरीरेऽनुभूतोऽयमलभ्यो भव्यो नव्यः प्रयोगः । तमकश्वासलक्षणन्तु—

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते ।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥
प्रताम्यति स वेगेन त्रस्यते संनिरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥
श्लेष्मणा मुच्यमानेन भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥
अथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ।
न चापि निद्रां लभते शयानः श्वासपीडितः ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णं चैवाभिकाङ्क्षति ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ।
विशुष्कास्यो मुहुःश्वासी मुहुश्चैवावधम्यते ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ इति ॥

उपर्युक्तयोगस्याधिकदिनपर्यन्तं सेवनेन महती वीर्यबलवृद्धिर्भवति । पुंस्त्वरहितोऽपि पुंस्त्वं लभते । रतान्ते सेवनेन शुक्रक्षयजनितं नैर्बल्यमपगच्छति । सर्वथा हितप्रदोऽयं योगः ।

**कुचैलाफूकैलाकनकभवजातीफलकणा**
**मरीचश्रीसंज्ञे दृषदि मसृणीकृत्य हविषा ।**
**कृता वट्यो हन्युः पवनकसनं विण्निरसनं**
**प्रयुक्ताः प्राक्कालात्त्वरमखिलशीतज्वरमपि ॥ २८ ॥**

कुचैलेति—कुचैलं शुद्धं ग्राह्यम् । कनकभवानि=धत्तूरबीजानि । श्रीसंज्ञम्=लवङ्गम् । विण्निरसनम्=अतीसारम् । प्राक्कालादिति—शीतज्वरे वटीनामासां प्रयोग एकघण्टापूर्वं विधेयः । शिखरिणी ।

निशा वृषरसप्लुता पुनरनातपे शोषिता
विचूर्ण्य परिसेविता बहुगुणा ससन्तानिका ।
पयोभिरभिभाविता त्र्यहमियं पुनः शोषिता
घृतेन मृदुभर्जिता भवति शोषकासापहा ॥ २९ ॥

निशेति—निशा=हरिद्रा तस्याश्चूर्णं विधायाटरूपकस्वरसेन त्रिदिनं भावयित्वा छायायां शोषयेत् । पुनः श्लक्ष्णं चूर्णयित्वा दुग्धसन्तानिकया सेवेतेति प्रथमः प्रयोगः । तामेव हरिद्रां त्र्यहं गव्यदुग्धैर्भावयित्वा, संशोष्य च किंचिद्घृतेन भर्जयेत् । तच्चूर्णं मधुना वा दुग्धसन्तानिकया वा सेवनीयमिति द्वितीयः । पृथ्वी नाम छन्दः ।

निशालवणपूर्णस्य भस्म धूर्तफलस्य चेत् ।
भुक्तं विशिष्टबलवद्बलासश्वासकासजित् ॥ ३० ॥

निशेति—धत्तूरफलं किञ्चिन्निष्कासितबीजं विधाय तत्र हरिद्रालवणयोश्चूर्णं भृत्वा भस्म विधेयम् । तच्च मध्वादिना लेह्यम् ।

पर्पटी निर्मिता तज्ज्ञैः सम्बन्धाल्लोहताम्रयोः ।
कासश्वासप्रशमनी प्रायो लोकेऽत्र दृश्यते ॥ ३१ ॥

पर्पटीति—पृथग्लोहताम्रयोः सम्बन्धान्निर्मिता पर्पटी "लोहपर्पटी" "ताम्रपर्पटी" च । तत्र-कासे प्रायो लोहपर्पटी प्रशस्यते, श्वासे तु ताम्रपर्पटी । प्रयोगश्च कल्याकल्पाभ्यामुभयथापि । लोहपर्पटीनिर्माणमुक्तं ग्रहण्यधिकारे । ताम्रपर्पटीविधिरयम्—ताम्रभस्म ३ भागाः, शुद्धपारदः ३ भा०, शुद्धगन्धकः ३ भा०, शुद्धं शृङ्गिकविषम् १ भा०,—सर्वद्रव्यस्य कज्जलीं विधाय, गव्यघृतेन कल्कीकृत्य, बादराङ्गारेषु लोहपात्रे तां गालयित्वाऽर्कपत्रेषु च ढालयित्वा पर्पटीं विदध्यात् । रक्तिद्वयोन्मितां मधुपिप्पलीभ्यां सेवेत ।

रसकगन्धककज्जलिकाभ्रकैः सकटुकत्रिककर्षफलैर्गुटी ।
श्वसनकं कसनं च सुखोदकैः स्यति यथा हरहाटकपर्पटी ॥ ३२ ॥

रसकेति—चक्रबन्धोऽयम् । रसकः=पारदः । पारदगन्धकयोः कज्जलीं विधाय तत्राभ्रकभस्म, त्रिकटुचूर्णं, बिभीतकफलचूर्णं च निक्षिप्य जलेन वटी कर्त्तव्या । सा च सुखोष्णजलेन संसेव्या । स्यति=नाशयति । यथेत्युपमया रसपर्पटीस्वर्णपर्पट्योरपि प्रयोगोऽत्र सूच्यते । हरः=शिवनिष्यन्दः पारदः । हाटकम्=सुवर्णम् । पर्पट्योरनयोर्निर्माणम्—पारदमग्निमन्थरसेन, एरण्डरसेन, आर्द्रकरसेन चैकैकं दिनं विमर्द्य शोधयेत् । गन्धकचूर्णं लोहपात्रे निक्षिप्य भृङ्गराजरसेनाप्लाव्य प्रचण्डातपे शोषयेत् । एवं त्रिधा कृत्वा,

वह्नौ द्रवीकृत्य त्वरितं वस्त्रगालितं भृङ्गराजरसे क्षिप्त्वा शोषयेत् । एवं शुद्धयोः समानयो रसगन्धकयोः कज्जलीं कृत्वा, बादरवह्निस्थलोहपात्र द्रवीकृत्य, गोमयोपरि विन्यस्तकद-लीपत्रपातनेन "रसपर्पटी" विधेया । शुद्धपारदः ८ भा०, स्वर्णपत्राणि १ भा०, द्वयोः पिष्टं कृत्वा, निम्बुकरसेन विमर्दयेत् । कालिमयुक्तं रसं बहिर्निक्षिपेत् । एवं पुनः पुनः कुर्यात् । निम्बुरसेन सह स्वर्णभागो न गच्छेदिति सदावदध्यात् । तदनु-तत्र गन्धकं शुद्धं ८ भा० दत्वा कज्जलीकृत्य बादराग्निना गालयित्वा "सुवर्णपर्पटी" विदध्यात् ।

चक्रबन्धचित्रोद्धारः




**सेवितमाभारिष्टपलं लुम्पति नूनं कासबलम् ।**
**सम्प्रतिरुन्धे दुष्टमलं भेषजमेतद्दृष्टफलम् ॥ ३३ ॥**

सेवितमिति—आभारिष्टं "बब्बूलारिष्ट"-नाम्ना प्रसिद्धम् । तत्साधनविधिः—बब्बूलत्वचं २०० पलमितां चतुर्द्रोणे ( ६४ प्रस्थमिते ) जले विपाच्य द्रोणशेषे शीते तस्मिन् गुडः ३०० प०, धातकीपुष्पाणि १ प्र०, पिप्पली २ प०, जातीफलम् १ प०, शीतलचीनी १ प०, लवङ्गम् १ प०, एला १ प०, दारुसिता १ प०, तमालपत्रम् १ प०, नागकेशरः १ प०, मरिचम् १ प०— एतानि निक्षिप्य, भाण्डमुखं मुद्रयित्वा मासमेक-मुपेक्षेत । तदनु वस्त्रेण गालयित्वा पलमात्रया पिबेत् । लुम्पति=नाशयति । दुष्टमलम्= अतीसारं सम्प्रतिरुन्धे । अत्र-मणिबन्धाख्यं छन्दः ।

इति कासाधिकारः ।

## अथ श्वासाधिकारः ।



अथ कासश्वासयोर्निदानचिकित्सितसामान्यात् "कासवृद्ध्या भवेच्छ्वासः" इति वाक्येन श्वासे कासस्य कारणताभिधानाच्च कासचिकित्सानन्तरं श्वासचिकित्सितं विवक्षुः कविवरो 'गजल' रागेण गीतिकामेकां निर्दिशति द्वादशभिः पद्यैः—

बहवो मताः प्रयोगाः श्वसने चिकित्सकानाम् ।
किन्तु स्वदेशिकर्म प्रवरं भिषग्जितानाम् ॥ १ ॥
श्रयणं विशुद्धवायोर्विपिनेष्वनोकहानाम् ।
सेवा भृशं विधेया श्वसनेषु पिप्पलानाम् ॥ २ ॥
आदौ कफप्रवृत्तिर्मरुतस्ततो निवृत्तिः ।
स्वेदस्य च प्रयुक्तिः सुविशोधनाय खानाम् ॥ ३ ॥
मरिचैः सहार्कफलिका दुष्टोदरार्त्तिदलिका ।
श्वासप्रकोपजलिका पथ्या यकृद्युतानाम् ॥ ४ ॥
मात्रैव दग्धशुक्तिर्मरिचैः समं तदुक्तिः ।
मधुना मता तु भुक्तिर्मुख्या सदौषधानाम् ॥ ५ ॥
क्षारो मयूरजन्यस्तत्रार्कजोऽपि धन्यः ।
तद्वच्च मूलजोऽन्यः प्रथितश्च वासिकानाम् ॥ ६ ॥
लेहोऽपि टङ्कणस्य दृष्टः समाक्षिकस्य ।
सेवा तु नक्तमस्य श्वासव्यथान्वितानाम् ॥ ७ ॥
भूतेस्तमाखुजाया हुक्कोपरि स्थितायाः ।
न्यादो द्विरक्तिकायाः संश्लाघ्यते जनानाम् ॥ ८ ॥
स्नुह्या रवेश्च पत्रं गुडितं मरीचमिश्रम् ।
श्वसनं निहन्ति चित्रं किमिहास्ति पण्डितानाम् ॥ ९ ॥
तुम्बीफलोषितायाः क्षोदः कृतो निशायाः ।
नानोदरव्यथाया रिपुरस्त्युरोगदानाम् ॥ १० ॥

दिनकृत्पयःप्लुतायास्तन्मूलमध्यगायाः।
स्फटचाः प्रपाचिताया भूतिर्विपद्रुजानाम् ॥ ११ ॥
पट्टुतोयभाविताया भ्राष्ट्रेऽनु भर्जितायाः।
खण्डाः श्रियै निशाया मध्ये स्थिता मुखानाम् ॥ १२ ॥

वहव इति—भिषग्जितानाम्=चिकित्सितानां मध्ये स्वदेशिकर्म प्रवरम्=श्रेष्ठम्, "यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्" इति न्यायादिति भावः। श्रयणमिति-विपिनेषु अनोकहानाम्=नानाविधवृक्षाणां विशुद्धवायोः श्रयणं कार्यम्, वातवैगुण्येन समुत्पन्नस्य श्वासस्य विशुद्धवातलाभेन शान्तिदर्शनादिति। किञ्च-पिप्पलानां सेवा=नीचैः संवासादिरूपा भृशं विधेया। आदाविति—प्रथमं श्वासरोगिणः खानाम्=प्राणवाहिस्रोतसां विशोधनाय वमनादिद्वारा कफप्रवृत्तिः कर्तव्या, ततो वायोर्निवृत्तिः=अपहारः कार्यः, तदनु स्वेदस्य प्रयुक्तिर्वक्ष्यमाणरीत्या कार्या। मरिचैरिति-अर्कपुष्पलवङ्गिकानां मरिचैः सह वटचो विधेयाः। उदरार्त्तिः="पेटका दर्द" इति लोके। जलिका=अपवारणी। पथ्या=हिता। मापैवेति-शुक्तिम्="सींप" इति ख्यातां कुमारीरसेन प्रपिष्य गजपुटे पक्त्वा भस्म विधेयम्। एकमाषकमितं तद्भस्मैकादशमरिचैः समं भोक्तव्यम्। मधु चानुपानम्। क्षार इति-मयूरः=अपामार्गः। अपामार्गार्कमूलकाटरूषकजन्यानां चतुर्णां क्षाराणामुपयोगो ऽत्राभिहितः। सर्वद्रव्याणां क्षारनिर्माणस्य सामान्यविधिरुक्त एव। लेह इति—टङ्कणं भृष्टमादेयम्। भूतेरिति-हुक्काख्ये धूमयन्त्रे तमाखुपानावद्भस्म संलगति, तदुल्लिख्य, स्नुहीकाण्डे कोरितगर्ते धृत्वा, मृदालिप्य, आरण्यवनोपलेषु पुटपाकरीत्या विपाच्य, ततस्तद्भस्म काण्डतः पृथक्कृत्य द्विगुञ्जामितं सितया सह देयम्। यद्वा- तमाखुभस्मनः क्षारं निर्माय तस्योपयोगः कार्यः। स्नुह्या इति-इषीकास्नुहीदलं मरिचेन सह प्रपिष्य गुञ्जाभा गुटयो विधेयाः। इत्थमेवार्कपत्रस्यापि। अत्र-"नागफणी" इति ख्यातायाः स्नुह्या अपि रसो द्वितोलो मधुतोलकसहितत्रिगुञ्जोन्मिततैलियाख्यटङ्कणयुतश्चोपयुज्यते। तुम्बीति-ऐन्द्रवारुणीफले हरिद्रां भृत्वा, मासमेकमुपेक्ष्य, तच्चूर्णस्य माषकमितस्य सेवनं विधेयम्। उरोगदानाम्=श्वासादीनाम्। दिनकृदिति-दिनकृत्=अर्कस्तद्दुग्धेन स्फटिकां पिष्ट्वा, अर्कमूलस्योदूखलवत्पात्रं निर्माय, तत्र तां निधाय, अर्कमूलखण्डेनैव संमुद्य, मृत्पटावलिप्तां पुटपाकविधिना दहेत्। तद्भूतिः=भस्म, रुजानाम्=श्वासादिव्यथानामुपरि विपत्। पट्विति-हरिद्रामेकविंशतिदिवसान् प्रस्तरपात्रे लवणजलेन भावयेत्। तदनु तां भ्राष्ट्रे भर्जयित्वा तत्खण्डा मुखे धार्याः।

अथ सप्तभिर्भुजङ्गप्रयातैः प्रयोगाभिधानम्—

तिलस्नेहपङ्कीकृतैः सिन्धुजातैस्तथाऽपूपकैर्वापि संयावसंज्ञैः।
सुखोष्णैर्भृशं स्वेदयेच्छ्वासजुष्टं नरं वक्षसि स्त्यानदोषप्रवृत्त्यै ॥ १३ ॥

तिलेति—सैन्धवलवणं तिलतैलेन संमिश्र्य पङ्कवत्कुर्यात्। तदनु-सुखोष्णं कृत्वा वस्त्रेण पोट्टलीं बद्ध्वा, तया श्वासयुक्तं नरं स्त्यानदोषप्रवृत्त्यै=अन्तर्निरुद्धकफस्य विलायनार्थं स्वेदयेत्। अथवा-"हलुवा" इति प्रसिद्धैरपूपविशेषैश्च स्वेदयेत्। यद्वा—"मैदा" इति ख्यातां समितामतसीं चाष्टगुणजलेन घनं विपाच्य, तत्र तिलतैलं संमिश्र्य, सुखोष्णां वक्षसि विन्यस्य स्वेदयेदिति।

**सृतौ शोधितायां कुतः श्वासरासो विधौ भक्षिते वा कुतः श्वासपाशः।**
**निशारक्षितेऽङ्गे कुतः श्वासवासो ध्रुवं तार्क्ष्यभीतेर्भुजङ्गप्रयातम् ॥१४॥**

सृताविति—सृतौ=प्राणमार्गे मदनफलं निष्क्वाथ्य तत्पानं कृत्वा वमनेन शोधितायाम्। विधौ=कर्पूरं गुडेन संनीय वटकीकृत्य भक्षिते श्वासपाशनाशः स्यात्। हरिद्राया भक्षणं ग्रामीणा चूर्णरूपेण मोदकरूपेण वा बहुधा कुर्वते। तार्क्ष्यभीतेर्भुजङ्गप्रयातं भवतीति दृष्टान्तः। भुजङ्गप्रयातमत्र वृत्तं तेन मुद्रा नामालङ्कारः।

**गुडैः कल्पितं शार्करं सत्तमाल्या भवेच्छ्वासनाशाय पीतं प्रभाते।**
**शिलाभस्मतो वा भवेच्छ्वासघातं यथा तार्क्ष्यभीतेर्भुजङ्गप्रयातम्॥१५॥**

गुडैरिति—तमाली="जरदा" इति ख्याता। सा च प्रशस्तत्वाज्जयपुरीयाऽऽदेया। <u>तच्छार्करनिर्माणविधिः</u>—आर्द्रायास्तमाल्याः स्वरसे, शुष्कायास्तु जलेनाष्टगुणेन कृतेऽष्टावशेषे क्वाथे वस्त्रपूते समानं गुडं विनीय तन्तुली साधनीया, लोके यस्याः "चासनी" इति प्रसिद्धिः। तामेकतोलोत्तुलितां प्रभाते श्वासे महत्यपि सेवेत। शिला=मनःशिला। तस्या भस्मसम्पादनप्रकारः—मनःशिलामार्द्रकस्वरसेन सप्तधा भावयित्वा सूक्ष्मं विचूर्ण्य रक्तिमितामुपयोजयेदिदमेव तद्भस्म।

**दलैर्वल्कलैर्वा रवेः सिन्धुजातं पुटेऽल्पे पचेत्तत्पुनः सेवनीयम्।**
**यकृत्प्लीहगुल्मोदरश्वासकासान्निहन्याद्यथा राघवो राक्षसादीन्॥१६॥**

दलैरिति—सैन्धवं सामुद्रं वा लवणं विचूर्ण्य, हण्डिकायां समानैरर्कवल्कलैस्तत्पत्रैर्वा सह निरुध्याल्पपुटे विपचेत्। "लवणार्कचूर्ण-" संज्ञं तच्छ्वासकासादिषूपयोज्यम्। केचिदत्र हरिद्रामपि प्रक्षिपन्ति।

**स्नुहीदुग्धसिद्धः स्मृतः श्वेतमल्लस्तथैवेष्टिकायन्त्रपक्वोऽत्र मल्लः।**
**शिलासूतसिन्दूरमेवं प्रयुक्तं महाश्वासनाशाय गुप्तं मयोक्तम् ॥ १७॥**

स्नुहीति—श्वेतमल्लः="शंखिया" इति ख्यातः। तं च कस्मिंश्चिल्लघुके कटाहे धृत्वोपरि स्नुहीदुग्धं निक्षिप्य विपचेत्। दुग्धे क्षीणे पुनर्दुग्धं दद्यात्। एवं यामं पक्त्वा मल्लं

साधयेत् । किंवा—शतमल्लं सप्ताहं मूलस्वरसेन विमर्द्य, चक्रिकां बद्ध्वा, "नम्बरीईट" इति ख्याताया पक्वेष्टिकायां चक्रिकानिधानयोग्यं गर्तं निर्माय तत्र तां निधाय च ताम्रपात्र्या पिदध्यात् । पात्र्या गर्तस्य च सन्धिरोधं विधायेष्टिकां चुल्ल्यां संस्थाप्य विपचेत् । ताम्रपात्र्या उपरि जलं वा तदार्द्रवस्त्रं वा रक्षणीयम् । एवमष्टाहं पाकेन मल्लः सेत्स्यति । सोऽयमुभयथा सिद्धस्तन्दुलमात्रया दत्तः श्वेतमल्लोऽत्र श्वासरोगे मल्ल एव । यद्वा—"शिलासिन्दूर"—रसो गुञ्जैकमात्रयाऽत्र प्रयोक्तव्यः। तद्विधिः—एकविंशतिदिनान्यार्द्रकरसेन पिष्ट्वा मनःशिलां शोधयेत् । विशुष्कायां तस्यां समानं शुद्धं पारदं गन्धकं च निक्षिप्य, कज्जलीं कृत्वा, चन्द्रोदयवद्वालुकायन्त्रेण चतुर्दिनं पाकः कार्यः ।

**भवेच्छ्वासनाशाय भल्लातशुक्तिः परं त्वत्र कार्या गुरूक्त्या प्रयुक्तिः ।**
**क्वचिद्योगमर्हन्ति वट्यः कुपीलो रसो योज्यते कुत्रचित्तत्कुठारः॥१८॥**

भवेदिति—भल्लातशुक्तिप्रयुक्तौ गुरूक्तयो नाना सन्ति । तत्रास्मदभिमता युक्तरूपाः काश्चन प्रदर्श्यन्ते—(१) छिन्नवृन्तान् भल्लातान्यवक्षोदं संक्षोद्य, पटमृल्लिप्तायां कस्यांचन काचकूपिकायां भृत्वा, लोहतारनिर्मितगुलिकया ( लोहे के तारों की गोली ) तन्मुखं पिदध्यात् । तदनु—कृततलच्छिद्रे मृत्कुण्डे काचकूपीमधोमुखीं छिद्रोपरि स्थापितमुखीं विधाय, मृत्कुण्डं वालुकया पूरयेत् । कूपीसहितं कुण्डं चुल्ल्या उपरि संस्थाप्य, चुल्हीगर्ते द्वितीयां कूपीमूर्ध्वमुखीं संस्थाप्य तन्मुखं कुण्डस्थकूपीमुखेन संयोज्य मुद्रयेत् । ततः कुण्डोपरि वह्निं ज्वालयेत् । "पातालयन्त्रेण" अनेन भल्लातकतैलमधस्तनकूपिकोदरे संचितं भविष्यति । तैलस्यास्य प्रथमदिने पञ्च बिन्दवो डाक्टरवैद्येषु प्रसिद्धायां "कैपसूल" (Capsule) इत्याख्यायां गुलिकायां निक्षिप्य संसेव्याः । उपरिष्टाच्च कुडवं द्विकुडवं वा गव्यं दुग्धं पिबेत् । तदनु प्रतिदिनं पञ्चवृद्ध्या पञ्चसप्ततिं (७५ बि०) यावद्गत्वा पञ्चह्रासेन प्रयोगं परिसमापयेत् । पथ्यमत्र केवलं दुग्धं घृतं च । गुलिकाया अभावे तु भल्लातकतैलं "चिरौंजी" "चारोली" इत्यादि प्रसिद्धे चारे संमिश्र्य सेवेत । तदभावे दुग्धे एव तैलबिन्दून्निक्षिप्य पिबेत् । परन्तूभयत्र पूर्वं मुखे घृतेन लेपोऽवश्यं विधेयोऽन्यथा तैलसंस्पर्शात् परिपाकः संभवेत् । तदिदमन्नजलपरित्यागेन कल्पविधिना सेवनमुक्तम् । तत्परित्यागासहिष्णुस्त्वन्नजलसेवनं कुर्वन्नपि तैलं सेवेत । परन्तु दुग्धघृतयोर्बाहुल्येन सेवनं तत्रापि विधेयमेव । (२)छिन्नवृन्तान् प्रस्थैकमितान्भल्लातकान्समाने गव्यघृते तलयेत् । तदनु भल्लातकान्परित्यज्य घृतमात्रं माषकत्रयतस्तोलकपर्यन्तं यथाबलं दुग्धे निक्षिप्य सेवेत । (३) छिन्नवृन्तान् भल्लातकान् माष–मुद्ग–मकुष्ठ–चणकाढकीनां मिश्रिते सूपे निक्षिप्य, तत्र सर्वविधं वेसवारं घृतं च निक्षिप्य साधयेत् । सिद्धे सूपे भल्लातकान् हस्तेन विमर्द्य, तद्रसं सूपे संमिश्र्य परित्यजेत् । केवलं सूपमेव सेवेत । विधित्रयेऽपि सामान्यतोऽयमुप-

देशः—भल्लातकसेवकः शीतलजलेन स्नायात् ; सदा वस्त्रावृतः स्यात्, वहिः सूर्यतापे न गच्छेत्, उष्णवस्तूनि परिहरेत्। दुग्धघृतयोः सेवनं भृशं कुर्यात्, कण्डूपीडायां बाधमानायां तिलान्नारिकेलमज्जानं च भक्षयेत्, नारिकेलमज्जखण्डैश्च कण्डूतिविनोदं कुर्यान्न नखैरिति । क्वचिदिति—कुपीलोर्वट्यः ' कुचिलादिवटी " इति प्रसिद्धा अग्निमान्द्याधिकारे वर्णितेतिकर्तव्यताकाः । तत्कुठारः=प्रसिद्धः "श्वासकुठार–" नामा रसः । तत्प्रकारः—शुद्धपारदः, शुद्धगन्धकः, शुद्धविषम्, टङ्कणम्, शुद्धमनःशिला—सर्वेषामेषां प्रत्येकं चत्वारश्चत्वारो माषकाः, मरिचं द्वितोलम्' त्रिकटुचूर्णं सार्द्धैकतोलम्—सर्वमिदं सम्यक्प्रपिष्य वटिकारूपेण चूर्णरूपेण वा द्विगुञ्जं सेवेत । रसोऽयं मूर्च्छितस्य संज्ञाजननायापि प्रयुज्यते । प्रतिश्यायहृद्रोगस्वरभेदादिष्वप्यप्रतिषिद्धः ।

रसः "श्लेष्मचिन्तामणिः" श्लेष्मरोगे
स्मृतः "श्लेष्मकालानलो"ऽप्यत्र रोगे ।
प्रतीताः पुनः "पोट्टली हेमगर्भा"
कफे तद्वदे श्रेयसे "श्लेष्मकेतुः" ॥ १९ ॥

रस इति—अत्र चत्वारो रसा अभिहिताः । तत्र "श्लेष्मचिन्तामणिः"—शुद्धहिङ्गुलम्, इन्द्रयवः, टङ्कणम्, भल्लाचूर्णम्, मरिचम्–एतानि सर्वाणि समानि, रससिन्दूरः एकभागापेक्षया त्रिगुणः–इति सर्वमार्द्रकरसेन विमर्द्य चणकाभा वटी कार्या । "श्लेष्मकालानलः"—पारदः १ भा०, गन्धकः २ भा०, शुद्धविषम् ४ भा०, त्रिकटुचूर्णम् ८ भा०, हरीतकी १ भा०, विभीतकः १ भा०, आमलकम् १ भा०, पुष्करमूलम् १ भा०, अजमोदा १ भा०, अजगन्धिका ( बावची ) १ भा०, विडङ्गम् १ भा०, कट्फलम् १ भा०, चव्यम् १ भा०, पञ्चलवणानि ५ भा०, लवङ्गम् १ भा०, त्रिवृता १ भा०, दन्ती १ भा०–सर्वाण्येकत्र संचूर्ण्य सप्तधा तुलसीस्वरसेन भावयित्वा गुञ्जामिता वटी विधेया। "हेमगर्भपोट्टली"—शुद्धपारदः ४ भा०, सुवर्णभस्म ४ भा०, शुद्धगन्धकः १२ भा०, मुक्ताः १६ भा०, शङ्खभस्म २४ भा०, टङ्कणम् १ भा०—सर्वाणि निम्बुकरसेन विमर्द्य, गोलकं बध्नीयात्। तच्च शरावसम्पुटे संमुद्रय गजपुटे पचेत्। स्वाङ्गशीतं समुद्धृत्य मात्रया गव्याज्येन सेवेत । "श्लेष्मकेतुः"—टङ्कणम्, पिप्पली, शङ्खः, शुद्धविषम्—सर्वं समानमार्द्रकस्वरसेन दिवसत्रयं मर्दयित्वा गुञ्जामिता वट्यो विधेयाः ।

सिंहीविश्वनिशाः कणाम्बुदवृषा भार्गीगुडूच्याविति
क्वाथो वा युगपञ्चमूलजनितः पाथोऽखिलश्वासजित् ।

व्याघ्रीविश्वकुलत्थवासकजलं सत्पौष्कराढ्यं क्वचित्
कूष्माण्डीयशिफारजोऽपि रसितं कोष्णाम्बुना श्वासनुत् ॥ २० ॥

सिंहीति—इह चत्वारः प्रयोगाः । युगपञ्चमूलजनितं पाथः=दशमूलक्वाथः । सत्पौष्कराढ्यमिति-पुष्करमूलमसदपि धूर्तैर्विक्रीयते, तत्सत्त्वेन परीक्ष्य ग्राह्यम् । कूष्माण्डीयशिफा="पेठे की जड़" इति ख्याता, तच्चूर्ण रसितम्=आस्वादितम् ।

रविकलिकापिप्पलिकासिन्धुजमक्षिक्षमाक्षपेशांशम् ।
पिष्ट्वा गुडिका गिलिता श्वासं नाशं नयेदाशु ॥ २१ ॥

रवीति--रविकलिका=अर्कपुष्पकलिका । अक्षिक्षमाक्षपेशांशमिति–रविकलिकाऽक्ष्यंशा=द्विभागा, पिप्पली क्षमांशा=एकभागा, सैन्धवलवणं क्षपेशांशम्=एकभागमिति योजना ।

सम्यग्गुरूक्त्या विहितं भस्म शम्बरशृङ्गजम् ।
लिहतां श्वासहृच्छूले शाम्यतः स्नेहसेविनाम् ॥ २२ ॥

सम्यगिति—शम्बरः="सांभर–बारहसींगा" इत्यादिनामभिः प्रसिद्धो विकटबहुविषाणः शरदि शृङ्गत्यागी कश्चिन्मृगविशेषस्तच्छृङ्गजातं भस्म । तत्र गुरूक्तिरियमवधार्या—शम्बरशृङ्गजानि खण्डानि कुडवमितानि दिनत्रयं घृते निमज्जयेत् । ततः कस्यांचन हण्डिकायां प्रस्थमितं दुग्धीकल्कं भृत्वा, तन्मध्ये खण्डानि निधाय, प्रस्थपञ्चकतुलितैरारण्यगोमयैर्गजपुटं दद्यात् । इत्थं दुग्धीजकल्के षड् पुटा देयाः । ततः स्नुहीदुग्धेनार्कदुग्धेन चैक एव गजपुटो देयः । तेन विशुद्धं श्वेतं भस्म सम्पत्स्यते । तदिदं मधुनागवल्लीदलादिना संसेव्यते । अत्र–प्रसूतं दुग्धं घृतं चावश्यं सेवनीयमिति रहस्यम् । हृच्छूलम्=श्वसनकज्वरजन्या पार्श्वार्त्तिः ।

सोडां षोडशगुञ्जां मल्लं गुञ्जाद्वयोन्मितं पिष्ट्वा ।
पुट्योऽष्टादश कलिता गिलिताः शीतैर्जलैस्तथ्याः ॥ २३ ॥
यो डाक्टरगुलझारी मरुषु विहारी तदाहृतो योगः ।
जयति जवादतिजीर्णं श्वासविकारं नवाहेन ॥ २४ ॥

सोडामिति—आर्यायुग्मम् । सोडा=अनेनैवाभिधानेन प्रसिद्धः क्षारविशेषः । पुट्यः="पुडिया" इति प्रसिद्धाः कागदबद्धा औषधमात्राः । ताश्च नवदिनानि द्विसन्ध्यं सेवनीयाः । डाक्टर गुलझारीलालो युक्तप्रान्तवास्तव्यो मरुस्थलीयानेकग्रामेषु लब्धप्रतिष्ठः शल्यचिकित्सायामतीव निपुणश्चिकित्सकः ।

मल्लमित्रैर्मृगमदैर्वासितं ताम्रजं रजः ।
पर्णे निषेवणान्नूनं हिक्काश्वसनशूलजित् ॥ २५ ॥

मल्लेति—मल्लस्तन्दुलमितः, कस्तूरी द्वितन्दुलमाना, ताम्रभस्मापि द्वितन्दुलमिति सर्वमेकीकृत्य पर्णेन सेव्यम् ।

शिलालविषहिङ्गुलैस्त्रिकटुकृष्णधूर्तोद्भवै-
र्गुटीं स्मररसैः कृतां हविषि भुङ्क्ष्व मुद्गोपमाम् ।
प्रयाति विषमज्वरश्वसनशीतकासव्यथा
रुजा पवनजा वृथा भवति का कफार्तेः कथा ॥ २६ ॥

शिलेति—मनःशिला, हरतालम्, शृङ्गिकविषम्, हिङ्गुलम्, कृष्णधत्तूरबीजानि—पञ्चैतानि शुद्धानि पृथक्कोलकमितानि, त्रिकटु त्रितोलमिति सर्वं धत्तूरपत्ररसेन विमर्द्य मुद्गमिता वटी विधेया, गव्यघृतेन परिवेष्ट्य भक्षणीया । पथ्यमत्र—घृतदुग्धमुद्गसूपादि । रत्नगढ़निवासिनाऽऽयुर्वेदशास्त्रिणा सुहृद्वरेण श्रीरामरत्नशर्मणा वैद्येन समर्पितोऽयं योगः । अत्र—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इत्युक्तलक्षणं पृथ्वीनामकं छन्दः । कवेरस्य कवितायां यथाकथञ्चिदनुप्रासं विना पदविन्यास एव नेत्युक्तप्रायं न मुहुराम्रेड्यते ।

कृष्णकाञ्चनबीजानां तोलं कोलं च नागरात् ।
शाणिकी रेवतसिता शाणो बब्बूलगुन्द्रतः ॥ २७ ॥
एतच्चतुष्टयं पिष्ट्वा कृत्वा मुद्गनिभां वटीम् ।
भुञ्जीत पयसा श्वासी वट्यौ सद्यः फलप्रदे ॥ २८ ॥

कृष्णेति—काञ्चनबीजानाम्=धत्तूरबीजानाम् । कोलम्=षण्माषकाः । नागरात्=शुण्ठ्याः । शाणिकी=माषत्रयमिता । रेवतसिता="रेवतचीनी" इति प्रसिद्धा । बब्बूलगुन्द्रमपि माषत्रयमितं ग्राह्यम् । पयसा=गव्यदुग्धेन । द्विसन्ध्यं गुटीसेवा । योगोऽयमपि श्रीरामरत्नवैद्यमहाभागकृपया प्राप्तः । वट्यौ द्वे एका मात्रा ।

स्फटीशम्बलसौराष्ट्यशुक्तिसौभाग्यसादरान् ।
पिष्ट्वा द्विकार्षिकानर्कापामार्गपयसा पृथक् ॥ २९ ॥
बद्ध्वा चक्रीर्विशोष्याथ मध्येसौधं पुटेल्लघु ।
पुनस्तद्भक्षितं युक्त्या श्वासजित्परमौषधम् ॥ ३० ॥

स्फटीति—शम्बलः=शतमल्लः । सौराख्यः="कल्मीशोरा" इत्याख्यातः । सादरः= नवसादरः । पृथगिति—अर्कदुग्धेनापामार्गक्वाथेन च पेषणं विधेयम् । मध्येसौधमिति— हण्डिकायां कल्किचूर्णं निक्षिप्य, तत्र स्फट्यादीनां चक्रिका निधाय, तदुपरि पुनश्चूर्णं दत्त्वा, हण्डिकामुखं संमुद्रय गजपुटाल्लघुपुटं दद्यात् । दुग्धसन्तानिकया मधुना वा भक्षये- दिति युक्तिः ।

मिषिमधुयष्टिवनप्साक्षोदं क्षिप्त्वा पिचुं पयःप्रस्थे ।
पक्त्वा युहि पुनरत्र स्नेहं वातादजं मित्र ! ॥ ३१ ॥
पिब ससितं त्रीन्मासानसितुं श्वासांश्च कर्पितुं कासान् ।
सुखयति वक्षोवासं वीजवलासं वहिष्कृत्य ॥ ३२ ॥

मिषीति—आर्यायुग्मम् । पयसः=दुग्धस्य प्रस्थे तोलं मिष्यादीनां चूर्णं देयम् । युहि=मिश्रय । वातादजं स्नेहम्="रोगन बादाम" इति प्रसिद्धम् । त्रीन्मासानिति सेवन- मर्यादा । असितुम्=दूरे क्षेप्तुम् । वक्षसि वासो यस्य तादृशं श्वासस्य बीजभूतं बलासम्= कफं वहिष्कृत्य श्वासरोगिणं सुखयतीति योजना ।

शिरीषकदलीकुन्दपुष्पोत्थं ससितं रजः ।
श्वासं निवर्तयत्याशु पानीयस्यानुपानतः ॥ ३३ ॥

शिरीषेति—कुन्दम्=माघ्यम् । शिष्टं स्पष्टं समस्तं पुरः ।

अर्कमर्कपयसा विनिपिष्टं कौञ्जरेषु पच रे शतकृत्त्वः ।
भस्म तस्य कसनश्वसनादौ पूजितं हि विविधैरनुपानैः ॥ ३४ ॥

अर्कमिति—अर्कः=ताम्रम् । ताम्रस्य पत्राणि कारयित्वा वह्नौ प्रताप्य प्रताप्य तैले, तक्रे, गोमूत्रे, काञ्जिके, कुलत्थक्वाथे च त्रिधा त्रिधा सप्तधा सप्तधा वा निर्वाप्य शोधयेत्, ततो निम्बुकरसे निक्षिप्य त्र्यहं तीव्रातपे निदध्यात् । दिनत्रयान्ते शुद्धजलेन क्षालयित्वा चूर्णं कुर्यात् । एवं शुद्धस्य ताम्रस्य चूर्णमर्कदुग्धेन पिष्ट्वा पिष्ट्वा शतवारं कौञ्जरेषु= गजपुटेषु पचनीयम् । तद्भस्म कासश्वासादिषु पूजितम्=प्रशस्तम् । अत्र—"स्वागतेति रन- भाद्गुरुयुग्म" मिति लक्षणलक्षितं स्वागताच्छन्दः ।

अभ्रमर्कपयसा विमर्दितं पाचितं च शतधा तदर्थकृत् ।
लोहमत्र खलु चूर्णपारदैर्मारितं श्वसनहारि चारितम् ॥ ३५ ॥

अभ्रमिति—अभ्रम्=धान्याभ्रकं यस्य विधानमुक्तं प्राक् । तदर्कदुग्धेन पिष्ट्वा पिष्ट्वा शतवारं गजपुटपक्वं तदर्थकृत=कासश्वासादिनाशकं भवति । किञ्चात्र चारितम्=

प्रयुक्तं चूर्णपारदैः=हिङ्गुलैर्दशमांशैर्मारितं पूर्वोक्तप्रक्रियाकं लोहमपि श्वासहारि भवति। अत्र-"रान्नराविह रथोद्धता लगौ" इत्युक्तलक्षणं रथोद्धताच्छन्दः।

हिक्काश्वासौ चेन्मल्लपुष्पस्य दासौ
कासौ श्वासः स्यात्तालपुष्पेऽपि जग्धे।
तैले चाभ्यां वा कल्पिते सेविते च
श्वासह्रासः स्याचेत्कृपा वैश्वदेवी ॥ ३६ ॥

हिक्केति—मल्लं गोमूत्रेण पिष्ट्वा डमरुयन्त्रेण तस्य पुष्पाणि सम्पादनीयानि। हरतालपुष्पप्रकारस्तु ज्वराधिकारे उक्त एव। तैले इति—मल्लः ३ तो०, हरतालम् ३ तो०, जातीपत्री ३ तो०, जातीफलम् ३ तो०, यवानी ३ तो०, पारसीकयवानी ३ तो०, अजमोदा ३ तो०, भङ्गाबीजानि ३ तो०, लवङ्गानि ३ तो०, ज्योतिष्मती ( मालकाँगनी ) ६ तो०, कस्तूरी १ मा०, कुङ्कुमम् १ तो०,—सर्वमिदं पटमृल्लिप्तायां काचकूप्यां भृत्वा पातालयन्त्रेण तैलं पातयेत्। तैलमिदमिषीकया "सींक" इत्याख्यया पर्णे शर्करायां वा दत्त्वा सेव्यम्। क्लीबायाप्येवं देयम्। ध्वजभङ्गेऽस्य मर्दनं विधीयते। वातव्याधौ स्पर्शमात्रम्। तैलगुडाम्लादिकमत्र प्रयोगे वर्ज्यम्। चेद्विश्वेषां देवानां कृपा स्यात्तर्हि प्रयोगेणानेनावश्यं श्वासह्रासः स्यात्। वैश्वदेवीति प्रस्तुतार्थेन पदेनात्र "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इत्युक्तलक्षणं वैश्वदेवीनामकं छन्दोऽस्तीति सूचनान्मुद्राऽलङ्कारः।

जातीपत्रीजातिकोपं लवङ्गं मल्लो गन्धो गुग्गुलुश्चेति तुल्यम्।
तैलं पातालाख्ययन्त्राच्च्युतं स्याद्घोरश्वासत्रासनाशाय सद्यः॥ ३७॥

जातीति-पूर्वोक्तविधयैव तैलं सम्पादनीयं सेवनीयं च। पूर्वोक्तस्यास्य च सम्पादने पातालयन्त्रस्य प्रकारान्तरन्तु प्रदर्श्यते—चीनमृच्चषकस्य काचचषकस्य वा मुखं वस्त्रेण बद्ध्वा, तत्र वस्त्रे औषधानि यवक्षुण्णानि क्रमान्निधाय, तदुपरि अभ्रकपत्रं दत्त्वा, तत्सन्धिरोधं विधाय, तदुपरि अङ्गारभृतं तवकं दत्त्वा तैलं निष्पाद्यम्। अत्र—"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इत्युक्तं शालिनीनामकं छन्दः।

मदनोत्थिततैलमलं श्वसने सिततालजभस्म तदुक्तकथने।
कनकासवसेवनमप्युचितं नवसागरपुष्पमिहोपगतम् ॥ ३८ ॥

मदनेति—मदनः=धत्तूरस्तस्य तैलं पातालयन्त्रेण निष्पाद्यम्। सिततालम्= "गोदन्ती हरताल"इति प्रसिद्धं तस्य भस्म कुमारीस्वरससहकारेण गजपुटदानाद्भवतीति पूर्वमुक्तम्। "कनकासव"सम्पादनप्रकारः—शाखामूलपत्रपुष्पफलैः सह सर्वाङ्गं धत्तूरं संक्षोद्य तस्माच्चत्वारि पलानि, आटरूषकमूलत्वक् ४ प०, मधुयष्टी २ प०, पिप्पली २ प०,

कण्टकारी २ प०, नागकेशरः २ प०, शुण्ठी २ प०, भार्ङ्गी २ प०, तालीसपत्रम् २ प०, धातकीपुष्पाणि १ प्रस्थः, द्राक्षा २० प०, शर्करा १०० प०, मधु ५० प०, जलम् २ द्विद्रोणमितम्—सर्वमिमं संभारं भाण्डे भृत्वा, तन्मुखं मुद्रयित्वा मासं यावत्स्थापयेत् । मासान्ते वस्त्रेण गालयित्वा सिद्धं "कनकासवं" मात्रया सेवेत । अयं हि–निहन्ति निखिलान् श्वासान्कासं यक्ष्माणमेव च । क्षतक्षीणं ज्वरं जीर्णं रक्तपित्तमुरःक्षतम् । नवसागरपुष्पाणि डमरुकयन्त्रेण सम्पादनीयानि । "इह तोटकमम्बुधिसैः प्रथितम्" इत्युक्तं तोटकं छन्दोऽत्र ।

शङ्खद्रावे विनिष्कृष्टे यत्किट्टमवशिष्यते ।
तदेतच्छ्वाससंहारि मासं दत्त्वा परीक्ष्यताम् ॥ ३९ ॥

शङ्खेति–अर्कः, स्नुही, तिलाः, पीप्पलः, चिञ्चा, अपामार्गः, चित्रकः–इत्येतेषां भस्म समानं समानं गृहीत्वा, षोडशगुणेन जलेन प्लावयेत् । प्रहरचतुष्टयानन्तरं दण्डेन चालयित्वा पुनः प्रहरचतुष्टयं स्थापयेत् । ततः शनैः शनैः स्वच्छं तत्पानीयं गृहीत्वा, कटाहे निक्षिप्य मन्दाग्निना विशोषयेत् । निम्नभागस्थं श्वेताभं क्षारं छुरिकादिनोल्लिख्य गृहीयात् । सोऽयं क्षारः १ भा०, स्वर्जिक्षारः १ भा०, यवक्षारः १ भा०, टङ्कणम् १ भा०, समुद्रफेनः १ भा०, गोदन्ती १ भा०, कासीसम् १ भा०, कलशोरः १ भा०, पञ्चलवणानि २ भा०–सर्वमिदं सूक्ष्मं विचूर्ण्य, तच्चतुर्गुणं निम्बुकरसं तत्र दत्त्वा प्रस्तरपात्रस्थं तीव्रातपे निदध्यात् । प्रतिदिनं दण्डादिना चालयेच्च । सप्ताहानन्तरं मृदादिनिर्मितेऽर्कनिष्कासनयन्त्रे निक्षिप्यार्कं निष्कासयेत् । सोऽयमर्कः "शङ्खद्राव–"संज्ञको भवति, यतोऽस्मिन् क्षिप्ताः शङ्खवराटिकादीनां खण्डाः प्रद्रुता भवन्तीति । एतस्योपयोगो गुल्मादिरोगेषु भवति । एतस्मिन् विनिष्कृष्टेऽधस्तनपात्रेऽवशिष्टं किट्टं गुञ्जात्रयमितं नागवल्लीदलादिना देयम् । अस्य सेवनात् हृदुद्वेष्टनादौ सति दुग्धसन्तानिका शर्करां विना देयेति रहस्यम् ।

शङ्खो मल्लयुजा दिनेशपयसा पूर्णोदरः पाचितः
कासश्वासबलासनाशनविधौ प्रख्यातवीर्यो मतः ।
मल्लो वाऽर्कपयोऽभिषेकविधिना सिद्धोऽग्निना कुण्डके
वातश्लेष्ममतङ्गजेषु कुरुते शार्दूलविक्रीडितम् ॥ ४० ॥

शङ्ख इति—शतमल्लं समानेऽर्कदुग्धे संमेल्य तेन शङ्खस्योदरं पूरणीयम् । केचित्तु–परिपुष्टे शङ्खे पञ्चतोलकमितं मल्लं भृत्वा तत्रार्कदुग्धं मातुं योग्यं भरेदित्यादिशन्ति । शङ्खमुखमर्कपत्रेणाऽऽवृत्य मुल्तानमृत्तालिप्तवस्त्रेणावगुण्ठनीयम् । तं च शङ्खं हण्डिकायां

संस्थाप्य तन्मुखं मुद्रयित्वा गजपुटे विपचेत । स्वाङ्गशीतं चूर्णीकृत्य रक्तिमितं पर्णेन सेवेत। मल्ल इति– मृण्मये खर्परे शतमल्लं भृत्वा तत्रार्कदुग्धं दत्त्वा मन्दाग्निना पाचयेत् । अर्कदुग्धे शुष्के पुनर्दद्यात्ः एवं तोलकमिते मल्ले प्रस्थमर्कदुग्धमभिषिच्य तन्दुलमितं पर्णादिना दद्यात् । किञ्च एकतोलकमितं मल्लखण्डं वस्त्रखण्डे बद्ध्वा कुडवमिते गोमूत्रे निष्क्वाथ्य स्नुहीदुग्धे पक्षमेकमवस्थापयेत । ततस्तत उद्धृत्य जलेन प्रक्षाल्य च मृत्खर्परे निधाय प्रस्थमितं द्विवाराकृष्टं महर्घं मद्यं दत्त्वा दत्त्वा मध्यमाग्निना साधयेत । सिद्धं तन्दुलप्रमाणं सिताबुद्बुदेन "बतासा" इति ख्यातेन दद्यात् । सोऽयं द्विधापि सिद्धो मल्लो वातश्लेष्मजन्या रोगा एव मतङ्गजाः=हस्तिनस्तेषु शार्दूलविक्रीडितम्=सिंहचेष्टितं कुरुते । मान्द्यश्लेष्मसमीररुक्कसनकश्वासामहिक्काज्वरक्लैब्यातङ्ककुरुङ्गकेषु कुरुते यत्तत्र किं ब्रूमहे ? प्रस्तुतार्थेन शार्दूलविक्रीडितशब्देन तदाख्यच्छन्दःसूचनान्मुद्रा ।

भृष्टः सौरः शाणोन्मानो विल्वोन्मानं द्राक्षारिष्टम् ।
एतद्युग्मं श्वासव्याधौ स्त्यानश्लेष्माकृष्टयै योज्यम् ॥ ४१ ॥

भृष्ट इति––कलशोरस्य भर्जनं लौहे तवके कार्यम् । शाणः=चतुर्माषकाः । बिल्वम्=पलम् । द्राक्षारिष्टं द्राक्षासव एव यद्विधानमुक्तं प्राक् । युग्ममिति–चेदत्र " एसिडबेंजोइक " (Acid benzoic) नाम्ना प्रसिद्धमांग्लमौषधं दशग्रेनमितं दीयेत तर्हि अतीव वीर्यवत्तरं भवेदिति । विद्युन्मालाच्छन्दो ज्ञेयम् ।

मधुरफलाया रचितमरिष्टम् । शमयति सद्यः कसनजकष्टम् ॥ ४२ ॥
श्वसननिमित्तं द्यति कफपित्तम् । हरति च चित्तं शशिवदनेव ॥४३॥

मधुरेति––"द्राक्षारिष्ट" स्यैव गुणवर्णनमिदं न किञ्चिन्नवीनम् । श्वसननिमित्तम्=श्वासरोगोत्पत्तिकारणम् । शशिवदना=चन्द्रमुखी नायिका, सेव । शशिवदनाख्यच्छन्दः–सूचनान्मुद्रा ।

गृहीत्वाऽञ्जलिमेकैकां कण्टकार्याटरूषयोः ।
शृङ्गिकं कुङ्कुमं शृङ्गी कस्तूरी चेति शाणिकम् ॥ ४४ ॥
संकुट्य पुनराप्लाव्य जले दशशरावके ।
यन्त्रे भृत्वाऽर्कमाकृष्य श्वासव्याधौ प्रयोजयेत् ॥ ४५ ॥

गृहीत्वेति—अञ्जलिम्=कुडवम् । शृङ्गिकविषं शुद्धमादेयम् । कुङ्कुमम्=काश्मीरजं "केसर" इति प्रसिद्धम् । दशशरावके=पञ्चप्रस्थे । प्रयोजयेदिति–त्रिमाषकतः षण्माषकपर्यन्तं जलेनेत्यर्थः । अथवा—कण्टकारी २ प्रस्थौ, आटरूषकः १ प्रस्थः, कर्कटशृङ्गी अर्धप्रस्था, भार्ङ्गी कुडवमिता, धत्तूरबीजानि कुडवार्धमितानि, कुङ्कुमं पलमितम्, शृङ्गिक-

विषं शुद्धं पलार्धमितमिति सर्वस्मिन् संभारे चतुर्विंशतिप्रस्थं जलं प्रक्षिप्यार्कविधिनाऽर्कं निष्कास्य कस्तूरिकया सुवासितं कृत्वा पूर्वोक्तमात्रया पिबेदिति।

द्विप्रस्थे सलिले सखे! पच पलं सद्देवदालीफलं
क्षुण्णं तस्य शृतं चतुष्पलमितं वासश्च्युतं स्थापय।
क्षिप्त्वा तत्र च पाणिपाणितलके शोणस्फटीतुत्थके
तत्पिष्ट्वा शिवचन्द्रशर्मभिषजां योगं गृहाणोत्तमम्॥ ४६॥

द्विप्रस्थे इति—देवदालीफलम्="वन्दालडोडा" इति प्रसिद्धम्। तत्पलम्=पंचतोलकमितं द्विप्रस्थे जले निष्क्वाथ्याष्टमांशं कुडवमितमवशेष्य तत्र शोणस्फटी द्वितोलमिता तुत्थं देशीयं द्वितोलमितमित्येतद्द्वयमपक्वमेव निक्षिप्य विशोष्य च मसृणं पिष्ट्वा रक्षेत्। तण्डुलचतुष्टयमितं तन्मृद्वीकायां संमेल्य द्विसन्ध्यं सेवेत। अस्मिन्योगे सेविते संयाव-( हलुवा ) भक्षणमप्याचरेत्। अनेन तमकश्वासः शाम्यति, वक्षसि स्त्यानः कफो विलीय निस्सरति, मलप्रवृत्तिः सम्यग्भवति, क्वापि किञ्चिद्वमनमपि भवति। हरिद्वारस्थायुर्वेदप्रचारककम्पन्या अध्यक्षेणायुर्वेदमार्तण्डोपाधिधरेण श्रीशिवचन्द्रशर्ममहोदयेन प्रदत्तोऽयं योगः।

इति श्वासाधिकारः।

---

## अथ हिक्काधिकारः।

अथ "यैरेव कारणैः श्वासो बहुभिः संप्रवर्तते। तैरेव कारणैर्हिक्का घोरा भवति देहिनाम्॥" इत्येवं हिक्काश्वासयोः समाननिदानात्वाच्छ्वासचिकित्सानन्तरं हिक्काचिकित्सां विवक्षुः कविवरः श्वासचिकित्सामत्राप्यतिदिशन् प्रयोगानाह—

यदपि श्वसनप्रतिकर्म मतं ननु हिक्कनकेऽपि तदेव ततम्।
अत एव रविप्रियभस्म वरं विदितं खलु मौक्तिकमेव परम्॥ १॥

यदपीति—प्रतिकर्म=चिकित्सितम्। रविप्रियः=ताम्रं तस्य वरं भस्म श्वासचिकित्सायामुक्तम्। अयमन्योऽपि प्रकारः—उत्तमास्ताम्रीमुद्रा "पैसा" इति ख्याता वह्नौ तापं तापं करीरपुष्पाणां स्वरसे तदलाभे तु करीरपत्रशाखादिस्वरसे शतं वारान्निर्वापयेत्। ततो निष्ठ्यूतरसे करीरपुष्पवल्कसे निर्वापणावशिष्टं रसं निक्षिप्य, कल्कं कृत्वा, तत्र ता मुद्रा निधाय गजपुटेन विपचेत्। तदनु गन्धकं निम्बुकरसेन विमर्द्य, तेन ता मुद्रा विलिप्य गजपुटमेकं दद्यात्। अनन्तरं त्रिफलाक्वाथेन गजपुटसप्तकं दत्त्वा दध्ना द्वित्रिगजपुटान्

दद्यात् । एवं विशुद्धं ताम्रभस्म भविष्यति । तदिदं तन्दुलाधिकं न देयम् । राजिकायाः गण्डीरस्य "गन्दल" इति ख्यातस्य स्वरसे मुद्रां ताम्रीं निर्वाप्य तद्वक्षसजकल्के धृत्वा पुटदानेनापि भस्म भवतीति प्रकारान्तरम् । विदितमिति—तरुण्यर्केण सम्पादितं मुक्तापिष्टं कुमारीरसेन सम्पादितं तद्भस्मापि वाऽत्र मध्वादिना सेवितं परम्=अत्युत्कृष्टं विदितमिति । इह तोटकवृत्तमवेत बुधाः ! ।

**सकणं शिखिपिच्छकृतं भसितं रसितं मधुना वमनापहरम् ।**
**गलहस्तयति प्रबलं श्वसनं त्वरितं सुखयत्यपि हिक्किजनम् ॥ २ ॥**

सकणमिति—शिखी=मयूरस्तत्पिच्छानां चन्द्रकमात्रभागस्य भस्म विधेयम् । तत्सपिप्पलीकं मधुना सेव्यम् । गलहस्तयति=अपहरति ।

**कषायश्चन्द्रशूरस्य यथा हिक्कानिवर्हणः ।**
**तथा रसो दाडिमस्य सैन्धवेन चमत्कृतः ॥ ३ ॥**

कषाय इति—चन्द्रशूरः="हालों" इति ख्यातः । तथेति—इच्छा चेदत्र मध्वपि देयम् । इत्थमेव बीजपूरकरसस्यापि सेवनम् ।

**एकः पर्णादिना मल्लो हिक्काधिक्कारदीक्षितः ।**
**किं पुनस्ताम्रकस्तूरीसहितो न हितो भवेत् ॥ ४ ॥**

एक इति—श्वासाधिकारे "मल्लमिश्रैः०" इति श्लोकेन प्रतिपादितस्यैव प्रयोगस्य भङ्ग्या पुनः प्रतिपादनमिदम् । अत्रार्थापत्तिरलङ्कारः, "सहितो न हितो" इत्यत्र विरोधाभासोऽपि ।

**कनकतपनमुक्ताकान्तभस्मैकवल्लं**
**रुचकरसमधुभ्यां लीढि सौवर्चलाढ्यम् ।**
**सकृदपि गिलितं तत्प्रौढहिक्काशतानि**
**प्रशमयति मुहूर्तात्किं पुनः पञ्च हिक्काः ॥ ५ ॥**

कनकेति—कनकम्=सुवर्णभस्म, तपनः=ताम्रभस्म, मुक्ताः=मौक्तिकपिष्टिः, कान्तभस्म=लोहभस्म—सर्वमेकवल्लम्=त्रिगुंजं रुचकः="बिजौरा निम्बू" इति ख्यातो बीजपूरकस्तद्रसेन मधुना च लेह्यम् । सौवर्चलस्य रसे प्रतिवापो विधेयः । अत्रार्थापत्तिरलङ्कारः । "ननमयययुतेयं मालिनी भोगिलोकैः" इत्युक्तं मालिनीच्छन्दः ।

**गन्धिन्या बीजानि सामिलवणसहितानि भोः ।**
**पिब कोलप्रमितानि हिक्काहृतये वारिणा ॥ ६ ॥**

गन्धिन्या इति—गन्धिनी="गिंदली" इति ख्याता प्रावृषेण्यजलस्थितियोग्यायां भूमौ समुद्भवन्ती काचनौषधिः। तस्या बीजानि सामिलवणसहितानि=अर्धशाकम्भरीय-लवणयुक्तानि कोलप्रमितानि=षण्माषकमितानि वारिणा शीतलेन पिब। दिनद्वयेनावश्यं लाभो भवतीति रत्नदुर्गीयरामरत्नवैद्याः। अत्र–हिन्दीभाषाप्रसिद्धं "सोरठा" नामकं छन्दः, यस्य प्रथमतृतीयपादयोर्द्वितीयचतुर्थत्वापादने "दोहा" नामकं छन्दो भवतीति।

**हेमदलं गिल मित्र! नागदलेनालिङ्गितम्।**
**किमितः पश्यसि चित्रमस्यति हिक्कामञ्जसा॥ ७॥**

हेमेति—हेमदलम्="सोनेका वर्क" इति प्रसिद्धं तच्चैकं नागवल्लीदलेनावेष्ट्य गिलनीयम्। हिक्कामञ्जसा=क्षिप्रमेवास्यति दूरे प्रक्षिपतीति। अत्रापि सोरठाख्यं छन्दः।

**वीरणबीजोद्भूतो धूमः पीतो हिनस्ति हिक्कार्त्तिम्।**
**नावनमपि वा तथ्यं दृष्टं सिन्धूत्थनीरेण॥ ८॥**

वीरणेति—वीरणबीजम्="सींक का जीरा" इति प्रसिद्धम्। तद्धूमः "चिलम–" नामकधूमपानयन्त्रेण पातव्यः। सिन्धूत्थनीरेण=सैन्धवलवणजलेन नावनम्=नस्यप्रयोगः कर्तव्यः।

**धूमो वा माषजनितो हिक्काधिक्कारदः स्मृतः।**
**वाल्हीकसंभवस्तद्वन्मतः घ्राणपथं गतः॥ ९॥**

धूम इति—माषः="उड़द–" नामकं धान्यम्। वाल्हीकम्=हिङ्गु।

**हिक्काधिक्कारमाधत्ते शिवा रुचकसाक्षिणी।**
**श्वेतगुञ्जापि संशुद्धा सिद्धा सद्धातुरक्षिणी॥ १०॥**

हिक्केति—शिवा=हरीतकी। सा च ह्रस्वा ग्राह्या। रुचकसाक्षिणी=सौवर्चललवण युक्ता। श्वेतगुञ्जा संशुद्धा रोगेऽस्मिन् सिद्धा। सा च सद्धातुरक्षिणी=वीर्यवर्धनी भवतीति। तस्याः शोधनप्रकारः—श्वेतगुञ्जां प्रहरं यावत्काञ्जिके निष्क्वाथ्य, तत्त्वचमुत्तार्य विशोषयेत्। एतत्सेवनानन्तरं घृतं भक्ष्यमिति रहस्यम्। वाजीकरणविधया धातुरक्षणाय तु "गुञ्जागर्भो" नाम रसः सेव्यः। तस्येदं विधानम्—श्वेतगुञ्जाबीजानि प्रहरद्वयं दोलायन्त्रगतानि गोदुग्धेन संस्वेद्य, त्वगङ्कुररहितानि कृत्वा, विशोष्य सूक्ष्मं विचूर्णयेत्। ततस्तत्र समानं पिप्पलीचूर्णं, रससिन्दूरं, रजतभस्म च संमेल्य सर्वसमानं शुद्धं भङ्गाचूर्णं, दत्त्वा नागवल्लीदलरसेन प्रपिष्य वटिका विधेया द्विगुञ्जामिताः। एकां वटीं निगिल्य गव्यमुष्णं दुग्धमनु पिबेत्। वीर्यस्तम्भकरम्।

इति हिक्काधिकारः।

## अथ स्वरभेदाधिकारः ।



अथ कासश्वासादिषु प्राणोदानवायुदुष्टिर्भवति स्वरभेदेऽपि सैव दुष्टिरिति साधर्म्यान्निदानक्रमतश्च युक्तं स्वरभेदचिकित्सितमिदानीमभिधीयते—

**वातोत्थवैस्वर्यहरं मरीचचूर्णेन भुक्तोपरि सर्पिरुक्तम् ।**
**तथैव पित्तस्वरभेदभेत्तृ क्षीरं शृतं स्यान्मधुरैर्विरेकः ॥ १ ॥**

वातेति—वातिके स्वरभेदे मरिचचूर्णयुक्तं घृतं भोजनान्ते पेयम् । मधुरैः=द्राक्षायष्टीगोक्षुरादिभिः शृतं=पक्वं क्षीरम्=दुग्धम् । विरेक इति भिन्नः प्रयोगः सोऽपि मधुरैर्द्रव्यैर्विधेयः । उपजातिवृत्तम् ।

**स्वरक्षये स्युः कफजे कटूनि मूत्रेण पीतानि तथागुणानि ।**
**फलत्रिकत्र्यूषणयावशूकचूर्णं त्रिदोषस्वरभङ्गभञ्जि ॥ २ ॥**

स्वरेति—कटूनि=" पिप्पली पिप्पलीमूलं मरीचं विश्वभेषजम् " इत्युक्तं पिप्पल्यादिचूर्णमित्यर्थः । मूत्रेण=गोमूत्रेण । फलत्रिकम्=त्रिफला, त्र्यूषणम्=त्रिकटु, यावशूकः=यवक्षारः—एतेषां चूर्णं सन्निपातजस्वरभङ्गं भनक्ति । उपजातिः ।

**क्षौद्रैः कणैलामधुरारजांसि कुर्युः क्षयोत्थस्वरभङ्गभङ्गम् ।**
**मेदोभवं तद्धरणक्रियाभिर्जयन्ति वैद्याः स्वरभङ्गमाशु ॥ ३ ॥**

क्षौद्रैरिति—मधुरा=शतपुष्पा । मेदोभवम्=शरीरे मेदोवृद्धया समुत्पन्नम् । तद्धरणक्रियाभिः=कटुतिक्तकषायरससेवया मेदोहरणरूपैरुपायैः । उपजातिः ।

**स्वरार्त्तौ सगुडा शुण्ठी क्वचिद् "व्याघ्रीघृतं" मतम् ।**
**एवं "गोरक्षवटिका" सिद्धैलादिवटी क्वचित् ॥ ४ ॥**

स्वरार्त्ताविति—शुण्ठीं प्रपिष्य गुडेन संनीय गुटिकाः कार्याः । "व्याघ्रीघृत-" विधानम्—रास्ना, बला, गोक्षुरः, त्रिकटु- इत्येतेषां कल्कं विधाय, तस्माच्चतुर्गुणं घृतं तस्माच्च चतुर्गुणं कण्टकार्याः स्वरसं वा क्वाथं वा दत्त्वा विपचेत । सिद्धमिदं "व्याघ्रीघृतं" स्वरभेदं पञ्चविधं कासं च नाशयति । "गोरक्षवटिका-" रससिन्दूरः, ताम्रभस्म, लोहभस्म—त्रीणि द्रव्याणीमानि कण्टकारीफलस्वरसेनैकविंशतिवारं भावयित्वा मुद्गतुल्या वटी कार्या । येयं मुखस्था स्वरभेदमपहरति । " एलादिवटी " पूर्वमुक्ता ।

मूत्रं पानात्कृष्णाया गोः स्वर्यं यद्वद्धात्रीदुग्धम् ।
एवं ब्राह्म्यादिः क्षोदः स्याद्भृष्टा पथ्या न स्यान्मिथ्या ॥ ५ ॥

मूत्रमिति—कृष्णाया गोर्मूत्रं चत्वारिंशद्दिनावधि सेवनीयम् । मात्रा चास्य दोषबलप्रकृत्याद्यनुसारतः कल्पनीया । इदं कोष्ठशुद्धिं पुरस्कृत्य स्वरभेदं नियच्छति । धात्रीदुग्धमिति—आमलकीफलचूर्णं दुग्धेन सह सेव्यम् । " ब्राह्म्यादिक्षोदः "—ब्राह्मी, वचा, शङ्खपुष्पी, कुष्ठम्—इत्येतेषां चूर्णं मधुना लेह्यम् । पथ्या=हरीतकी तस्या भर्जनं कृत्वा सेवनं कार्यम् । विद्युन्माला ।

मरिचत्रुटियष्टिकुलिञ्जनकं क्षितिचन्द्रजगद्युगमापमितम् ।
समितातुपकर्षयुतं ससितं क्वथितं स्वरभेदगदे प्रथितम् ॥ ६ ॥

मरिचेति—मरिचं क्षितिमापम्=एकमाषम्, सूक्ष्मैला चन्द्रमापा=एकमाषा, यष्टी जगन्माषा=त्रिमाषा, कुलिञ्जनं युगमापम्=द्विमाषम्, समितातुषाः=" गेहूंका चापड़ " इति प्रसिद्धास्तेषां कर्षः–सर्वमिदं निष्क्वाथ्य, तत्र द्वितोलां सितां प्रक्षिप्य पिबेत् । कण्ठरोगे प्रतिश्याये चापि क्वाथोऽयं प्रयोज्यः । तोटकवृत्तम् ।

चन्द्रास्ये! वद नित्यमव्ययमये! किं तन्निषेधार्थकं
किं वा पर्वतवाचकं किमु पुनर्लोके लतावोधकम् ।
का वा स्यात्स्वरभेदभेदनपटुः का शौचभुक्तान्तयो-
र्हे प्राणेश्वर ! विद्धि विश्वविदितां तां नागवल्लीमिमाम् ॥ ७ ॥

चन्द्रास्ये इति—अत्र प्रश्नोत्तररूपेण स्वकान्तया सहालापो निबद्धः । नित्यं निषेधार्थकमव्ययं " न " इति, पर्वतवाचकम् " अग " इति, लतावोधकं " वल्ली " इति क्रमशः पूर्वार्धोपात्तानां प्रश्नानां व्यस्तान्युत्तराणि । स्वरभेदभेदनपटुः " नागवल्ली " इति, शौचान्ते भुक्तान्ते च सेव्या " नागवल्ली " इति च समस्तोत्तरमिति व्यस्तसमस्तोत्तरजातिरन्तर्लापिकेयम् । स्वरभेदगदे पूगखदिरचूर्णादियुतं नागवल्लीदलमासेव्यमिति समस्तार्थः । शौचभुक्तान्तयोस्ताम्बूलभक्षणं तु दिनचर्यानियतम् । तद्यथा—" रते सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे । सभायां विदुषां राज्ञां कुर्यात्ताम्बूलभक्षणम् " इति ।

इति स्वरभेदाधिकारः ।

## अथारोचकाधिकारः।

अथोर्ध्वगविकारत्वाद्रोगविनिश्चयक्रमाच्च स्वरभेदानन्तरमरोचकचिकित्सितमुच्यते–

जतुकं निम्बुकसत्त्वं सितमरिचं श्वेतजीरकं लवणः।
विहितः क्षोदो मसृणः किन्तु गणः स्याद्यथोत्तरं द्विगुणः॥ १॥
रसनानर्त्तकलवणोऽरोचतमिस्रव्रजोद्धृतावरुणः।
मन्दानलनिग्रहणः प्रबलविषूचीप्रवाहसंहरणः॥ २॥

जतुकमिति––गीतियुग्मम्। जतुकम्=भृष्टं हिङ्गु एकभागम्, निम्बुकसत्त्वं द्विभागम्, श्वेतमरिचं चतुर्भागम्, भृष्टं श्वेतजीरकमष्टभागम्, सैन्धवलवणः षोडशभागः–इति यथोत्तरं द्विगुणं गणं विचूर्ण्य मसृणं चूर्णं विधेयम्। तस्य "रसनानर्त्तकलवणः" इति संज्ञा। सोऽयं रसनानर्त्तकलवणोऽरोच एव तमिस्रम्=तिमिरं तद्व्रजोद्धृतावरुणः=सूर्यतुल्यः। मन्दानलं निगृह्णातीति तादृशः। प्रबला या विषूची तस्याः प्रवाहं संहरतीति तादृशोऽस्ति।

धान्यकं जीरयुगलं वृक्षाम्लं साम्लवेतसम्।
सैन्धवं रोमकं दारुसिता चैव कपित्थकम्॥ ३॥
ग्राह्याणीमानि सर्वाणि द्विकर्षाणि पृथक्पृथक्।
सौवर्चलं त्रिकर्षं स्यादाकल्लो वार्धितोलकः॥ ४॥
सचित्रकं निम्बुसत्त्वं विडं च पृथगाक्षिकम्।
शुण्ठ्याः शाणः कणाकोलं सिता सर्वसमा भवेत्॥ ५॥
चूर्णं चेतःप्रसादाख्यमरुचि परिचूर्णयेत्।
अग्निमान्द्यं परिहरेदुद्गारं च विशोधयेत्॥ ६॥

धान्यकमिति––वृक्षाम्लम्="हांसरिया" इति प्रसिद्धं तिन्तिडीकम्, रोमकम्="साँभर का नमक" इति प्रसिद्धम्। कपित्थम्="कैथ" इति ख्यातम्। वार्धितोलकः=चतुस्तोलकः। शुण्ठ्याः शाणः=त्रयो माषाः। कणाकोलम्=पिप्पली षण्माषकमिता। सिता सर्वसमोक्तापि १५ तोलकमितैव क्षेप्या। अत्रानुक्तान्यपि दाडिमीबीजानि सार्धसप्ततोलकमितान्यवश्यं क्षेप्याणि, तथात्वे एव चूर्णस्य स्वादुतासम्पत्तेः। चेतःप्रसादाख्यमिदं चूर्णं यस्य हिन्दीभाषाप्रसिद्धं नाम "दिलपसन्दचूर्ण" इत्यस्ति। विक्रेतारो विज्ञापनविधया विक्रीणन्त्येनत्।

सखे! भृत्वा भाण्डे रुचकफलजं केसरवरं
ततः पिष्टांस्तत्रावप सपदि साकारकरभान्।
कणाङ्घ्रिक्षाराग्नित्रिकटुपटुगन्धद्विजरणान्
पुनर्मित्रैः साकं रसय रसनीयं रुचिकरम्॥७॥

सखे इति—सखे!=मित्र! रुचकफलजम्=बीजपूरफलजन्यं श्रेष्ठं केसरं द्विप्रस्थं काचभाण्डे भृत्वा, ततस्तत्र पिष्टानाकल्लकसहितान्कणामूलादीनावप=प्रक्षिप। तत्परिमाणम्—आकल्लकः ४॥ तो०, पिप्पलीमूलम् ६ तो०, यवक्षारः ४ तो०, चित्रकः १० तो०, शुण्ठी ६ तो०, मरीचं १२ तो०, पिप्पली ८ तो०, सैन्धवम् २५ तो०, सौवर्चलम् १२॥ तो०, निम्बुकसत्त्वं ४ तो०, त्वक् (तज) ४॥ तो०, सूक्ष्मैला ४॥ तो०, तमालपत्रम् ४॥ तो०, श्वेतजीरः ६ तो०, कृष्णजीरः ६ तो०—सर्वेषामेषां चूर्णं दत्त्वा पक्षमेकमुपेक्ष्य ततो रसनीयमिदम्। अत्र त्रिशब्दस्य कटुपटुगन्धैस्त्रिभिः सह योगः। ततश्च त्रिपटुषु विडाख्यलवणस्य पाठात्तदेव निम्बुकसत्त्वस्थाने समादेयम्, नतु निम्बुकसत्त्वमन्यथा वस्तुनोऽत्यम्लता स्यात्। परमत्र तदुल्लेखो मतान्तरपरतया कृत इति।

निम्बूकस्वरसे षडञ्जलिमिते क्षिप्त्वाऽभयैकाञ्जलिं
सिन्धूत्थं प्रसृतं मदाय विपचेदष्टाम्रमाशेषयेत्।
सिन्धूत्थोषणजीरकान्द्विपलिकान्निक्षिप्य चालोडयेत्
पश्चादर्ककरैर्विशोष्य रसयेत्पथ्या न मिथ्याऽरुचौ॥८॥

निम्बूकेति—षडञ्जलिमिते=सार्द्धैकप्रस्थप्रमाणे। अभया=हरीतकी, सा च लघ्वी ग्राह्या। तस्या अञ्जलिम्=कुडवम् (ऽ। पाव)। सिन्धूत्थम्=सैन्धवलवणम्। प्रसृतम्=द्विपलम्। अष्टाम्रम्=अष्टपलम्, प्रस्थार्धमिति यावत्। ऊषणम्=मरिचम्। इयं पथ्या लोके "शुद्ध हर्रें" इति प्रसिध्यति, सा चारुचौ मिथ्या नैव भवति।

निम्बूकाम्बुनि सेटकेऽञ्जलिमितं संन्यस्य सिन्धूद्भवं
दत्त्वा स्तोकसिताघृतं च विपचेदष्टावशेषं नयेत्।
व्योषाकल्लकटङ्कणं द्विजरणं क्षिप्त्वा द्विकर्षं पृथक्
पिष्ट्वा तन्मृदुकिट्टवद्वटका रुच्याः परं पाचनाः॥९॥

निम्बूकेति—सेटके=" सेर " इति प्रसिद्धे प्रस्थे। कुडवमितं रसमधिकं क्षिपेदित्युपरिष्टात्। स्तोकेति-विपाककाले द्वित्रिमाषं घृतं दत्त्वा विपाकान्ते तोलकद्वयमितां सितां

प्रक्षिपेदिति । अष्टावशेषम्=द्विपलावशेषम् । व्योषस्थद्रव्याणां प्रत्येकं कर्षद्वयं ग्राह्यम् । आकल्लकस्य कर्षद्वयोक्तावपि कर्षत्रयमत्र ग्राह्यम् । वटकाः=गुटिकास्ताश्च चणकप्रमाणाः ।

प्रस्थे निम्बुरसे सपादकुडवं सौवर्चलं तत्समं
खण्डं न्यस्य विपाच्य किञ्च वसनैरास्राव्य भूयः पचेत् ।
व्योषाकल्लकजीरकान्पलमितान्संमिश्र्य तन्तूद्गमे
पश्चात् "संचरपाक"माद्धि रुचिरं चेतोहरं भूभृताम् ॥ १० ॥

प्रस्थे इति--सपादकुडवम्=पञ्चपलम् । खण्डम्=सिताम् । तत्समम्=सौवर्चलतुल्यं सपादकुडवमित्यर्थः । विपाच्येति– यावता लवणो द्रुतः स्यात्तावन्तं कालं पक्त्वा, ततो वस्त्रेण गालयित्वा तन्तूद्गमावधि भूयः पाकं कृत्वा व्योषादीन्प्रक्षिप्य वटिका बध्नीयादिति । एतस्य " संचरपाकः " इति प्रसिद्धिः ।

प्रस्थे निम्बुजले तदर्धतुलितां दत्त्वा सितां सम्पचेत्
पश्चात्तत्र विनिक्षिपेत्त्रिपलिकां तन्तूद्गमे गोस्तनीम् ।
सिन्धूत्थं पलिकं तदर्धतुलितं सौवर्चलं कार्षिकान्
कृष्णाकल्लमरीचपुष्पधनिकाजीरद्विकैलानलान् ॥ ११ ॥
हिंग्वाढ्यान्सुविचूर्ण्य काचकुतुपे संनीय संस्थापयेत्
लीढ्वा लेहममुं प्रसीदतु परांश्चागन्तुकांस्तोषयेत् ।
यस्यास्वादनलिप्सया दिविषदः श्रान्ता नितान्तं पुनः
कस्तस्यागणितान्गुणान्गणयितुं लोके समर्थो भवेत् ॥ १२ ॥

प्रस्थे इति--तदर्धतुलिताम्=प्रस्थार्धमिताम् । ससिते निम्बुरसे पाकेन तन्तूद्गमे सति पलत्रयतुलितां गोस्तनीम्=द्राक्षां विनिक्षिपेत् । गोस्तनीष्वीषत्स्विन्नासु चुल्हीत उत्तार्य सैन्धवादीनां प्रक्षेपः कार्यः । तदर्धतुलितम्=पलार्धमितम् । कृष्णा=पिप्पली, आकल्ल= "अकरकरा" इति प्रसिद्धः, मरीचम्, पुष्पम्=लवङ्गम्, धनिका=धान्यकम्, जीरद्विकम्=शुक्लकृष्णभेदेन द्वौ जीरकौ, एला, अनलः=चित्रकः—एतान्प्रत्येकमेकतोलकमितान् क्षिपेत् । हिङ्गु चाल्पमेव देयं यावता सौगन्ध्यसुस्वादुतादिकं स्यात् । काचकुतुपे=" अमृतवान " इति प्रसिद्धे काचभाण्डे । दिविषदः=देवाः, अपीत्यर्थात् । "द्राक्षावलेहः" इति प्रसिद्धोऽयमवलेहोऽरोचकाग्निमान्द्यादिषु तूपयुज्यत एव । परन्तु वैद्यस्योपचाल्यं गृहिणश्च गृहं प्राप्ताना-

मिश्राणां सुहृदादीनां स्वागतसत्कारादिसंविधानायाप्यतीव प्रशस्यते. इत्येतस्य गणयितुं न शक्यन्ते जनमनोहारिणो गुणा इति ।

भृष्टे निस्तुषकृष्णजीरकुडवे सद्राजनस्थापिते
प्रीताङ्गूरकचुक्रके समरिचं कोलैकमेलाभवम् ।
गुञ्जैकं जतुकं पटूत्तममथो तोलैस्त्रिभिश्चावपेत्
पश्चात्तज्जरणं विभाव्य सलिलैर्व्योमेषुनिम्बूद्भवैः ॥ १३ ॥
यो मार्तण्डकरैर्विशोष्य रसयेद्रोचिष्णुजीरोत्तमं
न स्यात्तेन समः कृती क्षितितले नो वा समृद्धो जनः ।
एवं साधितशुक्लजीरकवरः स्यादेव मोदाकरः
कस्मै न स्वदते सुधारसमयं जीराह्वयं तद्द्वयम् ॥ १४ ॥

भृष्टे इति—अत्रेयमितिकर्तव्यता—" स्याहजीरा " इति प्रसिद्धं कृष्णजीरकं कुडवमितं " छाज " इति प्रसिद्धेन धान्यास्फालनयन्त्रेण निस्तुषीकृत्य, भ्राष्ट्रे भर्जयित्वा कुडवमितेन " अंगूरका सिरका " इति लोके प्रसिद्धेनाङ्गूरकचुक्रेण भावयेत् । तदनु तत्र मरिचम् ६ मा०, भैद्रलाबीजानि ६ मा०, हिङ्गु १ र०, सैन्धवलवणम् ३ तो०—एतानि निक्षिप्य, पञ्चाशन्निम्बुकस्वरसैस्तत्सर्वं भावयित्वा सूर्यतापे संशोषयेत् । अतीव रुचिकरं तदिदं " रोचिष्णु जीरक " नाम्ना प्रसिद्धिं याति । इत्थमेव " सफेदजीरा " इत्याख्यातस्य श्वेतजीरकस्यापि संसिद्धिः । एवं विधिना निष्पादितं प्रसिद्धं तज्जीरकद्वयं कस्मै न स्वदते, अपि तु सर्वस्मायापि तद्गुणज्ञाय रोचते इति ।

त्रिप्रस्थेऽम्बुनि निम्बुजे सलवणे स्वाद्वीफलप्रस्थकं
कृत्वाऽनस्थि निमज्ज्य जीरमरिचैलाकल्कविश्वोषणाः ।
प्रक्षिप्योचितमात्रयाऽऽवपनकं प्रावृत्य संस्थापयेत्
पश्चात्पक्षमुपेक्ष्य जक्षितु जनो रोगेष्वरुच्यादिषु ॥ १५ ॥

त्रीति—सलवणे=द्विकुडवलवणसहिते । स्वाद्वीफलानि=" छोहारा " इति प्रसिद्धानि खर्जूरीफलानि । पूर्वं स्वाद्वीफलानां काष्ठतुल्यान्यस्थीनि निष्कास्य निम्बुरसे निमज्जनं विधेयम् । ततस्तत्र जीरादीनां प्रक्षेपः । उचितमात्रयेति–जीरद्वयं प्रत्येकं द्वितोलं तच्चापि भृष्टम्, शेषाणि मरिचम्, एला, आकल्लः, शुण्ठी, पिप्पली–इत्येतानि प्रत्येकं षण्मासकमिता-

नीति । आवपनकम्=भाण्डम् । प्रावृत्य=वस्त्रादिनाऽऽच्छाद्य । अश्नितु=भक्षयतु । इदं सिद्धं स्वाद्वीफलं "मशाले की छुहारी" इति प्रसिध्यति । एतस्य विधानान्तरमन्यदप्यस्ति । तद्यथा—कस्मिंश्चित्काचभाण्डे द्विप्रस्थं ( २ सेर ) निम्बुरसं भृत्वा, तस्मिन्नर्धप्रस्थमितं लवणचूर्णं विमिश्र्य, प्रस्थमानानि सुपुष्टानि जलप्रक्षालितानि स्वाद्वीफलानि मज्जयेत् । अन्यस्मिन्भाजने पिप्पली ३ तो०, मरिचम् ३ तो०, भद्रैला ३ तो०, आकल्लः ३ तो०, भृष्टः श्वेतजीरः १॥ प०, भृष्टः कृष्णजीरः १॥ प०, "तेजपात" इत्युक्तं पत्रम् १॥ तो०, जातीफलम् १ तो०, जातीपत्री १ तो०, शुण्ठी २ प०, लवणम् ३ प०, निरस्थीनि स्वाद्वीफलानि ६ प०—इत्येतानि स्थूलं संक्षोद्य प्रस्थमितेन निम्बुकरसेन भावयेत्, भाजनं च वस्त्रादिना प्रावृत्य चत्वारि दिनानि समुपेक्षेत । पञ्चमे दिने च सर्वमेकत्र प्रविष्य स्थापयेत् । ततः प्रथमपात्रस्थानि स्वाद्वीफलानि लवित्रेण ( चाकू ) विदार्य, तदन्तःस्थमस्थि निष्कास्य, पूर्वपिष्टेन पूरणद्रव्येण तानि पूरयित्वा, उपर्युपरि सञ्चित्य, पात्रेऽवशिष्टं रसं तदुपरि निक्षिप्य, पक्षमेकं प्रतीक्षेत । तदनु शनैरेकैकं रसयेत् । अतीव प्रशस्तानीमानि येषामास्वादमात्रेणारुचिग्रहणीच्छर्दिहृल्लासाध्मानादिवेदना विनश्यन्ति, महती चोद्गारशुद्धिर्जायते इति सुधियो यथारुचि निर्माय समास्वादयन्तु ।

गोमूत्रे मथिते त्र्यहं लघुशिवा मासं तु निम्बूरसे
भाण्डे काचमये सजीरलवणक्षेपं शनैर्भावयेत् ।
पश्चात्ताः सुविशोष्य भक्षयतु ना नानारुचिध्वंसनी-
र्हृल्लासग्रहणीवमिप्रहरणीराध्माननिर्धूननीः ॥ १६ ॥

गोमूत्रे इति—लघुशिवा=" छोटी हरैं " " जवा हरैं " इत्याख्याताः । तास्त्र्यहं गोमूत्रे, त्रिदिनमेव मथिते=तक्रे, मासं यावन्निम्बुकरसे च काचभाण्डे निक्षिप्य भावयेत् । लवणजीरकयोः प्रक्षेपस्तु मात्रया सर्वत्रैव कर्तव्यः । पश्चादातपे विशोष्य ना=मनुष्यो भक्षयतु । हृल्लासः " जी मचलाना " इति, आध्मानश्च " अफारा " इति प्रसिद्धौ ।

रसैर्दाडिमीमातुलुङ्गार्द्रकोत्थैः
सनिम्बूकपोदीजलैः खण्डयुक्तैः ।
कृतः शार्करो जीरकैलोपणाढ्यो
वमिं वाऽरुचिं वाग्निमान्द्यं दुनोति ॥ १७ ॥

रसैरिति—दाडिमी प्रसिद्धा, मातुलुङ्गः=" बिजौरा निंबू " इति प्रसिद्धः, आर्द्रकम्, निम्बूकम्, पोदीना—इत्येतेषां पञ्चानां स्वरसानेकत्र संमेल्य, तच्चतुर्गुणां सितां द्रवी

शार्करः" विधेयः । जीरत्रुटिमरिचानां प्रक्षेपस्तत्र मात्रया=कार्यः । भुजङ्गप्रयातं वृत्तमग्रिमेष्वपि त्रिषु ।

**स्मृतं शृङ्गवेराम्बु यत्राद्वितीयं पुनः किं यदा सिन्धुजन्म द्वितीयम् ।**
**क्षिपेदत्र चेन्निम्बुनीरं तृतीयं तदा भेषजं तद्भवेदद्वितीयम् ॥ १८ ॥**

स्मृतमिति—यत्र=अरुचावद्वितीयम्=केवलमेव शृङ्गवेराम्बु=आर्द्रकजलं स्मृतमस्ति, तत्र चेद्द्वितीयम्=सहायभूतं सिन्धुजन्म=सैन्धवलवणं स्यात्तदा पुनः किं कथनीयम् ? चेदत्र=द्वयोः शृङ्गवेराम्बुलवणयोस्तृतीयं निम्बुनीरं क्षिपेत्तर्हि तद्भेषजमद्वितीयम्=अपूर्वं भवेदिति ।

**सितासङ्गि चेत्तिन्तिडीकं तदित्थं तदारोचकं किं न हन्यात्कपित्थम् ।**
**समत्स्यण्डिकं दाडिमीफाणितं स्यादरुच्यादिरोगप्रहाराय सद्यः॥१९॥**

सितेति—चेत् तत=प्रशस्तं सितासङ्गि तिन्तिडीकमित्थम्=अरुचिघ्नं भवेत्तदा समत्स्यण्डिकम्=सासितं कपित्थम्=" कैथ " इति प्रसिद्धं किमरोचकं न हन्यादपि तु हन्यादेव । द्वयमिदं चूर्णरूपेण द्विसन्ध्यमुपयोज्यम् । दाडिमीफाणितम्=" अनारका शर्बत " इति लोके । तदप्यरुच्यादिषु देयम् ।

**अहो निम्बुनीरार्द्रविश्वौषधस्य सितातन्तुलीसुप्रणीतोऽत्र कल्कः ।**
**त्रिजातौषधक्षेपहृद्योऽनवद्यो विनाश्यारुचिं वीतिहोत्रं विधत्ते ॥ २० ॥**

अहो इति—शुण्ठीं निम्बुरसेनाप्लाव्य स्थापयेत् । यदा तत्रातिशयस्थूलता स्यात्तदा शिलायां प्रपिष्य तच्चतुर्गुणसितया निर्मितायां तन्तुल्यां मिश्रयेत् । त्वगेलापत्रकरूपं त्रिजातमपि तत्र मात्रया क्षिपेत् । हृद्योऽनवद्यश्च सोऽयं कल्को भविष्यति । वीतिहोत्रम्=जाठराग्निं विधत्ते=समुद्दीपयति ।

इत्यरोचकाधिकारः ।

---

## अथ छर्द्यधिकारः ।

---

अथारोचकानन्तरं प्रायोऽरोचकप्रयोगाणामपि वमिनाशकत्वेन दृष्टत्वान्निदानक्रमप्राप्तत्वाच्च छर्दिचिकित्सितमुच्यते—

**पोदीनार्को देवपुष्पस्य वाऽर्को मिश्रेयार्कः श्वेतजीरोद्भवार्कः ।**
**एलाक्षोदश्वेतसो वा प्रमोदः सोडावारिश्छर्दिरोगापहारि ॥ १ ॥**

पोदीनेति—पोदीना, लवङ्गम्, शतपुष्पा, श्वेतजीरः—एतेषामर्काः पृथक् पृथङ्मिलिता वा छर्दिरोगघ्ना भवन्ति । अर्कास्तु अर्कनिष्कासनयन्त्रेण सम्पाद्याः । एलाक्षोद=

एलाबीजचूर्णम् । चेतसः प्रमोदः=हर्षः । छर्दियुक्तं नरं हर्षयेदिति तात्पर्यम् । सोडावारि " सोडावाटर " नाम्नाऽऽपणेषु लभ्यते । अग्निमान्द्याधिकारोक्तविधिना वा सम्पाद्यम् । अत्र, " शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः " इत्युक्तं शालिनीच्छन्दः ।

**पर्पटबिल्वगुडूचीक्वाथाः शिशिरीभूताः क्षौद्रसनाथाः ।**
**सपदि नयेयुः पीताः शमनं दुस्तरमपि किल पैत्तिकवमनम् ॥ २ ॥**

पर्पटेति—पर्पटादीनां क्वाथाः पृथगेव पीताः पैत्तिकवमनं शमनम्=शान्तिं नयेयुरिति योजना । " चौपाई " इति प्रसिद्धं छन्दः ।

**निम्बुकनीरे समरिचजीरे त्रुटिपटुविधुसुमसुरभिशरीरे ।**
**शार्करयुजि कुसुमार्कसनाथे कुरु रुचिमिह नर ! रुचिकरनाथे ॥ ३ ॥**

निम्बुकेति—त्रुटि=एला, पटुः=सैन्धवम्, विधुः=कर्पूरः, सुमम्=लवङ्गम्—एतैः सुरभि शरीरं यस्य तस्मिन्निति निम्बुकनीरविशेषणम् । अन्यान्यपि सप्तम्यन्तानि तद्विशेषणानि । रुचिकरनाथे इति—रुचिकरभेषजेषु सर्वोत्तमे । अत्रायं विधिरवधार्यः—मरिचादिभेषजानि प्रपिष्य, तरुणीकेतकान्यतरकुसुमार्कें संमिश्र्य पटेन पावयेत् । तदनु निम्बुरसे दाडिमशार्करं संमेल्य तत्रैवेदं निक्षिप्य पिबेदिति । अत्रापि " चौपाई " नामकं छन्दः ।

**श्वेता मुष्टिमिता तथाऽऽर्द्रकपलं शाणश्च सिन्धूत्थितो**
**द्राक्षा द्वादश चेद्दश द्रविडजास्तीक्ष्णानि वा विंशतिः ।**
**संक्षुण्णं भिषिजार्कलोलितमिदं पूतं सुखोष्णं पुनः**
**पीतं जीरकवासितं परिहरेदुत्क्लेशतृष्णारुचीः ॥ ४ ॥**

श्वेतेति—श्वेता=सितोपला । मुष्टिमिता=पलतुलिता । सिन्धूत्थितः=सैन्धवलवणम् । शाणः=चत्वारो माषकाः । द्वादश दश चेति फलानां संख्या । सितादिद्रव्याणि पिष्ट्वा, शतपुष्पार्के तदभावे गुलाबार्कें केतकार्के वा मिश्रयित्वा, पटेन पावयित्वा, किञ्चिदुष्णीकृत्य, भृष्टं श्वेतजीरं मनाक्प्रक्षिप्य पिबेत् । उत्क्लेशः=ह्लासः ।

**स्रोतोऽञ्जनं जम्भजलैर्दिनैकं विमर्द्य बद्धा मरिचप्रकाशाः ।**
**निघ्नन्ति वट्यो वमनातिसारौ भक्तिर्मुरारेरिव जन्ममृत्यू ॥ ५ ॥**

स्रोतोञ्जनमिति—स्रोतोञ्जनम्=" स्याह सुरमा " इति प्रसिद्धं कृष्णाञ्जनम् । जम्भजलैः=जम्बीररस्वरसैः । मरिचप्रकाशाः=मरिचतुल्याः । अयं योगः-प्रायोऽतिसारे प्रयुज्यते । बालातिसारे कृष्णच्छागीदुग्धेन वटिका देया । पथ्यमत्र दधिसहितं भक्तम् । भक्तिरित्युपमार्थः प्रसिद्धः ।

त्रिकटुजीरकधान्यहरीतकीपरिवृतं रसभस्म समाक्षिकम् ।
वमनमुग्रतरं प्रशमं नयेदितिवचो रसशास्त्रसुसम्मतम् ॥ ६ ॥

त्रिकट्विति—त्रिकट्वादीनि समानमानानि ग्राह्याणि । रसभस्म=रससिन्दूरः । मात्रा माषैकमिता । द्रुतविलम्बितं छन्दः ।

एका सूतविभूतिः सनिम्बुसत्त्वा सकृत्प्रयुक्ताऽपि ।
वमिशतमप्युद्धर्तुं प्रभवति नूनं किमत्र संशेषे ॥ ७ ॥

एकेति—रससिन्दूरनिम्बुसत्त्वयोश्चूर्णं समानयोर्विधेयम् । तच्च त्रिगुञ्जं मध्वादिना सेव्यम् । संशेषे=सन्धेक्षि, सन्देहं करोषीति यावत् । अत्र गीतिश्छन्दः ।

एलाकोलघनानां लाजलवङ्गप्रियङ्गुचपलानाम् ।
चन्दनकनकयुतानां मृदु मृदितानां परं चूर्णम् ॥ ८ ॥
साकं क्षौद्रसिताभ्यां धरणमिताभ्यां मुहुर्मुहुर्लिहताम् ।
वान्तेः कुरुते शमनं दोषचयानां यथा नमनम् ॥ ९ ॥

एलेति—एला=त्रुटिः, कोलम्=बदरीफलं, तन्मध्यस्थो मज्जा, घनः=मुस्तकः, लाजाः=" खील " इति प्रसिद्धाः, लवङ्गम्, प्रियङ्गुः=" फूल फिरंग " इति लोके, चपला=पिप्पली, चन्दनम्=श्वेतचन्दनम्, कनकम्=नागकेसरः—एतेषां मृदु मृदितानाम्=पिष्टानां चूर्णं धरणमिताभ्याम्=पृथङ्माषचतुष्टयतुलिताभ्यां क्षौद्रसिताभ्यां मुहुर्मुहुर्लिहतां जनानां वान्तेः शमनं तथा कुरुते यथा नमनम्=नमस्कारो दोषचयानाम्=निखिलापराधानां शमनं कुरुते । 'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति भावः । श्लोकद्वयेऽप्यार्याच्छन्दः । उपमानुप्रासावलङ्कारौ ।

दग्धं पिप्पलवल्कलस्य शकलं गोण्याश्च चुल्लीमृदः
खण्डं वा रजतस्य शुद्धसलिले निर्वाप्य तत्पानतः ।
वान्तिःशान्तिमुपैति मित्र ! लिहतां कोलास्थि वा केवलं
भृष्टं वापि करञ्जबीजशकलं मक्षीमलं माक्षिकैः ॥ १० ॥

दग्धमिति—अत्र सप्त प्रयोगाः प्रदर्शिताः । १-शुष्कं पिप्पलवल्कलखण्डं दग्ध्वा, जले निर्वाप्य, पटपूतं तज्जलं पेयम् । २-" टाट " " बोरी " इत्युक्तायाः पुराणगोण्याः खण्डं दग्ध्वा, जले निर्वाप्य, जलं पेयम् । ३-चुल्हीमध्ये लिप्तायाः प्रत्यहं पाककारणाग्नि-

मानमुपगताया मृत्तिकायाः खण्डं सन्ताप्य निर्वाप्य च तज्जलं पेयम्। ४—रजतस्य खण्डं सन्ताप्य निर्वाप्य च तज्जलं पेयम्। ५—बदरीफलास्थिमज्जानं प्रपिष्य मधुना लिह्यात्। ६—करञ्जबीजानि किञ्चिद्भर्जयित्वा मधुनावलेह्यः। ७—मक्षीमलम्="मक्खीकी बींठ" इत्युक्तं मधुना लिह्यात्।

रसय कुसुमसारैर्दग्धमायूरपक्षं
प्रियवर! गुरुहिक्काच्छर्दिविच्छेददक्षम्।
अथ च रसय दग्ध्वा मक्किकान्नस्य कोषं
यदि शमयितुमिच्छा दुर्धरं वान्तिदोषम्॥ ११॥

रसयेति—मयूरपक्षाणां चन्द्रिकाभागं दग्ध्वा भस्म विधेयम्। श्वास-हिक्का-च्छर्दि रोगाणां विच्छेदे दक्षं तद्भस्म हे प्रियवर! कुसुमसारैः=मधुभी रसय=लीढि। अथवा-"मक्का" इति ख्यातस्यान्नस्य "वाल" "सिट्टा" "भुटो" इत्यादिनामभिः प्रसिद्धं कोषं निरन्नं दग्ध्वा द्विमाषं तद्भस्म शीतलजलैर्देयम्। इदं भस्म कसीसाद्यौषधैर्वमनातियोगे जातेऽप्यवचार्यते। पद्येऽत्र मालिनीच्छन्दोऽग्रिमेऽपि च।

विधुसुरभि सदम्भो वान्तिदम्भो! विशिष्टं
समहिमरुचिराजीलेपनं वा हृदीष्टम्।
लवणजरणचूर्णैः सम्मता दन्तशुद्धिः
शुचिरुचिरपदार्थेष्वाशु योज्येत बुद्धिः॥ १२॥

विध्विति—चत्वारोऽत्र प्रयोगाः। भोः! वैद्य! विधुसुरभि=कर्पूरखण्डेन वासितं पटपूतं च सदम्भः=शुद्धं जलं विशिष्टं वान्तिदम्, वान्तिं द्यति=खण्डयतीति तादृशम्। यद्वा—हृदि=हृदये आमाशये च हिमरुचिः=कर्पूरः, राजी="राई" इति प्रसिद्धा तयोः समानयोर्लेपनमिष्टम्। लेपनमिदं कोष्णयोर्विधेयं घटिकार्धादूर्ध्वं च न धार्यमन्यथा स्फोटोत्पत्तिः सम्भवेत्। जीरकसैन्धवचूर्णेन दन्तानां मार्जनं द्विसन्ध्यं कार्यम्। शुचिषु रुचिरेषु च पदार्थेषु बुद्धिराशु योज्येतेति सामान्यं कर्तव्यम्।

इति छर्द्यधिकारः।

---

## अथ तृष्णाधिकारः ।

अथ तृष्णायाश्छर्द्युपद्रवत्वात्क्रमप्राप्तत्वाच्च छर्दिचिकित्सानन्तरं तृष्णाचिकित्सितमिदानीमुच्यते—

मूलस्य चोषाच्छतपुष्पिकायाः पुष्पार्द्रवट्या जहराश्मनो वा ।
आलूबखाराफलचूषणाद्वा नश्येत्तृषा नात्र मृषा ब्रवीमि ॥ १ ॥

मूलस्येति—शतपुष्पिकाया मूलस्य चूषणं जले समाप्लाव्य विधेयम् । पुष्पाणाम्=लवङ्गानामार्द्रवट्या=कल्कस्येति यावत् । जहराश्मा="जहरमोहरा खताई" इति प्रसिद्धस्तस्य । आलूबखाराफलमम्लरसमनेनैव नाम्ना प्रसिद्धम् । मृषा=असत्यम् ।

चन्दनोशीरपानीयपानात्तृष्णाक्षयो यथा ।
तथा समाक्षिकमृष्टभद्रैलाबीजभक्षणात् ॥ २ ॥

चन्दनेति—चन्दनमुशीरं वा जले समाप्लाव्य कञ्चित्कालं स्थापयेत्ततो वस्त्रेण गालयित्वा सितां प्रक्षिप्य पिबेत् । भद्रैलाबीजानि तवकादिषु मनाग्भर्जयित्वा मधुना लेह्यानि ।

कनकरजतखण्डैरग्नितप्तैः कृतं यत्
सलिलमिह सुखोष्णं शीतलं वापि शस्तम् ।
हरति निखिलतृष्णां शर्कराक्षौद्रयुक्तं
सकलविषयतृष्णां कृष्णपन्था यथैव ॥ ३ ॥

कनकेति—कनकम्=सुवर्णम् । कृष्णपन्थाः=योगमार्गः ।

कृत्स्नासु तृष्णासु च रक्तमृत्स्नाकपाललोष्टादिभिरग्नितप्तैः ।
निर्वापितं वारि हितं गुडाढ्यं दधि प्रयुञ्ज्याद्वमनोत्थितासु ॥४॥

कृत्स्नास्विति—रक्तमृत्स्ना=गैरिकम्, कपालम्=घटादिखर्परखण्डम्, लोष्टम्='ढेला' इति प्रसिद्धमिष्टिकादिखण्डम्—तदादीनि वह्नौ संताप्य संताप्य जले निर्वापणीयानि, तद्वारि कृत्स्नासु=निखिलासु तृष्णासु हितं भवति । वमनोत्थितासु तृष्णासु तु गुडमिश्रितं दधि प्रयुञ्ज्यात् ।

पिष्टैः सवालकोशीरैश्चन्दनद्वयपद्मकैः ।
मूर्ध्नि लेपः कृतः पुम्भिस्तृष्णां क्लिश्नात्यसंशयम् ॥ ५ ॥

पिष्टैरिति—वालकम्=" नेत्रवाला " इति ख्यातम् । उशीरम्=" खस " इति ख्यातम् । चन्दनद्वयं श्वेतरक्तभेदेन । पद्मकम्=पद्मकाष्ठम् । क्लिश्नाति=नाशयति ।

जलपूर्णोदरं जन्तुं वामयेन्मधुकाम्बुना ।
पाययेद्दाडिमाम्रातमातुलुङ्गोत्थितं रसम् ॥ ६ ॥

जलेति— तृष्णातिवृद्धावुदरे च भृशं जलपानात्पूर्णे सति मधुकाम्बुना=यष्टीक्वाथेन वामयेत्=वमनं कारयेत् । पिप्पलीक्वाथेनापि वमनं कार्यते । किञ्च—दाडिमम्, आम्रातकम्= "अंबाड़ा" इति प्रसिद्धम्, मातुलुङ्गः=बीजपूरकः—इत्येतेषां रसान्पृथङ्मिश्रितान्वा पाययेत् ।

पिबतु तृषाकृशधातुर्निम्बूजम्बीरदाडिमस्वरसम् ।
लेढु च सरोजबीजं जक्षितु लाजैः कृतान्भक्ष्यान् ॥ ७ ॥

पिबत्विति—तृषया कृशाः=मन्दीभूता धातवः=शारीरिकतत्त्वानि यस्य तादृशः, तृष्णातुर इत्यर्थः । सरोजबीजम्="कमलगट्टा" इति प्रसिद्धं तस्य मज्जा ग्राह्यो लेहनं च मध्वादिना । लाजैः कृतान्भक्ष्यान्=पेयादिकान् । पद्येऽस्मिन्नार्यावृत्तम् ।

सुशीतैर्मधुरैः साधु शृतं क्षीरं सतिक्तकम् ।
पानाभ्यञ्जनसेकेषु स्मृतं समधुशर्करम् ॥ ८ ॥

सुशीतैरिति—सुशीता मधुराश्च पदार्थाः द्राक्षोत्पलमधुयष्टिकादयः । तिक्ताश्च किरात-कटुक्यादयः । एतैः पक्वं दुग्धं मधुशर्करायुक्तं पानादिषूपयोज्यम् । अभ्यञ्जनम्=शरीरे विलेपनम् ।

तज्जमाज्यं नवाज्यं वा क्षीरोत्थं वाऽत्र शस्यते ।
एवं धारोष्णदुग्धं वा ससितं छागलं घृतम् ॥ ९ ॥

तज्जमिति—तज्जम्=मधुरशृतक्षीरोत्थमाज्यम्=घृतम् । नवाज्यम्=सद्योगोदोहभवं नवनीतम् । क्षीरोत्थम्=दुग्धनिष्कासितघृतम् । धारोष्णदुग्धम्=सद्यो दुग्धं दुग्धम् । छागलं घृतम्=अजाघृतम् ।

क्षीरेक्षुरसमाध्वीकद्राक्षायष्टीमधूत्पलैः ।
पीतैस्तृष्णा त्वरं कृत्वा वमतः शाम्यति ध्रुवम् ॥ १० ॥

क्षीरेति—माध्वीकम्=मधु । यष्टीमध्वित्येकं पदम् । उत्पलम्=कमलम् । पीतैरिति—पानमेषां क्वाथादिरूपेण विधेयम् । वमतः=वमनं कुर्वतः ।

लाजाम्बुजामलककुष्ठवटप्ररोहै-
र्मध्वन्वितैः सुविहिता गुटिका मुखस्था ।

**सद्यस्तृषं प्रशमयेद्धि भृशं चिरोत्था-**
**मन्तस्तृषामिव यतेः परमार्थचिन्ता ॥ ११ ॥**

लाजेति—अम्बुजम्=" कमलगट्टा " इत्याख्यातं कमलबीजमत्रादेयम् । वटप्ररोहाः=" बड़की कोंपल " इत्युक्ता वटाङ्कुराः । लाजादीन्प्रपिष्य मधुना गुटिका विधेया । अन्तस्तृषामिति—यतेः=योगिनः परमात्मनिष्ठस्य परमार्थचिन्ता=तत्त्वज्ञानं स्वरूपपरिचयो वाऽन्तस्तृषाम्=विषयवासनामिवेत्युपमा । वसन्ततिलकावृत्तम् ।

**एलोत्पलाब्दचपलामलकोलवाल-**
**श्रीखण्डलाजमधुयष्टिलवङ्गकुष्ठैः ।**
**क्षौद्रान्वितैर्विरचिता गुटिकाऽऽस्यलग्ना**
**तृष्णां निहन्ति विपुलामिव कृष्णभक्तिः ॥ १२ ॥**

एलेति—उत्पलम्=कमलम् । अब्दः=मुस्तकः । आमलम्=धात्रीफलम् । कोलम्=बदरीफलमज्जा । वालम्=ह्रीवेरम् । श्रीखण्डम्=चन्दनम् । एलादिभिर्निर्मिता वटिका आस्यलग्ना=मुखस्था सती कृष्णभक्तिस्तृष्णाम्=सांसारिकविषयगृध्नुतामिव विपुलां तृष्णां निहन्ति । अत्रापि वृत्तालङ्कारादिकं पूर्ववत् ।

**सूक्ष्मैला तीक्ष्णपत्राख्यो वांशी जहरमोहरा ।**
**वटी चतुर्भिर्घटिता तृष्णाघ्नी मुखमध्यगा ॥ १३ ॥**

सूक्ष्मेति—तीक्ष्णपत्राख्यः—" पोदीना " इति लोके । वांशी=वंशरोचना । जहरमोहरा=" जहरमोहरा खताई " इति लोके । वटी पानीयादिना घटनीया ।

**"रसरूप्यवटी" नूनं पिपासानाशकारणम् ।**
**रामनाम यथा नृणां दुर्बाधाध्वंसकारणम् ॥ १४ ॥**

रसेति—रसः=रससिन्दूररूपं पारदभस्म, रूप्यम्=रजतभस्म—अनयोः पानीयादिना कृता वटी " रसरूप्यवटी " इति प्रसिध्यति । रामनामेति—भगवतः पावननामस्मरणेन निखिलदुर्बाधादिध्वंसे कः सन्देहोऽपि ।

**क्षयोत्थितायां तु पयस्तृषायां मांसोदकं क्षीरजलं तथाऽलम् ।**
**रसादिगुट्यो रसशास्त्रसिद्धाः सर्वत्र ताः पथ्यतमा भवन्ति ॥१५॥**

क्षयेति—रसक्षयोत्पन्नायां तृषायां रात्रौ निक्षिप्तयष्टीमधुचूर्णं मृत्पात्रस्थं प्रातः पटपूतं पयः=जलमलं भवति । निक्षिप्तैलाचूर्णं निक्षिप्तशतावरीचूर्णं वापि तथाविधमेव । मांसाशिने तु

मांसोदकम्=छागमांसरसं साज्यं शीतं समधुशर्करं दद्यात् । सर्वत्र क्षीरजलम्=क्षीरे नीरं समानं वा किञ्चिदधिकं वा दत्त्वा बहुकृत्वः कृतनिक्षेपप्रक्षेपं " लस्सी " इति प्रसिद्धं दुग्धजलं वा देयम् । किञ्च सर्वत्र तृष्णासु रसशास्त्रसिद्धा रसादिगुट्यः पथ्यतमाः । " रसादिगुटी " चेयम्—रजतं गालयित्वा तत्र समानं पारदं दत्त्वा गुटिका बन्धनीया । सा चेयं मुखे धार्यैव, भक्षणीयेति । यद्वा-शुद्धपारदः ( यत्र भृशं विमर्दितमपि वस्त्रं कालिमयुक्तं न स्यात् ) शुद्धरजतस्य चूर्णं वा " चान्दी के वर्क " इति ख्यातानि पत्राणि वेति द्वयं समानं विमर्दयेत् । एकत्वमापन्ने तत्र निम्बुरसं दत्त्वा दिनत्रयं विमर्दयेत् । कलुषं तद्रसं निःसारयेत् । तदनु गुटिकां बद्ध्वा, चतुर्गुणिते वस्त्रे बद्ध्वा द्र्यहं निम्बुरसे द्र्यहमेव च काञ्जिके स्वेदयेत् । एवं करणेन गुटिका कठिनत्वमाप्स्यति । गुटिकाबन्धनसमये तत्र छिद्रं कृत्वा सूत्रं प्रोतं कुर्यायेन छिद्रं सदा तिष्ठेत् । चेदस्यां गुटिकायामग्निस्थिरत्वमिष्येत तर्हि अरिष्टफलस्यास्थि " गुठली " इति ख्यातं निःसार्य, तद्वल्कले तां गुटिकां निधाय, तत्र " तिपतिया " इति ख्याताया रसमपि भृत्वा तस्यास्तथाऽऽरण्यगोजिह्वायाः ( वनगोभी ) चतुर्गुणे कल्के गुटिकासहितं तद्वल्कलं बद्ध्वा कल्कक्षयावधि वह्निं ज्वालयेत् । वह्निस्थिरत्वलाभपर्यन्तमेवं मुहुर्मुहुः कुर्यात् । सेयं " रसादिगुटी " सिद्ध्यति । ज्वरादिरोगोष्मणा समुत्पन्ना भेषजशतैरप्यशाम्यन्ती भयङ्करतृष्णाऽस्या गुटिकाया मुखे धारणेन तत्कालं नश्यति । एनां दुग्धे निष्क्वाथ्य तत्पानेन शुक्रदोषा विलीयन्ते धातवश्च पुष्यन्ति । दाहाधिकारे वक्ष्यमाणा " रसादिगुटी " अपि तादृग्गुणा ।

**भोक्तुं जनैरत्र फलादि लेयं लवङ्गधान्यान्यतराम्बु पेयम् ।**
**शाल्यन्नमण्डः सतुषारखण्डस्तथाम्रजम्बूशृतमुक्तमम्बु ॥ १६ ॥**

भोक्तुमिति—अत्र=तृषारोगे जनैर्भोक्तुं फलादि=खर्जूरदाडिमधात्रीबीजपूरजम्बीरकरमर्दादिफलानि, आदिशब्दात् " मुरब्बा "—" शर्बत " इत्यादिकं च लेयम्=आदेयम् । रात्रौ मृत्पात्रे लवङ्गं धान्यकं वा जलेनाप्लाव्य प्रातः पटपूतं तज्जलं पेयम् । शाल्यन्नमण्डः=" भात का मांड " इति प्रसिद्धस्तत्र " वर्फ " इति ख्यातस्य कृत्रिमहिमस्य खण्डान्निक्षिप्य पानं विधेयम् । आम्रस्य जम्ब्वाश्च पत्राणि निष्क्वाथ्य मधुशर्करायुतं तज्जलं सेव्यमिति । एतयोरान्तरवल्कलस्य क्वाथोऽपि सेव्यते ।

इति तृष्णाधिकारः



# अथ मूर्च्छाधिकारः ।

अथ तृष्णायां मूर्च्छा भवतीति क्रमप्राप्तं मूर्च्छाचिकित्सितं विवक्षुर्वैद्यधौरेयधुरंधरः कविवर एकेनैव "मालभारिणी"नामकेन छन्दसाऽखिलमधिकारं वर्णयन्नादौ पञ्चभिः कुलकं दर्शयति—

तरुणीकुसुमार्कसेचनानि प्रतिलिप्तानि घनानि चन्दनानि ।
सुरभीणि सुमानि शिङ्घितानि व्यथनाकर्षणघर्षचालनानि ॥ १ ॥
नखरोमकचादिलुञ्चनानि ह्यथवा गुप्तफलावघर्षणानि ।
दशनैर्दशनानि पीडनानि मुखनासाविवरावरोधनानि ॥ २ ॥
प्रखराञ्जनधूमयोजनानि नखराभ्यन्तरतोत्रपातनानि ।
अनुनीतिसुगीतिवादनानि बहुविस्मापनवृत्तबोधनानि ॥ ३ ॥
नवसागरपुष्पजाञ्जनानि प्रथितश्वासकुठारनावनानि ।
मरिचोत्थरजांसि निर्मितानि नरनासासु नरैर्नियोजितानि ॥ ४॥
मसृणानि जलैर्लवङ्गकानि प्रतिदिग्धाखिलललाटशङ्खकानि ।
विषजे विषहारिभेषजानि ह्यखिलानीति विमुग्धबोधनानि ॥ ५ ॥

तरुणीति—इमान्यखिलानि कर्माणि विमुग्धस्य=मूर्च्छामाप्तस्य जनस्य बोधनानि भवन्ति—१–मूर्च्छितस्य मुखे शिरसि च तरुणीकुसुमार्केण " गुलाबजल " इत्याख्यातेन केतकार्केण वा सेचनं विधेयम् । २–ललाटे वक्षसि च चन्दनेन घनलेपः कार्यः । ३–सुरभिपुष्पाणां शिङ्घनं " सूंघना " कर्त्तव्यम् । ४–केनापि प्रकारेण शारीरिकीं हानिमकृत्वा रोगिणो व्यथादानमाकर्षणं घर्षणं चालनं वा विधेयम् । ५–नखानां रोम्णां केशानां वा लुञ्चनं कार्यम् । ६–गुप्तफलयोः=अण्डकोषयोरवघर्षणं कर्तव्यम् । ७–दन्तैर्दशनं कर्तव्यम् । ८–त्वग्ग्रहणचपेटादिना पीडनं कार्यम् । ९–मुखनासिकयोर्हस्तेन निरोधो विधेयः । १०–नेत्रयोः प्रखरमञ्जनं दातव्यम् । ११–तमाखुधूमं पीत्वा मूर्च्छितस्य नासिकायां तस्योद्वमनं कार्यम् । १२–नखाभ्यन्तरे तोत्रस्य=सूच्यादेः पातनं कार्यम् । १३–रोगिणोऽनुनयः कार्यः । १४–सुन्दरगानानि वाद्यवादनानि वा विधेयानि । १५–मूर्च्छेदवस्थायामाश्चर्यजनकवृत्तान्तानां बोधनं कर्तव्यम् । १६–डमरुयन्त्रेणोत्थापितस्य नवसादरस्याञ्जनं कार्यम् । १७–" श्वासकुठार "—नामा रसः पूर्वं श्वासाधिकारे उक्तस्तेन नस्यं देयम् ।

१८-मरिचस्य श्लक्ष्णं चूर्णं निर्माय तेन नस्यं देयम् । १९-लवङ्गं जलेन पिष्ट्वा नेत्रोपरि ललाटे शङ्खप्रदेशे च लेपः कार्यः । २०-मोहः=मूर्च्छा चेद्विषेण जातस्तर्हि तत्र विषनाशनी सर्वा चिकित्सा विधेयेति । प्रयोगाश्चेमे पृथक्पृथक् यथासंभवं मिश्रिता वा विधातव्या अवस्थानुसारम् ।

**चरणं व्यजनप्रभञ्जनानां धरणं चोरसि रत्नतल्लजानाम् ।**
**करणं शिशिरोपचारराशेः शरणं सिद्ध्यति चेतनाविनाशे ॥ ६ ॥**

चरणमिति—व्यजनम्=" बीजना " " पंखा " इत्यादि प्रसिद्धं तत्प्रभञ्जनानाम्=वायूनां चरणम्=सेवनम् । उरसि रत्नतल्लजानाम्=शुभलक्षणयुक्तरत्नानां धरणम्=स्थापनम् । शिशिरोपचारराशेः=कृत्रिमहिमोपलस्थापनादिनानोपायानां करणं चेतनाविनाशे=मूर्च्छायां शरणम्=रक्षकं सिद्ध्यतीति ।

**रविदुग्धविभाविताक्षतानां रजसा नावनमर्कशोषितानाम् ।**
**इदमप्युपयोगि मूर्च्छितानां विदितं चापि परं चिकित्सकानाम् ॥७॥**

रवीति—अक्षताः=तन्दुलाः सप्ताहमर्कदुग्धेन विभावनीयाः । ततः सूर्यतापे संशोष्य, चूर्णं निर्माय तेन नस्यं देयम् ।

**विपिनोपलभस्मतुत्थनस्यं ननु संज्ञाकरणं नृणामवश्यम् ।**
**रुधिरैरपि मत्कुणप्रसूतैरिह नस्यं प्रथते ह्यपस्मृतौ वा ॥ ८ ॥**

विपिनेति—आरण्योपलभस्मनि समानं तुत्थं प्रपिष्य नस्यं देयम् । मत्कुणः=" खटमल " इति प्रसिद्धः खट्वादिषु शयानानां रक्तपायी ग्रीष्मोद्भवः प्रसिद्धो जन्तुविशेषस्तमापोथ्य तद्रुधिरेण मूर्च्छायामपस्मारे च नस्यं देयम् ।

**नवसारसुधारजः प्रमोहे त्वरितं घ्राणगतं प्रबोधदायि ।**
**अभिघातनिपातमूर्च्छितानां मनुजानामिह बोधदा "ममायी" ॥ ९ ॥**

नवसारेति—नवसारः=नवसादरः,सुधा="कलीका चूना" इति प्रसिद्धा—एतयोः समानयोर्मसृणयोश्चूर्णं काचकूपीमध्ये निधाय कूप्या मुखमावरकेणावरणीयम् । कार्यकाले कूपीमुखमुद्घाट्य मूर्च्छितस्य नासिकायां संयोज्य नस्यं देयम् । कूपीमुखं चिरमसुद्रितं न स्यादन्यथा तत्तीक्ष्णता नश्येदिति ज्ञेयम् । इदमेवांग्लौषधालयेषु सुपरिष्कृतम् "एमोनिया" (Ammonia) नाम्ना लभ्यते । केचिदिह कर्पूरमपि क्षिपन्ति । शिरःपीडायां प्रतिश्याये चापीदमवचार्यते । अभिघातः="सख्त चोट" इति लोके, निपातः=ऊर्ध्वः

स्थानात्पतनं ताभ्यां मूर्च्छितानां जनानां "ममायी" बोधदा भवति। "ममायी" अनेनैव नाम्ना प्रसिद्धा काचन पर्पटी यन्निर्माणमिदम्—अङ्गाराग्नौ मृत्पात्रमेकं निधाय, तत्रैकपलतुलितं राल्माधाय यावता कृष्णवर्णत्वं भवेत्तावत्कालं तमावर्त्य, द्विमाषं कुंकुमं रक्तिप्रमाणं मल्लं च संचूर्णितं संमेल्य चीनमृत्पात्रे ढालयेत्। रक्तिमारभ्य वल्लपर्यन्तं यथायथं मात्रां प्रकल्प्य घृतदुग्धानुपानतः सेयं संसेव्येति।

**नवलुञ्चितनारिकेलनीरैः समखण्डाः खलु सक्तवो निपीताः।**
**कफपित्ततृषाभ्रमप्रमोहान्विशसन्त्याशु नरेषु बद्धगेहान् ॥ १० ॥**

नवेति—नवलुञ्चितः=तत्कालत्रोटितो यो नारिकेलस्तन्नीरैः। समखण्डाः=तुल्यमिश्रितसिताः। सक्तवः=भृष्टानां यवानां चणकानां वा चूर्णं "सत्तू" इति प्रसिद्धम्। भ्रमः="चक्कर" इति प्रसिद्धः। प्रमोहः=मूर्च्छा। "डाभ" इति प्रसिद्धानां नवलुञ्चितनारिकेलानां जलं वङ्गादिदेशेषु बाहुल्येन पेपीयन्ते जनाः।

**सघृतं हि शृतं दुरालभायाः स्यति वेगं नितरां भ्रमव्यथायाः।**
**मरिचं च तथैव कोलकल्पं घृतपक्वं विदितं भ्रमामयघ्नम् ॥ ११ ॥**

सघृतमिति—दुरालभा="जवासा" इति प्रसिद्धो धन्वयासकः। शृतम्=क्वाथः। कोलकल्पम्=द्विशाणम्।

**शिवयोः स्वरसैर्घृतं सुसिद्धं मदमूर्च्छाभ्रमहारि सुप्रसिद्धम्।**
**मधुरस्वरसैः पयोऽपि गव्यं ह्यपि"कल्याणक"माज्यमत्र भव्यम्॥१२॥**

शिवयोरिति—शिवा च शिवश्च शिवौ तयोः=हरीतक्यामलकयोः स्वरसैः, हरीतकीक्वाथेनामलकानां स्वरसेनेति यावत्। मधुरस्वरसैः=शतावरीबलामूलद्राक्षादीनां स्वरसैः। कल्याणकमाज्यम्="कल्याणकघृतम्" इति नाम्ना प्रसिद्धं यन्निर्माणप्रक्रियेयम्—इन्द्रवारुणी १ तो०, हरीतकी १ तो०, बिभीतः ० तो०, आमलकम् १ तो०, रेणुका तदभावे निर्गुण्डीबीजानि १ तो०, देवदारु १ तो०, एलवालुकम् १ तो०, शालपर्णी १ तो०, तगरम् १ तो०, हरिद्रा १ तो०, दारुहरिद्रा १ तो०, श्वेतसारिवा १ तो०, कृष्णसारिवा १ तो०, प्रियङ्गुः १ तो०, नीलोत्पलम् १ तो०, एला १ तो०, मञ्जिष्ठा १ तो०, दन्ती १ तो०, दाडिमबीजानि १ तो०, नागकेशरः १ तो०, तालीशम् १ तो०, कण्टकारी १ तो०, मालतीपुष्पाणि १ तो०, विडङ्गम् १ तो०, पृश्निपर्णी १ तो०, कुष्ठम् १ तो०, चन्दनम् १ तो०, पद्मकम् १ तो०—एतेषामष्टाविंशतिद्रव्याणां कल्कः, १ प्रस्थघृतम्, चतुर्गुणं जलञ्चेति सर्वमेकत्र मिश्रयित्वा विपचेदिति।

**चपलामधुसङ्गिसूतभूतिर्मदमूर्च्छाहरणे कृतान्तदूती ।**
**अथवा सति मालतीवसन्ते सुखलभ्येऽपि पुनः कथं व्यथन्ते ॥१३॥**

चपलेति—चपला=पिप्पली माषकमिता, सूतभूतिः=रससिन्दूरः, रक्तिमिता-द्वयोर्मधुनावलेहः कार्यः । "वसन्तमालती-"रसस्य विधानमुक्तं ज्वराधिकारे । स यदि सुखेन लभ्येत तदा व्यथा न युक्तेति ।

**सितखाखसबीजधान्यजन्यं भ्रमरोगे ससितं रजोऽपि धन्यम् ।**
**तरुणीसुमतैलमर्दनं वा मतमित्रीफलभक्षणं क्वचिद्वा ॥ १४ ॥**

सितेति—सितानि=श्वेतानि । खाखसबीजानि="पोस्तके बीज" इति प्रसिद्धानि । धान्यम्= "धनिया" इति लोके । तरुणीसुमतैलम्= "गुलाबरोगन" इति प्रसिद्धमापणेषु प्राप्यते । "इत्रीफलं" दृष्टफलं यावनमौषधं यन्निर्माणविधिरयम्—हरीतकी २ तो०, बिभीतकः २ तो०, आमलकम् २ तो०, काम्बोजहरीतकी ( काबुली हर्ड ) २ तो०, "जंगी हर्ड" इति प्रसिद्धा हरीतकी २ तो०, धान्यकम् २ तो०, उस्ते खद्दूसः २ तो०, बादरंजबोया २ तो०, उन्नाभवदरम् २ तो०, खतमी २ तो०, कमलपुष्पम् २ तो०, गाजवां २ तो०, गुलगाजवां २ तो०, त्रिवृता २ तो०, शतपुष्पा २ तो०, श्वेतजीरः २ तो०, पोदीनः २ तो०, यवानी २ तो०, सूक्ष्मैला २ तो०, मंद्रैला २ तो०, खाकसीरः २ तो०, गुलाबपुष्पम् २ तो०, काकमाची २ तो०, शुण्ठी २ तो०, पिप्पली २ तो०, हंसराजः १ तो०, जूफा १ तो०, खुब्बाजी १ तो०, श्लेष्मातकस्य " लिहसोडा" इत्याख्यातस्य १० फलानि, मृद्वीकाद्राक्षायाः ३० फलानि, अंजीरस्य ८ फलानि, अगुरु धूम्रवर्णम् "अगरभूरी" इति लोके १ तो०, कासनी १ तो०—इमानि त्रयस्त्रिंशदौषधानि स्थूलस्थूलं संक्षोद्य, रात्रौ त्रिप्रस्थमितेन ( ३ सेर ) जलेनाप्लावयेत् । प्रातस्तत्सर्वमुत्क्वाथ्य, चतुर्थांशमवशेष्य पटेन पावयेत् । ततस्तत्र मधु त्रिकुडवमितं ( ३ पाव ), सिता प्रस्थार्धमिता, शीरेखिस्तः ४ तो०, तुरंजबीनः ४ तो०-एतानि निक्षिप्य सार्द्धैकतारां तन्तुलीं ( चासनी ) कुर्यात् । तस्यां सिद्धायां पात्रं चुल्लीतोऽवतार्य तत्र-वातादफलमज्जा ३ तो०, "अखरोट" इति प्रसिद्धमक्षोटफलम् ३ तो०, निकोचफलम् "पिस्ता" इति लोके ३ तो०, फिन्दकमज्जा "मगज फिन्दक" इति ख्यातः ३ तो०, अरिष्टकफलमज्जा "मगज रीठा" इति लोके ३ तो०, चारः "चिरौंजी" इति ख्यातः ३ तो०, एलाम्नं "चिलगोजा" "लौंजा" इति लोके ३ तो०, कालिङ्गबीजमज्जा "मगजतर्बूज" इति ख्यातः ३ तो०, कूष्माण्डबीजमज्जा "मगजपेठा" इति लोके ३ तो०, खाखसबीजानि ३ तो०, कूष्माण्डीबीजमज्जा "मगजकद्दू" इति लोके ३ तो०, त्रपुसबीजमज्जा 'मगजखीरा" इति लोके

३ तो०—सूक्ष्मचूर्णितान्येतानि निक्षिप्य दण्डादिना मर्दयेत्। ततस्तत्र—वंशरोचना १ तो०, जहरमोहराखताई १ तो०, एसव यसब्वः १ तो०, कहरवा शमई १ तो०, तारपत्राणि "चान्दीके वर्क" इति ख्यातानि १ तो०—एतानि सूक्ष्मपिष्टानि संमेल्य काचभाण्डे संरक्षेत्। सोऽयमवलेहो यावनसम्प्रदाये "इत्रीफल" इति नाम्ना प्रसिध्यति। तोलकमितमेतं प्रातः सेवेत। तावन्मात्रयैव सायं शयनसमये सेवेत। सर्वविधे कासे, श्वासे, प्रतिश्याये, अपस्मारे, मूर्च्छायां च दृष्टफलोऽयमवलेहः कफघ्नो बल्यो मस्तिष्कबृंहणो वृष्यो रसायनश्चास्ति। अत्र बहूनि यावनानि द्रव्याणि स्वेनैव नाम्ना प्रसिद्धानि तद्विक्रेतृभ्यः प्राप्यन्ते।

इति मूर्च्छाधिकारः।

---

## अथ मदात्ययाधिकारः।

अथ मद्यजन्यापि मूर्च्छा भवति मदात्ययस्तु मद्यजन्योऽस्त्येवेति सामान्यान्निदानक्रमतश्च मूर्च्छाचिकित्सानन्तरं मदात्ययचिकित्सामाह—

**मद्यं वातमदात्यये ससलिलं सव्योपसौवर्चलं**
**खर्जूरामलकीपरूपकहिमं श्वेतान्वितं पैत्तिके।**
**स्रोतःशोधनलङ्घने च लवणो ह्यष्टाङ्गसंज्ञोऽन्तिमे**
**सर्वोत्थे त्वखिलं चिकित्सितमलं सर्पिश्च "कल्याणकम्" ॥१॥**

मद्यमिति—हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरप्रलापादियुक्ते वातिके मदात्यये कस्मिंश्चित्काचचषके जलं निक्षिप्य तत्र मद्यं दत्त्वा शुण्ठीमरिचपिप्पलीसौवर्चलानां चूर्णं संमिश्र्य पेयम्। किन्तु जीर्णमद्यायेदं दातव्यमिति न विस्मर्तव्यम्। तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैर्युक्ते पैत्तिके मदात्यये—खर्जूरीफलम्, आमलकम्, परूषकफलम् "फालसा" इति ख्यातम्—इत्येतेष्वेकतमं गृहीत्वा पलमितं तत् षट्पलमितेन जलेन रात्रौ प्लावयित्वा, प्रातः पटेन विस्राव्य, द्विपलमिते सितां तोलकमितां दत्त्वा पिबेत्। अन्तिमे—छर्दयरोचकहृल्लासतन्द्रास्तैमित्यगौरवैर्युक्ते श्लैष्मिके मदात्यये वमनादिना स्रोतः-

शोधनं लङ्घनं च कार्यम् । स्रोतःशोधनाय मदात्ययनाशाय च "अष्टाङ्गलवणः" प्रदेयः । तत्प्रकारः—सौवर्चलम् २ तो०, जीरकः २ तो०, वृक्षाम्लं "डांसरिया" इति लोके २ तो०, अम्लवेतसम् २ तो०, दारुसिता १ तो०, एला १ तो०, मरिचम् १ तो०, सिता २ तो०—सर्वमिदं प्रपिष्य चूर्णं विधेयम् । मात्रया च सेव्यम् । सर्वोत्थे=त्रिदोषजे मदात्यये तु मिलितं चिकित्सितं कर्तव्यम् । कल्याणकं सर्पिः पूर्वमुक्तम् ।

**मथितं गोदधि ससितं कर्पूरैलासुवासितं रसितम् ।**
**स्त्रीचुम्बनमाचरितं क्षपयति पानात्ययं त्वरितम् ॥ २ ॥**

मथितमिति—गव्यस्य दध्नो मन्थनं कृत्वा तत्र सितां कर्पूरमेलां च मात्रया क्षिप्त्वा पानं विधेयम् । स्त्रीचुम्बनं विधेयम् । तेन मदात्ययरोगस्य शान्तिर्भवति ।

**स्फुरदूषणघनसारं दाडिमरसजातशार्करोदारम् ।**
**पेयं विरलतुषारं नीरं पानार्त्तिसंहारम् ॥ ३ ॥**

स्फुरदिति—स्फुरत्=मिलितमूषणम्=मरिचं घनसारः=कर्पूरश्च यत्र तादृशम् । दाडिमरसेन जातो यः शार्करः "अनार का शर्बत" इति प्रसिद्धस्तेनोदारम्=मनोहरम् । विरलस्तुषारः="बर्फ" इति ख्यातं हिमं यत्र तादृशं नीरम्=जलं पेयम् । तद्धि पानार्त्तेः संहारकं भवति ।

**शीतजलं पूगमदं सगुडं कूष्माण्डजं तु कोद्रवजम् ।**
**हरति मदं मदनोत्थं ससितं दुग्धं हि पानेन ॥ ४ ॥**

शीतेति—पूगमदम्=अधिकपूगभक्षणेन यद्वा तद्बीजभक्षणेन जातं मदं शीतजलं हरति । कोद्रवः="कोदों" इति प्रसिद्धो धान्यविशेषस्तज्जं मदं गुडेन सहितं कूष्माण्डजं जलं हरति । मदनोत्थम्=धत्तूरबीजभक्षणादिना जनितं मदं सितायुक्तं दुग्धमपहरति ।

**धात्रीस्वरसनिपिष्टा रसगन्धककज्जली सितापुष्टा ।**
**जयति मदात्ययरोगान् विषयजभोगान्सुयोगीव ॥ ५ ॥**

धात्रीति—रसगन्धयोः कज्जल्यां समानां सितां प्रक्षिप्य आमलकस्वरसेन पेषणं विधेयम् । तेनैव च सेवनम् । सुयोगी=ज्ञाततत्त्वो योगनिष्ठः पुरुषो रूपरसादिविषयजभोगान्यथा जयति तथेत्युपमा ।

इति मदात्ययाधिकारः ।

## अथ दाहाधिकारः

अथ मदात्यये दाहो भवतीति मदात्ययानन्तरं दाहचिकित्सां विवक्षुः षड्भिः शार्दूलविक्रीडितच्छन्दोभिः शार्दूलविक्रीडितमाचरति कविशार्दूलः—

उद्यानेषु वसन् वनेषु विहरन् धारागृहं संविशन्
रम्भापत्रसरोजसेव्यकलिते तल्पेऽप्यनल्पे स्वपन्।
आलिङ्गन्नवयौवनां विधुमुखीमाश्लेषयन्स्वान् शिशून्
शीतं कर्म समाचरन् विजयते दाहार्त्तिमुग्रामपि ॥ १ ॥

उद्यानेष्विति—धारागृहम्="फौवारा" इत्युक्तं कृत्रिमधारागृहम्, रम्भापत्राणि=कदलीदलानि, सरोजम्=कमलम्,सेव्यम्=उशीरम्—एतैः, कलिते=विरचिते तल्पे=शय्यायाम्। शिशूनाश्लेषयन्निति—"सहजस्नेहसोत्साहमुग्धमञ्जुलभाषिणाम्। बालकानां समाश्लेषस्तापं निर्वापयेज्जवात्।" इत्युक्तत्वादिति भावः। शीतं कर्म=शीतलजलस्नानादिकम्।

ह्रीवेराम्बु धयन्घृतं च रसयँश्चन्द्रोदयं चाश्रयन्
शृण्वन्काव्यकथां मनःसुखकरीं गीतिं समाकर्णयन्।
लिम्पन्नम्बुजचन्द्रचन्दनचयैरङ्गं च गाङ्गं पिबन्
तापं घोरतरं जयेद्धिमतरं गङ्गाधरं च स्मरन् ॥ २ ॥

ह्रीवेराम्ब्विति—ह्रीवेराम्बु=" नेत्रवाला " इत्याख्यातस्य जलं धयन्=पिबन्। घृतम्=नवनीतं रसयन्। चन्द्रोदयमाश्रयन्=चन्द्रिकायामुपविशन्। किञ्च–शीतलानुपानैश्चन्द्रोदयनामकं रसमाश्रयन्। मनःसुखकरीमिति गीतिकथयोरुभयोर्विशेषणम्। अम्बुजम्=कमलम्, चन्द्रः=कर्पूरः, चन्दनञ्चैतेषां चयैः=समूहैः। गाङ्गम्=गङ्गोदकम्। तापम्=दाहम्। गङ्गाधरं स्मरन्निति–शीतलाया गङ्गाया धारणेन भगवतो गङ्गाधरस्यातिहिमत्वात्तस्य मनसि स्मरणं तापापनोदनकारणं भवति। दैवव्यपाश्रयचिकित्सायां देवस्मरणादिभिरखिलदुःखौघनाशनस्य सर्वैर्ग्रन्थकारैः स्वीकृतत्वादपि गङ्गाधरस्मरणं दाहार्त्तिनाशकं भवतीति। शिवस्य हिमतरत्वे गङ्गाधरत्वं हेतुरिति काव्यलिङ्गमलङ्कारः। विशेष्यस्य गङ्गाधरपदस्य साभिप्रायत्वात्परिकराङ्कुरोऽपि।

द्रोणीमम्बुजसेव्यचन्दनजलक्षोदाम्बुभिः संभृतां
पूर्णां वापि पयोदशीतलजलैः सद्योऽवगाहेत ना।

मत्स्यण्डीमधुरं स्फुरद्धिमकरं शीतं पिबेत्पुष्करं
प्रातः पर्युषितं वितुन्नकजलं खण्डान्वितं वा पिबेत् ॥ ३ ॥

द्रोणीमिति—द्रोणी=" टब " इति प्रसिद्धः स्नानार्थः पात्रविशेषः । अम्बुजम्, सेव्यम्= उशीरम्, चन्दनम्, जलम्=ह्रीवेरमेतेषां क्षोदेन=चूर्णेनाम्बुभिः=जलैश्च संभृताम् । पयोदशीतलजलैः=सञ्चितैर्वर्षर्तुजलैः । अवगाहेत=प्रविशेत्स्नायाच्च । मत्स्यण्डी=सिता दाडिमादिशार्करं वा तया मधुरम् । स्फुरन् हिमकरः=कर्पूरो यत्र तत् । पुष्करम्=जलम् । रात्रौ मृत्पात्रे वितुन्नकम्=धान्यकं जलेनाप्लाव्य प्रातस्तद्वारि विस्राव्य सितां निक्षिप्य पिबेदिति ।

द्राक्षापपर्टकाटरूषकुनटीधात्रीहिमं शीलयेत्
पित्तास्रज्वरदाहशोषकतृषानाशं चिकीर्षुर्नरः ।
पानीयामलकेक्षुखण्डमधुरा योज्याः फलं मूत्रलं
शस्तः शोणितपूर्णकोष्ठजनिते क्वाथस्तु वेणुत्वचः ॥ ४ ॥

द्राक्षेति—कुनटी=धान्यकम् । शीलयेत्, सितां निक्षिप्येति शेषः। पानीयामलकम्= "भुंई आंवला" इति प्रसिद्धम् । इक्षुखण्डाः="गण्डेरी" इति प्रसिद्धाः । मधुरा=द्राक्षा । मूत्रलं फलं योज्यमिति सम्बन्धः । शोणितपूर्णकोष्ठजनिते=अवगाढशस्त्रप्रहारजरक्तपूर्णकोष्ठजे दाहे वेणुत्वचः=वंशवल्कलस्य क्वाथः समधुकः शस्तः ।

तापे वा रसजेऽच्छजीरकरजो धातुक्षयोत्थे पुन-
र्दुग्धं सर्पिरभीष्टसाधनमथ क्षीरोत्थितं वा घृतम् ।
लेपो निम्बदलोत्थफेनविहितो दाहं कृशत्वं नये-
दभ्यङ्गस्तु सहस्रधौतहविषा तद्वद्गुणो वर्णितः ॥ ५ ॥

तापे इति—रसजे=अशुद्धपारदादिरसभक्षणजनिते तदधिकभक्षणजनिते वा । अच्छजीरकरजः=मनाग्भृष्टस्य श्वेतजीरस्य चूर्णम् । धातुक्षयोत्थे=रसादिधातुक्षयोत्पन्ने । अभीष्टसाधनम्=वाञ्छितवस्तुसम्पादनम् । निम्बदलानि पिष्ट्वा, जले मेलयित्वा, हस्तेन विमथ्य फेनः सम्पाद्यः । तेन हस्तपादादिषु लेपः । एवं बदरीदलफेनेनापि । सहस्रधौतेति–"अधिकस्याधिकं फलम्" इति दर्शनाय । कार्यं तु शतधौतेनापि सिध्यति । तद्वद्गुणः=दाहनाशकः।

चूर्णं चेद्दशसारमत्र विदितं स्याच्चन्दनाद्यं तथा
सर्पिस्त्वत्र कुशादिसिद्धमुदितं तैलं च तत्तापनुत् ।

एवं चन्द्रकलारसादिगुडिकासंज्ञौ रसौ पूजितौ
सर्वत्रापि तु राजतच्छदयुतं धात्रीफलं शस्यते ॥ ६ ॥

चूर्णमिति—मधुयष्टी, आमलकम्, द्राक्षा, एला, चन्दनम्, वालकम् "नेत्रवाला" इत्युक्तम्, मधूकपुष्पाणि "महुएके फूल" इति ख्यातानि, खर्जूरीफलम्, दाडिमबीजानि—एतानि सर्वाणि समानानि पिष्ट्वा तत्र सर्वतुल्यां सितां दत्त्वा चूर्णं विधेयम्। तदिदं "दशसारचूर्णम्" इति नाम्ना प्रसिद्धयति। सर्वेषु पित्तविकारेष्विदमुपयुज्यते। "चन्दनाद्यं चूर्णम्"—श्वेतचन्दनम्, उशीरम्, कुष्ठम्, मुस्तः, आमलकम्, चोरकम्="भटेउर" इति ख्यातो ग्रन्थिपर्णभेदः, कमलम्, मधुयष्टी, मधूकपुष्पम्, द्राक्षा, खर्जूरीफलम्—एतानि समानानि प्रपिष्य तत्र सर्वसमां सितां दत्त्वा प्रातः शीताम्बुना सेव्यम्। "कुशादिघृतम्"—कुशः, काशः, शरः, नलः, इक्षुः, शालिपर्णी, जीवकः, ऋषभकः (अन्त्ययोरभावे तु विदारीमूलम्)—एतेषामाढकमिते चूर्णे द्रोणमितं जलं दत्त्वा निष्क्वाथयेत्, चतुर्थांशञ्चावशेषयेत्। तदनु–एतेषामेव कुडवमितं कल्कं प्रस्थप्रमितं घृतं पूर्वोक्तं क्वाथं चैकध्यं संमिश्र्य विपचेत्। तदिदं "कुशादिघृतम्"। अत्र घृतस्थाने तैलपाकेन "कुशादितैलं" सिद्धयति। तत्र घृतस्य पानेन तैलस्य चाभ्यङ्गेनोपयोग इति। "चन्द्रकलागुटिका" राजयक्ष्माधिकारे वर्णिता। "रसादिगुटिका"–निर्माणप्रकारोऽयम्—शुद्धपारदः, शुद्धगन्धकः, अभ्रकभस्म, लोहभस्म, श्वेतचन्दनम्, स्थूलसूक्ष्मभेदेनोशीरद्वयम्, मुस्तकः, यथालाभं–काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति–इत्येवं सुश्रुतोक्तानि जीवनीयगणौषधानि–सर्वमेतज्जीवनीयगणक्वाथेन दिनत्रयं विमर्द्य बदराकारा वटयो विधेयाः। जीवनीयगणोक्तसर्वौषधानामलाभेऽपि गुडूचीमधुयष्टिकयोः प्रक्षेपस्त्ववश्यं कार्यः। इयं सर्वोत्तमा गुटी। पारदस्थाने चेदत्र तद्भस्म योज्येत तर्हि यक्ष्मादिरोगेषु रामबाण एव। सर्वत्रापीति–राजतच्छदः="चान्दी का वर्क" इति प्रसिद्धः। तेन युतं धात्रीफलम्=आमलकं पक्वं "मुरब्बा" रूपं केवलं वा सर्वत्र शस्यते इति योजना।

इति दाहाधिकारः

—:०:—

## अथोन्मादाधिकारः

अथ मदात्यये " उन्मादमिव चापरम् " इत्येनमुन्मादसङ्कीर्तनं तत्सादृश्याभिधानं च निदाने कृतमिति मदात्ययानन्तरमुन्मादस्यैवावश्यवक्तव्यतासीत्परन्तु मदात्ययेऽपि दाहो भवतीति स्वल्पवक्तव्यतया दाहमभिधायोन्मादचिकित्सितमुच्यते—

उन्मादामयिनं विविक्तभवने बद्धा परं त्रासये-
च्चित्रं कर्म च दर्शयेत्सुकशया संताडयेद्युक्तितः।
ब्रूयादिष्टविनाशनं च सहसा, मित्रोक्तिभिः सान्त्वयेत्
कूपे वापि निवेशयेच्च सततं मांसादिभिर्धूपयेत्॥ १॥

उन्मादेति—विविक्तभवने=एकान्तस्थाने। त्रासयेत्=निर्विषस्य मन्त्रौषविरुद्धवीर्यस्य वा सर्पस्य गले प्रक्षेपेणोपायान्तरेण वा भीषयेत्। चित्रं कर्म=ऐन्द्रजालिकादिकृतामद्भुतां क्रीडाम्। अद्यत्वे तु–" सीनेमा "–(Cinema) संज्ञकं विद्युच्छक्त्या प्रदर्श्यमानं चित्रनाटकमिति। सुकशयेति–कशा=" चाबुक " " हण्टर " इत्यादिनामभिः प्रसिद्धा। युक्तितः=कशाघातं मन्दं कुर्याद्भीषणमधिकं चेति बुद्ध्या। इष्टविनाशनम्="तव भ्राता मृतः, स्त्री विनष्टा, गृहं भग्नम् " इत्यादिरूपम्। मित्रोक्तिभिः=स्निग्धानां विश्वस्तानां तत्सहचराणां च सुहृदां वाक्यैः। कूपे निवेशयेत्=भयजननद्वारा बुद्धिस्थापनार्थं पाशादिना बद्धा कूपे पातयेत्, स्थिरया बुद्ध्या बहिर्निष्कासनं याचमानं तु निष्कासयेदिति। मांसादिभिरिति–सिंहादीनां मांसेन "खट्टाशी" इति प्रसिद्धाभिः पूतिभिश्च। कैश्चिदत्र गोमांसेन धूपनमुक्तं परं न तद्धर्मप्राणानां हिन्दूनां कृते धर्म्यम्। किञ्च—" कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान्। परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्॥ जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा। रक्षेदुन्मादिनं चैव सद्यः प्राणहरं हि तत्॥ " इत्याद्युपदेशोऽपि न विस्मर्तव्यः।

स्नेहः प्रायः पवनजनिते प्राग्विरेकश्च पैत्ते
श्लेष्मोत्पन्ने वमनमुचितं तत्परं बस्तिकर्म।
मथ्नात्युन्मादगदमगदो हन्त सिद्धार्थकादिः
कल्याणाख्यं घृतमिह मतं चैतसं वापि सर्पिः॥ २॥

स्नेह इति—"सिद्धार्थकादे"रगदस्येदं विधानम्–सिद्धार्थकः="सरसों" इति ख्यातः, वचा, हिङ्गु, करञ्जः, देवदारु, मञ्जिष्ठा, हरीतकी, बिभीतः, आमलकम्, कट्फलम्, कटुकी, ज्योति-

ष्मती="मालकांगनी" इति प्रसिद्धा,दारुसिता,शुण्ठी, मरिचम्,पिप्पली,प्रियङ्गुः,हरिद्रा,दारुहरिद्रा, शिरीषः-सर्वाण्येतानि समानानि वस्तस्य (बकरा)मूत्रेण प्रपिष्य पानाञ्जननस्यप्रलेपादिषूपयोज्यानि। "कल्याणघृतं" पूर्वमुक्तम्। "चैतसं घृतम्"—गाम्भारीरहितं दशमूलम्, रास्ना, एरण्डमूलत्वक्, त्रिवृत, बला, मूर्वा, शतवारी-एतेषां प्रत्येकं द्विपलतुलितः क्वाथः, प्रस्थं घृतम्, इन्द्रवारुणीप्रभृत्यष्टाविंशतिद्रव्याणां प्रत्येकं कर्षमितानां कल्कः, चतुःप्रस्थं जलं चेति सर्वमैकध्यं संसृज्य विपचेत्। अष्टाविंशतिद्रव्याणीमानि—इन्द्रवारुणी, त्रिफला, रेणुका तदभावे निर्गुण्डीबीजानि, देवदारु, एल्वालुकम्, शालिपर्णी, यासः, हरिद्रा, दारुहरिद्रा, शुक्लकृष्णशारिवाद्वयम्, प्रियङ्गुः, नीलोत्पलम्, एला, मञ्जिष्ठा, दन्ती, दाडिमबीजानि, नागकेशरः,तालीशपत्रम्, कण्टकारी, मालतीपुष्पाणि, विडङ्गम्,पृश्निपर्णी, कुष्ठम्, चन्दनम्, पद्मकम्-इति। मन्दाक्रान्तावृत्तम्।

सर्पिर्युक्तं प्रथितमथवा पञ्चमूलीद्वयाम्बु
प्रातः पेयं जतुकसुरभि च्छागलं वापि मूत्रम्।
चूर्णं शस्तं विबुधवचनादत्र "सारस्वताख्यं"
ह्युन्मादारिः सलिललुलितः शङ्खिनीकल्क एकः॥ ३॥

सर्पिरिति—दशमूलक्वाथे घृतं निक्षिप्य पेयम्। जतुकम्=हिङ्गु तेन युक्तं वस्तमूत्रं वा पेयम्। "सारस्वतचूर्ण"-प्रकारः—कुष्ठम्, अश्वगन्धा, सैन्धवम्, अजमोदा, श्वेतजीरः, कृष्णजीरः, शुण्ठी, मरिचम्, पिप्पली, पाठा, शङ्खपुष्पी —एतानि समानि, सर्वतुल्या वचा चेति सर्वं ब्राह्मीस्वरसेन वारत्रयं भावयित्वा, विशोष्य, मधुना घृतेन वा लिह्यात्। शङ्खिनी=शंखपुष्पी, तस्याः कल्कः। वृत्तं पूर्वोक्तम्।

पिबेत्प्रातर्ब्राह्मीस्वरसमुपगङ्गं प्रतिवसन्
स्वमूर्धानं सिञ्चेद्धिमघटजलैरत्र बहुभिः।
विरिक्तो लिह्याद्वाभिनवनवनीतं समसितं
भजेद्वा भूतेशं विमलमतिसाधूनुपचरेत्॥ ४॥

पिबेदिति—ब्राह्मीस्वरसो मधुना युक्तः, वचाकुष्ठशङ्खपुष्पीचूर्णयुक्तो वा सेव्यः उपगङ्गम्=गङ्गासमीपे, तत्तीरे इत्यर्थः। अत्र=गङ्गातीरे। विरिक्तः=कृतविरेचनः। अभिनवनवनीतम्=सद्य उद्धृतं नवनीतम्। सत्वरभक्षणमनेन सूचितम्। भूतेशम्=शिवं भजेत्। विमला मतिर्येषां तादृशान्साधूनुपचरेत्=सेवेत। ते हि सद्बुद्धिदा दुर्बाधापसारकाश्च भवन्ति।

वृद्धिं लब्धवती यतं श्रितवती ज्योतिष्मती केवला
सा स्नेहात्मवती पयोऽन्वयवती बुद्धिस्मृतिप्रीतिदा ।
ब्राह्मी हैमवती शिलाजतुमती मेधावृतिध्वंसकृ-
न्नूनं ज्ञानवती सभापि दुरितिच्छितिस्थितिःकीर्तिता॥ ५॥

वृद्धिमिति—वृद्धिं लब्धवती=प्रथमदिने एकं बीजम्, द्वितीयदिने द्वे बीजे, तृतीयदिने त्रीणि बीजानीत्येवं क्रमेण मण्डलं यावत् बीजवृद्ध्या वर्धमाना । स्नेहात्मवती=तैलस्वरूपा तु दिने दिने बिन्दुक्रमेण वर्धमाना । उभयरूपापि पयोऽन्वयवती=दुग्धसम्बन्धवती, दुग्धेन निपीतेत्यर्थः, यतम्=पथ्याहारविहारवन्तं श्रितवती केवला ज्योतिष्मती=" मालकांगनी " इति प्रसिद्धा बुद्धिस्मृतिप्रीतिदा भवतीति । उन्मत्तो ज्योतिष्मत्या बीजानां वृद्धिक्रमेण दुग्धानुपानेन सेवनं कुर्यात्, पातालयन्त्रेण निष्कासितस्य तत्तैलस्य तु बिन्दुवृद्धिक्रमेण सेवनं विदध्यात्, पथ्यमाहारमश्नीयात्, जितेन्द्रियश्च स्यादिति तात्पर्यम्। ब्राह्मीति-ब्राह्मी=प्रसिद्धा, सा च हैमवती=हिमवतः प्रसूता, हिमालयोत्पन्नेति यावद्ग्राह्या । सा शिलाजतुमती=शिलाजतुयुक्ता मेधायाः=धारणावत्या बुद्धेर्याऽऽवृतिः=आवरणं तद्ध्वंसकृद्भवति । ब्राह्म्याः स्वरसस्य क्वाथस्य वा शिलाजतु संमिश्र्य सेवनं विधेयमिति भावः । ज्ञानवत्यां सभायां चोन्मादामयी निवेशनीय इति ।

भूतावेशेऽञ्जनं प्रोक्तं वैद्यैर्लशुनहिङ्गुनोः ।
तथा सुरासुरावेशे धूपो "माहेश्वराभिधः" ॥ ६ ॥

भूतेति—भूतावेशे=भूतजनिते उन्मादे लशुनस्य हिङ्गुनो वाऽञ्जनं विधेयम्। सुराश्चासुराश्चेति तेषामावेशे तु "माहेश्वरधूपः" प्रदेयः । किञ्च—देवाद्यावेशेनोन्मत्तेषु नस्याञ्जनादीनि तीक्ष्णानि क्रूरकर्म च परिहरेत् । तत्र—घृतपानम्, गायत्रीजपः, होमः, बलयः, स्वस्त्ययनम्, व्रतम्-इत्यादीनि कर्माण्येव विधेयानि । तीक्ष्णसेवयोन्मादस्य देवाद्युत्पन्नस्य वृद्धिदर्शनादिति । " माहेश्वरधूप "— निर्माणप्रकारः—कार्पासबीजम्, मयूरपिच्छम्, बृहती, " असवरग " इति प्रसिद्धा स्पृक्का, मदनफलम्, दारुसिता, जटामांसी, विडालविष्ठा, नखं नाम गन्धद्रव्यम्, वचा, मनुष्यकेशाः, सर्पकञ्चुकम्, गोशृङ्गखण्डाः, हस्तिदन्तः, हिङ्गु, मरिचम्—एतानि तुल्यानि प्रपिष्य धूपो विधेयः ।

शुचिः सत्यवाक् सत्त्ववान्सप्रयत्नो निवृत्ताप्रियो वीतमद्यो जितात्मा ।
हितं योऽश्नुते हृद्यमन्नं च मेध्यं स ना युज्यते नैव मास्तिष्करोगैः॥७॥

शुचिरिति—उन्मादरोगे यत्पथ्यं तदभिधानं रोगानुत्पत्तये मनुष्येण यथा स्थेयं तदभिधानं चेदम्।

अथोन्मादामयिनः शयनं हितकरं भवतीति निद्राजनकाः प्रयोगाः प्रदर्श्यन्ते—

मर्दनाच्छागलं क्षीरं करपादतलेषु वै।
निद्राप्रदं खाखसोत्थं तैलं तालुनि संस्थितम्॥ ८॥

मर्दनादिति—छागलं क्षीरम्=अजादुग्धम्। खाखसोत्थं तैलं पातालयन्त्रेण निष्पाद्यम्। "पोस्त के दाने" इति प्रसिद्धानि खाखसबीजान्यत्र गृह्यन्ते।

पृदाकुफेनमाघ्रातं पार्श्वयोश्च विलेपितम्।
निद्रोत्पत्तिकरं भङ्गाघृतं भुक्तं च युक्तितः॥ ९॥

पृदाकुफेनमिति—पृदाकुफेनम्=अहिफेनम्। आवर्तमाने दुग्धे भङ्गापोट्टलीं निक्षिप्य तस्य दधि विधाय, विमथ्य निष्पादितं घृतं "भङ्गाघृतम्" इति प्रसिद्ध्यति। युक्तितः= अल्पमात्रया।

चन्द्राक्षिभागयोर्मज्ज्ञः काहूखाखसबीजयोः।
ससितस्य जलैः पानं निदानं स्वप्नतन्द्रयोः॥ १०॥

चन्द्रेति—"काहू" इति लोकख्यातस्य बीजमज्जा चन्द्रभागः=एकभागः, खाखसबीजान्यक्षिभागानि=द्विभागानि। सिता द्वाभ्यां समानेति चूर्णं जलेन पेयम्।

कालिङ्गकाहूखसमिष्टतुम्बीबीजैस्तिलाढ्यैरुदितं हि तैलम्।
अभ्यञ्जनान्मूर्ध्नि शिरोर्त्तिहारि स्वप्नप्रदं पित्तमलप्रहारि ११

कालिङ्गेति—कालिङ्गम्="तर्बूज" "मतीरा" इत्यादिप्रसिद्धम्। खसशब्देनात्र खाखस उच्यते। तैलं पातालयन्त्रेण निष्कास्यम्। पित्तमलम्=पित्तदोषः।

पयोभिराजैर्विजयादलानां कुर्वीत शाखातलयोः प्रलेपम्।
भुञ्जीत काहूखसबीजधान्यक्षोदं सखण्डं खलु नष्टनिद्रः १२॥

पयोभिरिति—विजया=भङ्गा तस्या दलानि छागीदुग्धैः प्रपिष्य तल्लेपं शाखातलयोः=हस्तपादतलयोः कुर्वीत। खसशब्देनात्रापि खाखसो गृह्यते। धान्यम्="धनिया" इति प्रसिद्धम्।

**शिरसि नवहविर्यः कुङ्कुमाढ्यं विभर्ति**
**करचरणतले चेच्छीततैलं ददाति ।**
**रसयति च निशायां मादिनीपुष्पकन्दं**
**स्वपिति स सततं ना कुम्भकर्णायमानः ॥ १२ ॥**

शिरसीति—नवहविः=नवनीतम् । शीततैलम्=चन्दनतैलादिकम् । मादिनीपुष्प-कन्दः="भांगका गुलकन्द" इति प्रसिद्धः । मादिनीपुष्पकन्दविधिः—चतुर्थांशभङ्गापत्र-सहितेषु गुलावपुष्पेषु त्रिगुणां सितां दत्त्वा, सर्वं हस्तेन सम्यग्विमर्द्य चत्वारिंशद्दिनानि सूर्यतापे निदध्यात् । यद्वा–सितायां वंशरोचनां विमिश्र्य, तत्र सम्यगार्द्रत्वकारकं दधि मेलयित्वा भङ्गाघृतमपि मेलयेत् । ततस्तत्र गुलावपुष्पाणि पिष्टान्येलावीजानि च निक्षिप्य काचादिपात्रे पञ्चविंशतिदिनानि स्थापयेत् । भङ्गाघृतन्तु आवर्तमाने दुग्धे भङ्गापोट्टलीं निक्षिप्य, तदीयं दधि निर्माय, तच्च विमथ्य घृतं निष्कास्य, तच्च पुनरावर्त्तमाने दुग्धे निक्षिप्य, दधि निर्माय विमथ्य च ग्राह्यम् । तदिदं स्वच्छमगन्धं च भङ्गाघृतं सुमकन्दे निक्षिपेत् । एतावतः परिश्रमाद्भीतैस्तु सिद्ध एव यतस्तत आपणेषु विक्रीयमाणो मादि-नीसुमकन्दो ग्राह्यः ।

इत्युन्मादाधिकारः

## अथापस्माराधिकारः

अथ मनोदुष्टिसाधर्म्यात्समानचिकित्स्यत्वाच्चोन्मादचिकित्सानन्तरमपस्मारचिकि-त्सितमुच्यते—

**श्रीमद्भगवद्गीता श्रवणनिपीताऽथ यत्नतोऽधीता ।**
**हरतेऽपस्मृतिमूलं चेदनुकूलं भवेद्दैवम् ॥ १ ॥**

श्रीमदिति—श्रीमद्भगवद्गीता श्रवणनिपीता=सच्चरित्रविद्वद्ब्राह्मणमुखतः श्रुता । अधी-ता=स्वयं पठ्यमाना । अपस्मृतिमूलम्=पूर्वजन्मार्जितपापरूपं चिन्ताशोकादिरूपं चाप-स्माररोगकारणं हरते=नाशयति । पापमपूर्वपुण्यजननद्वारा चिन्ताशोकादिकं च ज्ञानजनन-द्वारेति भावः । चेद्दैवमनुकूलं भवेदिति–इयं हि दैवव्यपाश्रया चिकित्सा, तस्याश्च दैवानु-कूल्येनैव साफल्यदर्शनादिति ।

अथ युक्तिव्यपाश्रयां चिकित्सां वक्तुं प्रथमं शरीरशुद्धिमाह—

**पूर्वमपस्मृतिमन्तं बहुदोषं तं विशोधयेत्क्रमशः ।**
**वस्तिविरेचनवमनैः पश्चान्मेधाकरैः सुखयेत् ॥ २ ॥**

पूर्वमिति—क्रमश इति- "वातिकं वस्तिभिः प्रायः पैत्तिकं च विरेचनैः । कफजं वमनप्रायैरपस्मारमुपाचरेत् ॥"—इत्ययं क्रमो बोध्यः । मेधाकरैः=वक्ष्यमाणैर्बुद्धिवर्धकप्रयोगैः ।

**अपि सकला खलु मोहचिकित्सा, इह तु विधेया सपदि सकृत्सा ।**
**प्रथयतु सकलं कर्म सुशीतं, शीतलजलसेचनमविगीतम् ॥ ३ ॥**

अपीति—मोहचिकित्सा=मूर्च्छाधिकारोक्ता चिकित्सा । अविगीतम्=अनिन्दितम् ।

**ज्वलितसुधासमसागरचूर्णं वितरतु नासाविवरे तूर्णम् ।**
**विदितमपस्मृतिजनिते वेगे त्रिकटुजमथवा रज इह रोगे ॥ ४ ॥**

ज्वलितेति—ज्वलितसुधा="कली का चूना" इति ख्याता तया समं सागरस्य=नवसादरस्य चूर्णं "एमोनिया"—संज्ञकं पूर्वमुक्तम् । त्रिकटुजं रजः=शुण्ठीमरिचपिप्पलीनां चूर्णम् ।

**सितकरवीरदलोत्थितधूलिर्हरति तमो जडतामिव शूली ।**
**मत्कुणशोणितनस्यममोघं क्षपयति भीषणमोहरुगोघम् ॥ ५ ॥**

सितेति—सितकरवीरः="सफेद कनेर" इति प्रसिद्धस्तत्पत्राणां सूक्ष्मं चूर्णं नस्ये समुपयोज्यम् । मत्कुणशोणितनस्यं भीषणा या मोहरुजस्तासामोघम्=समूहं क्षपयति ।

**भजतु नरोऽरमरुष्करपाकं स्मरणविहीनो दिव्याशाकम् ।**
**अपि कूष्माण्डशिफारसपिष्टं मधुकमुदस्यति मानसकष्टम् ॥ ६ ॥**

भजत्विति—स्मरणविहीनः=अपस्मारजुष्टो नरोऽरम्=शीघ्रमरुष्करपाकम्="भल्लातकपाकं" भजतु, दिव्या=ब्राह्मी तस्याः पत्राणां शाकं वा भजतु । अयं भल्लातकपाकनिर्माणप्रकारः—वृन्तरहितान् सुपुष्टानेकप्रस्थमितान् भल्लातान्विंशतिप्रस्थमिते जले निष्क्वाथ्य चतुर्थांशशेषे तज्जलं बहिर्निक्षिपेत् । तत आढकमिते गव्यदुग्धे भल्लातकान्निष्क्वाथ्य चतुर्थांशशेषे तद्दुग्धं बहिर्निक्षिपेत् । तदनु—कुडवमिते गव्यघृते मन्दाग्निना तान् भर्जयित्वा मसृणं प्रपिष्य तत्र वङ्गभस्म ६ मा०, पारदभस्म ६ मा०, सुवर्णभस्म ६ मा०, त्वक् १ तो०, वंशरोचना १ तो०, मेहदीपुष्पाणि १ तो०, एकविंशतिवारं गोमूत्रनिर्वापिता मनः

शिला १ तो०, रत्नज्योतिः २तो०, लवङ्गम् २ तो०,कुङ्कुमम् २ तो०, शतपुष्पा २ तो०, दारुसिता २ तो०, जातीपत्री २ तो०, श्वेतचन्दनचूर्णम् १ प०, कस्तूरी ६ मा०, एला १ तो०, भूर्जपत्रम् १ तो०, तमालपत्रम् १ तो०, शुण्ठी १ तो०, मरिचम् १ तो०, पिप्पली १ तो०, कर्कटशृङ्गी १ तो०, हरीतकी वृहती १तो०, हरीतकी ह्रस्वा १ तो०, श्वेतजीरः १ तो०, कृष्णजीरः १ तो०, उपकुञ्ची "मगरैल" इति ख्याता १ तो०, धान्यकम् १ तो०, तिलाः १ तो०—सर्वाण्येतानि सूक्ष्मविचूर्णितानि संमेल्य १ प्रस्थमिते मन्दाग्निपक्वे फेनविवर्जिते मधुनि सर्वमिदं संमिश्रयेत्। तदनु—काचभाण्डस्थमिदं सप्ताहं धान्यराशौ निधाय सप्ताहात्परतो यथार्हानुपानेन यथाग्निबलं परिशीलयेदिति। अपीति—कूष्माण्डशिफा="कुम्हड़े की जड़" इति प्रसिद्धा तद्रसेन मधुयष्टिकां प्रपिष्य त्र्यहं लिह्यादिति। मानसकष्टम्=अपस्मारम्। उपरितनपद्यचतुष्टये "चौपाई"नामकं छन्दः।

**ब्राह्मी येषां हृदये तेषां न स्यात्तदाश्रितो व्याधिः।**
**प्रतिबन्धकसद्भावे हेतुसमूहोऽपि फलशून्यः॥ ७॥**

ब्राह्मीति—ब्राह्मी=प्रसिद्धौषधिः सरस्वती वा येषां हृदये सेव्यत्वेन स्थिता स्यात्तेषां तदाश्रितः=हृदयाश्रितो व्याधिरपस्मारादिरूपो न स्यात्। यतः प्रतिबन्धकस्य=विघ्नस्य सद्भावे हेतूनां समूहोऽपि फलशून्यः=फलजननेऽसमर्थो भवति, कार्यत्वावच्छिन्नकार्यमात्रं प्रति प्रतिबन्धकसंसर्गाभावस्यैव कारणत्वादिति भावः। तत्र ब्राह्म्याः स्वरस—चूर्ण—घृत—गुटिकादिरूपैरनेकैः प्रकारैरुपयोगो भवति। प्रकाराः केचिन्मूर्च्छादिषु निर्दिष्टाः। इष्टफलायाः "ब्राह्मीवटी" इति प्रसिद्धाया वटिकायाः प्रकारोऽयम्—त्वक् ४ मा०, जातीफलम् ४ मा०, लवङ्गम् ४ मा०, मरिचम् ४ मा०, लोहभस्म ४ मा०, जातीपत्री ४ मा०, शुण्ठी ४ मा०, आकल्लकः ४ मा०, धान्यकम् ४ मा०, गजपिप्पली ४ मा०, चित्रकः ४ मा०, अजमोदा ४ मा०, वचा ४ मा०, कुष्ठम् ४ मा०, तुम्बुरुः "कबाबे नेपाली धनियाँ" इति प्रसिद्धः ४ मा०, किराततिक्तः ४ मा०, शुद्धहिङ्गुलम् ४ मा०, अगुरु ४ मा०, अश्वगन्धा ४ मा०, अम्बरम् ४ मा०, मुक्ताभस्म ४ मा०, वंशरोचना ४ मा०, कृष्णजीरः ४ मा०, पिप्पलीमूलम् ४ मा०, विडङ्गम् ४ मा०, माणिक्यभस्म ४ मा०, शतपुष्पा ४ मा०, श्वेतचन्दनम् ४ मा०, चन्द्रोदयः ४ मा०, पुष्करमूलम् ४ मा०, कस्तूरी ४ मा०, शतावरी ४ मा०, तृणमणिः (कहरवा) ४ मा०, इन्द्रनीलभस्म ४ मा०, त्रिवृत् ४ मा०, प्रवालभस्म ४ मा०, यवानी ४ मा०, खुरासानयवानी ४ मा०, संगेयशबभस्म ४ मा०, सुवर्णभस्म ४ मा०, ब्राह्मी २ तो०—सर्वाण्येतानि ब्राह्मीस्वरसेन विभाव्य, विशोष्य, मधुना विमर्द्य त्रिगुञ्जामिता वट्यो विधेयाः। उचितानुपानेनापस्मारे, अपतन्त्रके (हिस्टीरिया), उन्मादे, सन्निपाते, श्वासे, कासे, यक्ष्मणि, वातरोगेषु,

बलक्षये अन्यान्यरोगेषु च संसेव्याः । ज्वराधिकारोक्ता " ब्राह्मीवटी " अप्यत्र सिद्धा। श्लोकेऽत्रार्थान्तरन्यासोऽलङ्कारः। आर्यावृत्तम् ।

षड्ग्रन्था यत्नतोऽभ्यस्ता ददते बुद्धिमुत्तमाम् ।
षड्ग्रन्था यत्नतोऽभ्यस्ता ददते बुद्धिमुत्तमाम् ॥ ८ ॥

षड्ग्रन्थेति—गोमूत्रिकाबन्धचित्रकाव्यभेदोऽयम् । षड्ग्रन्था=वचा यत्नतोऽभ्यस्ता सती उत्तमां बुद्धिम्=अपस्मारनाशपूर्वां मेधाशक्तिं ददते=ददाति। " दद दाने" इत्यस्य रूपमिदम्। अयमत्र यत्नः—वचाचूर्णं द्वित्रिमाषकमितं मधुना लिह्यात्। मासः सेवनमर्यादा। सेवनकाले क्षीरभक्ताशी स्यादिति। किञ्च-षड् ग्रन्थाः=कणादस्य वैशेषिकम्, गौतमस्य न्यायः, कपिलस्य साङ्ख्यम्, पतञ्जलेर्योगः, जैमिनेः पूर्वमीमांसा, वेदव्यासस्योत्तरमीमांसावेदान्तश्चेति षड् दर्शनानि यत्नतोऽभ्यस्ताः=कस्माच्चित्सद्गुरोरधीत्य पुनः सपरिश्रमं स्वयं परिशीलिताः सन्त उत्तमां बुद्धिं ददते=वितरन्ति। "डुदाञ् दाने" इत्यस्य बहुवचने रूपमिदम्।

गोमूत्रिकाबन्धचित्रोद्धारः

षड् ग्र न्था य त्न तोऽ भ्य स्ता द द ते बु द्धि मु त्त मा म्

षड् ग्र न्था य त्न तोऽ भ्य स्ता द द ते बु द्धि मु त्त मा म्

सारस्वतं भजत वाङ्मनसप्रशुद्ध्यै
सारस्वतं भजत रे खलु बुद्धिवृद्ध्यै ।
सारस्वतं भजत चित्तविबोधसिद्ध्यै
सारस्वतात्परतरं नहि किञ्चिदस्ति ॥ ९ ॥

सारस्वतमिति—वाचः प्रशुद्ध्यै " सारस्वतं " नाम व्याकरणं मनःप्रशुद्ध्यै च सारस्वतं धाम भजत। बुद्धिवृद्ध्यै अपस्मारनाशाय च " सारस्वतं घृतं " भजत। अपस्मारनाशपूर्वकं चित्तविबोधसिद्ध्यै " सारस्वतं " चूर्णं भजत । अस्मिन्नपस्माररोगे " सारस्वतात् " शार्करात् परतरं किञ्चिदपि नास्ति। अयं सारस्वतघृतनिर्माणविधिः—ब्राह्मीस्वरसः ४ प्रस्थाः, गव्यं घृतम् १ प्रस्थः, हरिद्रा १ प०, मालतीपुष्पाणि १ प०, त्रिफला १ प०, ह्रस्वहरीतकी १ प०, पिप्पली १ तो०, विडङ्गम् १ तो०, सैन्धवम् १

तो०, शर्करा १ तो०, आटरूषकः १ तो०—सर्वमिदमैकध्यं संसृज्य विपचेत् । "सारस्वतचूर्ण—" प्रकार उन्मादचिकित्सायामुक्तः । "सारस्वतशार्कर" स्तु वनप्साशार्करविधिना ब्राह्म्या निर्मातव्यः । अत्र वसन्ततिलका वृत्तम् ।

**घृतं चैतसं चैतसं हन्ति रोगं तथा शारिउ पैशाचिकं वाचिकञ्च ।**
**वदन्त्यत्र कल्याणकं चापि पेयं भिषक्तल्लजाः पञ्चगव्याभिधेयम् ॥**

घृतमिति—"चैतसं घृतं" चैतसम्=चेतसि भवमपस्मारादिकं रोगं हन्ति । तस्य च प्रक्रियोन्मादचिकित्सायामुक्ता । तथा "पैशाचिकं घृतम्" चैतसं वाचिकञ्चेत्युभयविधं रोगं विनिहन्ति । तन्निर्माणविधिः—त्रायमाणा, अग्निमन्थः, अतिविषा, नाकुली, गन्धनाकुली, काकोली, गुडूची, चोरकः, गुग्गुलुः, वाराहीकन्दः, जटामांसी, शतपुष्पा, मिश्रेया "सोया" इति ख्याता, कपिकच्छूबीजम्, पद्मचारिणी मूर्वा वा, हरीतकी, वचा, शालपर्णी, कटुकी, शतावरी, मेषशृङ्गी, अरलुकः—सर्वपामेषां समानानां प्रस्थमानं गृहीत्वा तत्र षोडशप्रस्थमितं जलं दत्त्वा निष्क्वाथ्य, चतुर्थांशमवशेष्य, तत्र प्रस्थमितं गव्यघृतं संमिश्र्य विपचेत् । "कल्याणकं सर्पिः" पूर्वमुक्तम् । भिषक्तल्लजाः=वैद्यश्रेष्ठा अत्र "पञ्चगव्यघृतम्" अपि पेयं वदन्ति । "पञ्चगव्यघृतस्य" प्रकारः—दशमूलम्, त्रिफला, हरिद्रा, दारुहरिद्रा, कुटजत्वक्, सप्तपर्णः, अपामार्गः, नीलिनी, कटुकी, कृतमालकः, फल्गुमूलम् "कठूमरफल" इति ख्यातम्, पुष्करमूलम्, धन्वयासकः—एतानि द्विपलानि गृहीत्वा तत्र १६ प्रस्थमितं जलं दत्त्वा, चतुर्थांशमवशेष्य वस्त्रेण गालयेत् । चतुःप्रस्थमितं क्वाथमेनं, घृतप्रस्थं, गोमयरसप्रस्थं, गोदधिप्रस्थं, गोदुग्धप्रस्थं, गोमूत्रप्रस्थं, प्रत्येकं कर्षमितानां भार्ग्यादीनां कल्कं चैकध्यं संमिश्र्य विपचेत् । भार्ग्यादिद्रव्याणीमानि—भार्गी, पाठा-त्रिकटु, त्रिवृता, "हिज्जल" इति ख्यातस्य फलानि, गजपिप्पली, आढकी "अरहर" इति ख्याता, मूर्वा, दन्ती, किराततिक्तः, चित्रकः, शारिवाद्वयम्, रौहिषतृणम्, यवानी, मेहदी चेति ।

**निपीता सितासंमिता गोपयोभिः स्मृतिं सन्मतिं लम्भयेद्ब्रह्मदण्डी ।**
**यतैः सेवितं वा कपोताङ्घ्रितैलं निहन्यादपस्मारदुर्वारखेलम् ॥ ११ ॥**

निपीतेति—ब्रह्मदण्डी=स्वनामप्रसिद्धा । कपोताङ्घ्रितैलम्=ज्योतिष्मतीतैलं यदुन्मादे समुक्तम् ।

**अथ केवलमत्र पुराणघृतं सकलग्रहदोषहरं विदितम् ।**
**जगतां तिमिरं विनिहन्ति रविर्मनसामिह तल्लशुनादिहविः ॥ १२ ॥**

अथेति—सकलग्रहेति—अपस्मारोन्मादादिषु ग्रहदोषस्यैव प्राबल्यात्पुराणघृतं तन्नाशकमिति भावः। "लशुनादिघृतस्य" विधिः—लशुनस्वरसः १ प्रस्थः, बृहत्पञ्चमूलक्वाथः १ प्र०, सुरा १ प्र०, काञ्जिकम् १ प्र०, दधि १ प्र०, मूलकस्वरसः १ प्र०, गव्यघृतम् १ प्र०, त्रिकटु–दाडिमबीज–तिन्तिडीक–यवानी–चव्य–सैन्धव–हिंगवम्लवेतस–जीरकाजमोदानां प्रत्येकं पलमितानां कल्कश्चेति सर्वमैकध्यं विपचेत्। तदिदं "लशुनादिहविः" जगतां तिमिरं रविरिव मनसां तिमिरम्=अपस्मारं विनिहन्ति।

सिद्धार्थकादिरगदोऽप्यपस्मारादिषु स्मृतः।
पानस्नानाञ्जनालेपनस्यैष्वस्योपयोजनम्॥ १३॥

सिद्धेति—"सिद्धार्थकादिः" अगदः पूर्वमुक्तः। उपयोजनम्=उपयोगः।

जानकीफलबीजोत्थो धूमश्छागलशृङ्गजः।
चेतयेच्चेतनाहीनं नरं नासागतो ध्रुवम्॥ १४॥

जानकीति—जानकीफलम्="सीताफल" इति लोके ख्यातम्।

निम्बूनीरनिघृष्टे घ्राते मौक्तिकपिष्टे।
ईर्तेऽपस्मृतिरेखा प्रोक्तैषा मदलेखा॥ १२॥

निम्बिति—घ्राते=नस्यद्वारा शिङ्घिते। ईर्ते=गच्छति। अत्र मदलेखानामकं छन्दः।

समिद्वराकान्यतरस्य मूलं ददीत नस्यं पयसा निघृष्य।
तथैव नस्यं लघुकण्टकारीफलोद्भवैः स्यात्स्वरसैर्हिताय॥१६॥

समिद्वरेति—समिद्वरः=पलाशोऽर्कश्चैतयोरन्यतरस्य=एकस्य मूलं पयसा=जलेन।

जातीफलं गले बद्धमेवं हिङ्गु वृकास्थि वा।
कोलमूत्रार्द्रमृद्वापि बद्धाङ्गे हन्त्यपस्मृतिम्॥ १७॥

जातीफलमिति—जातीफलं कृतच्छिद्रं सूत्रप्रोतं गले बद्धव्यम्। हिङ्गु वस्त्रेण पोट्टलीकृतम्। वृकः="भेड़िया" इति ख्यातो वन्यः श्वापदविशेषः। कोलः=शूकरस्तस्य मूत्रेणार्द्रा मृत्=मृत्तिका अङ्गे=गलादौ बद्धा सत्यपस्मृतिं हन्ति।

ऊर्मिका वामगोशृङ्गवराहशफकल्पिता।
धृताङ्गुलौ यथा प्रोक्तमपस्मारापहारिका॥ १८॥

ऊर्मिकेति—वामं यद्गोः शृङ्गं तेन कल्पिता वराहस्य=शूकरस्य शफेन=खुरेण वा कल्पितोर्मिका="अंगूठी" इति ख्यातमङ्गुलीयकम्। अङ्गुलौ=वामकराङ्गुलौ। यथा प्रोक्तं शास्त्रे इति शेषः।

उपानत्तलं घ्राणतः प्राणयोगं प्रवर्त्याशु जीयादपस्मारवेगम् ।
मदीयं सुधास्रावि काव्यं यथेदं जयेद्धीमतां बुद्धिवैरस्यखेदम् ॥१९॥

उपानदिति—उपानत्=पादत्राणं "जूता" इति ख्यातम्, तत्तलं घ्राणतः=शिङ्घनेन मनुष्ये प्राणयोगं प्रवर्त्यापस्मारवेगमाशु जीयात्=नाशयेदित्यर्थः। परमयं प्रयोगोऽधमप्रकृतिषु हालिकादिष्वेव कर्त्तव्यो नोत्तमेष्वित्युपदेशः। मदीयमित्यादि कोष्ठस्य प्रकोष्ठकस्य च समाप्तौ ग्रन्थपूजा। बुद्धिवैरस्यखेदम्=नीरसकर्कशप्रायग्रन्थाध्ययनेन यद्वैरस्यं तज्जनितं बुद्धेः खेदमिति।

विप्राग्रणीश्यामलरामसूनुर्यो रामदुर्गे जयदेवजोशी।
तस्यानुभूतौषधपेटिकायां गतं समाप्तिं हि चतुर्थकोष्ठम् ॥ २० ॥

इति श्रीसिद्धभैषज्यमञ्जूषायां प्रथमप्रकोष्ठे चतुर्थं कोष्ठम्।

---

विप्रेति–पूर्वं व्याख्यातत्वात्सुगमम्।

बाल्ये भ्रातुरसीमवत्सलतया यो जातशिक्षाक्रमः
श्रीश्रीदत्तगुरोः कृपाभरतरोरासानवद्यागमः।
वैद्यानां मणिरामशर्मगुरुणा सिद्धान्तमध्यापितो-
ऽध्यक्षः संप्रति रामदुर्गस्थाकालेजकाध्यापने ॥
श्रीमत्पण्डितफुल्लचन्द्रजनुषाऽऽचार्यप्रशंसाजुषा
बीकानेरनृपेष्टरत्ननगरे संवासिना शास्त्रिणा।
तेन श्रीहनुमत्प्रसादविदुषा भैषज्यमञ्जूषिका-
कोष्ठं कुञ्चिकया चतुर्थमनघं निःशेषतो व्याकृतम् ॥

इति श्रीसिद्धभैषज्यमञ्जूषायाः प्रथमप्रकोष्ठीयचतुर्थकोष्ठविवरणे
कुञ्चिकायाश्चतुर्थ आवर्त्तः।

---

## अथ प्रथमप्रकोष्ठसमाप्तिश्लोकाः

केचिद्वैद्यसमागमादुपगताः केचिच्चिकित्सागमात्
केचित्स्वानुभवाद्गुरोश्च कृपया प्राप्ताः प्रयोगोत्तमाः ।
ते सर्वेऽत्र लसन्ति सन्ति बहवोऽप्याशुप्रभावाः परे
ते किन्त्वत्र मया न विस्तरभिया योगाः प्रकाशीकृताः ॥ १ ॥

केचिदिति—अत्रत्यप्रयोगाणामितिहासप्रदर्शनमिदम् । वैद्यसमागमात्=समये समये संमिलद्भिर्वैद्यैः संभाषायां सुहृद्भावेनोपदिष्टाः केचित्प्रयोगा इति यावत् । चिकित्सागमात्=चरकादिमहर्षिप्रवरोपदिष्टादायुर्वेदग्रन्थसमूहात् । स्वानुभवात्=नानाव्याधीनां चिकित्सां कुर्वतः स्वस्य येषु विशिष्यानुभवः समजायत तेऽस्वानुभवोद्भूताः। गुरोश्च कृपया="ब्रूयुः शिष्यस्य स्निग्धस्य गुरवो गुह्यमप्युत" इति न्यायेन गुरुभिः समुपदिष्टाः केचित्प्रयोगाः । विस्तरभियेति—सत्यामावश्यकतायामधिकारिणं प्रति मुखतः प्रकारान्तरेण वा तेषामुपदेशः स्यादिति ग्रन्थकर्तुः प्रतिज्ञा ।

राजस्थानमरुप्रदेशतिलकं लक्ष्मीसरोजायितं
श्रीकल्याणनरेशगुप्तमभितः श्रेष्ठिप्रतिष्ठापितम् ।
सद्धर्मिष्ठविशिष्टशिष्टनिभृतं विद्वद्वरिष्ठावृतं
रम्यं राजति रामदुर्गनगरं दीव्यत्प्रतापेश्वरम् ॥ २ ॥

राजेति—राजस्थाने="राजपूताना"इति प्रसिद्धे भारतीयक्षत्रियनृपतिरक्षिते भूप्रदेशे यो मरुप्रदेशः="मारवाड़"इति प्रसिद्धः प्रान्तः (तत्रापि यः"शेखावाटी"इति प्रसिद्धः प्रान्तः) तस्य तिलकम् । लक्ष्मीसरोजायितम्=लक्ष्मीनिवासभूतकमलतुल्यम् । देशस्यास्य स्वयमुर्वराशक्तिनैयून्येन विशिष्टसस्यादिसम्पत्त्यभावेऽपि बहवोऽत्रत्या व्यापारदक्षा व्यवसायिनो वैश्याः कलकत्तामोहमय्यादिसुदूरप्रान्तेषु धनान्यर्जयित्वा कोट्यधीशाः सन्तः स्वजन्मभूमिमिमां स्ववैभवेन विभूषयन्तीति भावः । श्रीकल्याणनरेशः=जयपुरमहीमहेन्द्रसामन्तः शेखावाटीस्थसीकरराज्यशासको महाराजस्तेन गुप्तम् । श्रेष्ठिभिः= पूर्ववर्णितैः "सेठ" इति प्रसिद्धैर्वैश्यप्रवरैः प्रतिष्ठापितम् । अत एव यस्य लोके "सेठों का रामगढ़" इति प्रसिद्धिः । सद्धर्मिष्ठाः=श्रौतस्मार्ताचारपरायणाः, विशिष्टा=अन्यप्रान्तगतजनेभ्यो विशेषं धारयन्तो ये शिष्टाः=चातुर्वर्णिकाः सज्जनास्तैर्नितरां भृतम् । विद्वद्वरिष्ठैः=श्रेष्ठैर्विद्वद्भिरावृतम् । स्थाने स्थानेऽत्र धर्मिष्ठश्रेष्ठिभिः प्रतिष्ठापिता नैकाः संस्कृतपाठशालास्कूलकालेजादिविद्यापीठसंस्थाः सन्ति यत्र बहवो विद्वांसो वद्वन्यद्वन्कुर्वन्तोऽध्यापयन्ति, नचैतादृशो विद्वत्समुदायोऽ

न्यत्र मिलतीति भावः । दीव्यन्=स्वेन महामहिम्ना प्रकाशमानः प्रतापेश्वरः=एतन्नाम्ना प्रसिद्धं मध्येनगरं वर्तमानं भगवतः श्रीशङ्करस्य ज्योतिर्लिङ्गमदिरं यत्र तादृशम् । यत्र हि भगवन्मन्दिरसन्निधौ समये समये प्रतायमानानां यज्ञानां पावनो धूमः स्पर्शमात्रेणैव पवित्रयति सान्तःकरणं शरीरं समुद्भावयति च वृष्ट्यादिसम्पादनेन कराले कलिकालेऽपि ब्राह्मणानां किमपि गौरवम् , यत्र च रात्रिन्दिवमुपर्युपर्यापतद्दर्शनार्थिजनतानाद्यमानघण्टाघोषः पूरयति कर्णकुहरं संजनयति च प्रासेऽपि सकलप्राचीनार्यभावदुरवशेषत्वे श्रद्धालुजनहृदयभक्तिभावं पश्यतां कामपि मनसो मुदम् , यत्रैव च तदा तदा समायातैः साधुभिस्तपांसि तप्यन्ते व्याख्यातृभिर्धर्मा व्याख्यायन्तेऽभिनेतृभिश्च भगवतो लीलाचरितान्यभिनीयन्ते । तदेवंभूतं रम्यं रामदुर्गनगरम्="रामगढ़" इति प्रसिद्धं पत्तनं राजति ।

कवेरस्य पूर्वजः श्रीमत्पण्डितप्राणनाथतनुजन्मा श्रीमनीरामशर्मा स्वप्रभावभावितचित्तेन श्रीशिवसिंहसीकरमहीपेन " नयावास" नामग्रामतः सबहुमानमानीय फतहपुरपत्तने स्थापितोऽभूत् । भूमिदानपूर्वकं वृत्तिश्चास्य समकल्प्यत । तदनु तत्तनुजाः श्रीरामजीदासादयः स्वयाज्यकुलोद्भूतैः "पोद्दार" इति प्रसिद्धैर्वैश्यैः सहास्मिन् रामदुर्गनगरे समागत्य न्यवसन् । तेषु श्रीमत्पण्डितरामजीदासशर्मातीव निर्भीको ब्रह्मवर्चस्वी चासीत् । यो राजानमपि सत्यपराधे धर्षयति स्मेति श्रूयते । तत्तनयस्य श्रीगणेशनारायणशर्मणो रघुनाथरायशर्मा चतुर्भुजशर्मा चेति पुत्ररत्नद्वयं संजज्ञे । तत्र ज्येष्ठः श्रीरघुनाथरायशर्मा श्रीसांवलरामशर्माणं पुत्रं लेभे यस्य बद्रीप्रसादशर्मा जयदेवशर्मा चेति पुत्रद्वयं विराजतेतराम् । ज्येष्ठः श्रीमत्पण्डितबद्रीप्रसादशास्त्री स्वपितुर्धुरं वहन्संस्कृतपाठशालामध्यापयति, कनिष्ठस्तु स्वपितुः पितृव्येण श्रीचतुर्भुजशर्मणा सन्ततिरहितेन दत्तकपुत्रत्वेन परिगृहीत आयुर्वेदाचार्यशास्त्र्याद्युपाधिवरः श्रीजयदेवशर्मा सोऽयं कविवरः । यश्चतुःपञ्चाशदधिकैकोनविंशतिशततमे ( १९५४ ) वैक्रमेऽब्दे, भाद्रपदमासस्य कृष्णपक्षे, त्रयोदश्यां, गुरुवासरे, १ । ९ इष्टकाले ४ । १५ लग्ने च जन्म लेभे, यत्प्रकाशिनीयं जन्मकुण्डली—




कविरयं बाल्यादेव कवने रुचिमान् । प्रारम्भे हिंदीभाषायां ततस्तु प्रायः प्रथमकक्षायामध्ययनसमये एव संस्कृते कवितास्वङ्के । रचनास्य प्रायोऽनुप्रासवती चमत्करोति

स्म चेतः । एतेनैव गुणभूम्ना गुरवोऽस्मिन्सातिशयं स्नेहं दधुः । गच्छति काले व्याकरण-न्यायसाहित्यादिशास्त्रेषु सकर्मदर्शने आयुर्वेददर्शनेऽपि च स्वकवितया सहैव परां प्रौढिमाप । प्रारम्भे नानेन स्वरचनानां संग्रहे प्रयतितम्, केवलं यत्र तत्र पत्रेषु पुस्तकपृष्ठेषु छात्राणां मुखेषु नैव ता विराजन्ते स्म । यद्ययं प्रायतिष्यत तर्हि महान् संग्रहोऽभविष्यत् । ततस्तु मित्रैरनुरुद्धः संग्रहणेऽपि मतिं न्यधत्त, यत्फलरूपाः काश्चन लघ्व्यः पुस्तिकाः "सिद्धभैषज्यमञ्जूषा" चेयमस्ति । कविरयं प्रतिभानवानपि प्रायेण न शारीरिकशक्तिसम्पन्न इति दुःखम् । तथापि वयमस्य नवनवाभ्यः कृतिभ्यः स्पृहयामः स्वास्थ्ये चाभिलषामः-इति संक्षिप्तमेतद्वंशानुकीर्तनपूर्वकं चरितवर्णनम् । वंश-विषयेऽधिकन्तु पृथग्वंशवृक्षतोऽवधेयम् । अग्रिमश्लोकानामवतारोऽपि संक्षिप्तचरित्रवर्णना-थैवेति बोध्यम् ।

तत्रत्येन चिकित्सितागमविदा रोगातुरापच्छिदा
जेतुं रोगरिपून् सदौषधगणान्यत्नेन संचिन्वता ।
एषा श्रीजयदेवशर्मकविना भूरिश्रमान्निर्मिता
मञ्जूषा भिषजां गृहेषु ललताच्चेतांसि चामोदयेत् ॥ ३ ॥

तत्रत्येनेति—तत्रत्येन=पूर्वोक्तरामदुर्गोद्भवेन । चिकित्सितागमविदा=आयुर्वेदशा-स्त्रज्ञेन । रोगातुराणामापदं छिनत्तीति तादृशेन । भूरिश्रमादिति—अतएवात्रत्यप्रयोगेषु न विप्रतिपत्तिलेशोऽपीति भावः ।

आयुर्वेदविचारणं गुरुमुखात्सद्योगनिर्धारणं
सूते गन्धकजारणं च विधिवद्धात्वादिसम्मारणम् ।
रुग्णानामपि भूयसां सुविहितं रुग्भ्यः समुत्तारणं
येन ग्रन्थप्रचारणं च विहितं तद्भारतीयं बुधाः ! ॥ ४ ॥

आयुर्वेदेति—आयुर्वेदस्य विचारणम्=गुरुमुखादधीतस्य परिशीलनं स्वयं चानेकग्रन्थ-विमर्शनम् । सतां योगानां निर्धारणम्=निश्चयः । सूते गन्धकजारणम्=कच्छपयन्त्रादिनाना-विधिभिः षड्गुणस्य गन्धकस्य जारणम् । धात्वादिसम्मारणम्=सुवर्णरजतादिधातूनां भस्मतासंम्पादनम् । रुग्णानां रुग्भ्यः समुत्तारणमित्यत्र "बहराइच" नगरस्थः कवेः "भारतबन्धु औषधालयः" एव प्रमाणम्, यत्र कविनानेन क्रियमाणा चिकित्सा प्रायः

सर्वा एव देशीयैर्विदेशीयैश्च विद्वद्भिर्विधीयमानाश्चिकित्सा अतिशेते। अन्थप्रचारणमित्यत्र "ग्रहे वा" इति पिङ्गलाचार्यानुशासनात्थकाराकारस्य ह्रस्वत्वं बोध्यम्।

य: श्रीदत्तगुरोरवाप्तमुनिवाग्विज्ञातकाव्याशयो
यो योगस्थितनीलकण्ठगुरुतस्तर्कागमं चाप्तवान्।
राद्धान्तं भिषजान्तु सागरगुरोर्विद्वन्मणेः श्रीमणेः
सोऽहं नव्यनिबन्धकृज्जयकविर्विद्वत्कृपां कामये॥५॥

य इति—श्रीदत्तगुरुः=अस्माकं परमश्रद्धेयाः प्रातः स्मरणीयाः सुगृहीतनामधेयाः श्रीगुरुचरणाः। भास्करैरिव निधाभास्करैर्यैरेकहेलयैवात्र रामदुर्गे सर्वत्र प्रसृतोऽज्ञानान्धकारो नामशेषतां नीतः, यैर्नवीनैव काचिदध्यापनपरिपाटी समाविष्कृता प्रवर्तिता च काचनाभूतपूर्वैव शिक्षामार्गे सजीवता, दिशि दिशि सगौरवं सत्त्वावलम्बं च कार्यक्षेत्रेऽवतीर्णा येषां शिष्याः प्रशिष्याश्च प्रसारयन्ति यदीयं शिष्यानुशासनयशोराशिम्, एकचत्वारिंशदधिकैकोनविंशतिशततमेऽब्दे (१९४१) आश्विनशुक्लत्रयोदश्यां गुरुवासरे १०।३० इष्टकाले जगन्मङ्गलं जन्म गृहीतवतां द्व्यशीत्युत्तरैकोनविंशतिशततमे वत्सरे (१९८२) श्रावणकृष्णदशम्यां च ब्रह्मणि लीनानां येषां पावनानि नामानि चरितानि च स्मरन्तस्तद्भक्तिपरवन्तो जना अद्यापि स्वात्मानं पावयन्ति, ये च—

वेदव्याकृतिसांख्ययोगसरणौ साहित्यसत्तर्कयो-
र्मन्वादिस्मृतिषु प्रमेयनिगमे वेदान्तमीमांसयोः।
यस्यानेकमनीषिशिक्षणपटोः स्वच्छन्दगा शेमुषी
सोऽयं मे करुणानिधिर्विजयते श्रीदत्तशास्त्रीगुरुः॥

—इत्येवमुपवर्णितविद्यावैभवमाहात्म्याः, यच्चरणयोरन्तेवसतोर्मेऽनुग्राकुम्भिकाकृतोः सातीर्थ्यप्रयुक्तं किमपि प्रेमाजनिष्ट च। तेषामेवासीमकृपयाऽवाप्तमुनिवाक्—अवाप्ता मुनीनाम्=पाणिनिकात्यायनपतञ्जलीनां वाक्=त्रिमुनिव्याकरणरूपा तथा गोतमकणादकपिलानां च न्यायवैशेषिकसांख्यदर्शनरूपा येन तादृशः। कविनाऽनेन प्रारम्भिकं पाणिनिव्याकरणं द्वयोरेव ग्रन्थकृतोरुपनयनदीक्षागुरुभ्यः श्रीमूलचन्द्रशर्ममहाभागेभ्योऽप्यधीतम्। ये हीत्थं वर्ण्यन्ते—

तपःस्वरूपाचरणैर्महर्षिर्व्याकृत्यकूपारसुपारदर्शी।
विभाति भूमौ नितरामतन्द्रः स मे गुरुः श्रीयुतमूलचन्द्रः॥

—इति । योगस्थिताः श्रीनीलकण्ठगुरवो ग्रामाद्बहिर्वने कुटीरकं निर्माय महर्षिवज्जीवनं चरितार्थयन्ति, यत्समो नव्यन्यायवेत्ताऽस्मिन् प्रान्ते नास्त्येव । राद्धान्तः=सिद्धान्तः । सागरगुरुः=पिलानीवास्तव्या वैद्याः श्रीसागरमल्लशर्ममहाभागा इत्यर्थः । विद्वन्मणेः श्रीमणेरिति—इमे ग्रन्थकृतोरायुर्वेदाध्यापकाः काश्मीरराज्यस्थरायपुरवास्तव्या रामदुर्गस्थहरनन्दरायरुइयासंस्कृतकालेजीयायुर्वेदविभागे प्रधानाध्यापका श्रीगुरुचरणाः मणिरामशर्ममहाभागाः, ये हि सौजन्याद्यगणितगुणगणशालिनो यशोराशिभिर्दिशो धवलयन्ति परोपकारव्रतपरायणतया च विश्वेषामुपकुर्वन्ति । यैरनेकशः शिष्याननुशिष्य स्थाने स्थाने च तान्संस्थाप्य विद्वद्वैद्याभावस्यैवाभावः कृतः । नव्यनिबन्धकृत्=प्रस्तुतस्यायुर्वेदीयसाहित्ये क्रान्तिकारकस्य "सिद्धभैषज्यमञ्जूषा"-भिधग्रन्थस्य निर्माता ।

नचात्र कवने हेतुर्बालस्य प्रतिभा मम ।
किन्त्वस्ति परमो हेतुः करुणैव विपश्चिताम् ॥ ६ ॥

नेति—कवने=कविताकरणे । शिष्टं स्पष्टम् ।

एका कृष्णमुखारविन्दगलिता लक्ष्मीगले ललिता
प्रत्यक्षं मणिमानिता सुवितता सर्वत्र शस्ता शुभा ।
अन्या यादववक्त्रतः समुदिता श्रीसागरैर्धारिता
भारत्योः सरितोरिवात्र तु तयोर्लीलायते सङ्गमः ॥ ७ ॥

एकेति—गुरुसम्प्रदायप्रदर्शनमिदम् । एका भारती जयपुरविलाससिद्धभैषजमणिमालाद्यपूर्वनिबन्धनिबन्धॄणां कवने कालिदासोपमानां स्वर्गतानां व्यासोपाख्यभट्टश्रीकृष्णरामशर्मराजवैद्यमहानुभावानां मुखारविन्दान्निस्सृत्य,भारतप्रसिद्धवैदुष्यवैभवानां चिरविलुप्तचरकसुश्रुताद्यायुर्वेदाकरग्रन्थाध्ययनाध्यापनसरणिप्रस्थापनपरमाचार्याणां तच्छिष्याणां श्रद्धेयश्रीमल्लक्ष्मीरामस्वामिपादानां गले लालनं प्राप्य, ततस्तच्छिष्येभ्यो गुरुवरश्रीमणिरामशर्मभ्यः संमानं प्राप्य कविं प्राप्ता । अन्या भारती तु मोहमयीवास्तव्यानामायुर्वेदोद्धरणैकप्रवणानामखिलभारतप्रसृमरयशोराशीनां श्रीयादवाचार्यमहाभागानां मुखकमलान्निर्गत्य पूर्ववर्णितैः श्रीसागरमल्लवैद्यमहाभागैर्धारिता सती कविं प्राप्ता । द्वयोरेव तयोर्भारत्योः प्रयागादिसङ्गमे गङ्गायमुनयोः सरितोरिवात्र ग्रन्थे सङ्गमो लीलायते, इत्यस्य प्रामाणिकता विद्वद्भिरेवावधार्येति भावः ।

श्रीरामः करुणारामः स्वसेवककृतां कृतिम् ।
खलापवादतो नित्यं रक्षेदक्षेमतश्च सः ॥ ८ ॥

श्रीराम इति—करुणारामः=करुणाया आरामः, करुणयाऽऽरमयतीति वा, रमन्ते योगिनो यस्मिन्निति रामः-करुणया रामः इति वा । खलापवादतः=दोषैकदृष्टीनां दुष्टानां निन्दातः । अक्षेमतः=समादरवैकल्यादियोगक्षेमाभावतः ।

षडष्टाङ्कशुभ्रांशुगे वैक्रमेऽब्दे जिताघस्य माघस्य पक्षे वलक्षे ।
इदं सिद्धभैषज्यमञ्जूषिकाया गतं पूर्णतां हृद्यमाद्यं प्रकोष्ठम् ॥ ९ ॥

इति श्रीसिद्धभैषज्यमञ्जूषायां प्रथमं प्रकोष्ठम् ।

---

षडिति—षडष्टाङ्कशुभ्रांशुगे="अङ्कानां वामतो गतिः" इति नयानुसारं षडशीत्युत्तरैकोनविंशतिशततमे ( १९८६ ) वैक्रमेऽब्दे । जिताघस्य=जितानि अघानि येन तादृशस्य । विष्णोः प्रियत्वादिति शेषः । वलक्षे पक्षे=शुक्लपक्षे । वसन्तपञ्चम्यां तिथाविस्यपि बोध्यम् ।

राजारामबुधो महर्षिकुलभूरासीत्स्वधर्मे स्थितः,
पृथ्वीराजपुरोहितान्वयजनिर्मौलीसरग्रामके ।
तत्पुत्रः सुखरामशर्मसुकृती श्रीकाशिनाथस्ततः—
स्तस्यासीत्पनराजपण्डितवरो भैरामलस्तत्सुतः ॥ १

तत्पुत्रोऽमलधीर्यथार्थवचनः श्रीखेतसीदासकः,
संजज्ञे तनयस्ततः सुकृतिमान्श्रीफूलचन्द्राभिधः ।
तज्जोऽहं तनयो नयोन्नतमतिः स्वज्येष्ठतातेन वै
श्रीमत्सूर्यमलेन लालिततनुष्टीकामिमामन्वधाम् ॥ २ ॥

कालेनाल्पतमेन शास्त्रमविदं संप्राप्तवं सत्कलाः,
प्रत्यैच्छं शुभराजकीयपदवीरासादयं यज्जयम् ।
अभ्यर्च्यां गुरुगौरवं सुरगिरा कालेजमध्यापयं
यद्यन्मय्यवभाति तत्तदखिलं श्रीमद्गुरूणां कृपा ॥ ३ ।

वर्षे नागवसुग्रहावनिमिते मासे शुभे चाश्विने
शुक्ले मङ्गलवासरे च विजयाख्यायां दशम्यां तिथौ ।

मञ्जूषाप्रथमप्रकोष्ठकमणीनुद्द्योतयन्ती क्षिता—
वाचन्द्रार्कमलङ्करोतु भिषजां कुञ्ज्यालयान्कुञ्चिका ॥ ४ ॥

गोपानामेकनाथो गिरिवरधरणो गोपिकागीतगाथो
गोगोदेवार्त्तिनाशी गरुडकगमनो गम्यगोलोकवासी ।
गोत्रागुप्तौ गरिष्ठो गुणगणगरिमा गोपगोष्ठीवरिष्ठो
गुप्याद्गोविन्दनामा गजदुरितहरो ग्रन्थमक्षय्यधामा ॥ ६ ॥

इति श्रीसिद्धभैषज्यमञ्जूषायाः प्रथमप्रकोष्ठकविवरणे कुञ्चिकायाः
प्रथमाऽऽवर्त्तस्थितिः ।

---



त्वर्यताम् ! त्वर्यताम् !

# अपूर्वो हर्षावसरः !

## सिद्धभैषज्यमञ्जूषायाः

### द्वितीयं प्रकोष्ठम् ।

—:०:—

आयुर्वेदसंसारे इदं विनिवेदयन्तो वयं महान्तं हर्षमनुभवामो यत्करुणावरुणालयस्य भगवतः श्रीकृष्णचन्द्रस्य निस्सीमकरुणया "सिद्धभैषज्यमञ्जूषायाः" द्वितीयभागोऽपि शीघ्रमेव प्रकाशनाय प्रस्तुतप्रायो वर्त्तते इति । प्रथमभागस्य रचनापाटवं कवितामाधुरीं प्रयोगाव्यर्थतां चावेक्ष्यानेनायुर्वेदे कीदृशी क्रान्तिः कृतेति न चिरांय चक्षुष्मतां परोक्षं स्यात् । द्वितीयभागस्तु ततोऽप्यधिकश्चमत्कारी चेतोहारी महत्याऽऽरभट्या प्रकाशमासादयिष्यति । तत्र हि प्रथमभागावशिष्टानां वातव्याध्यादिसमस्तमहारोगाणां नवाविर्भूतानां च भूयसां व्याधीनां सरलाश्चिकित्सारीतयो नानाविधा दुर्लभा रामबाणवदव्यर्थाः सिद्धाः प्रयोगाश्च तथा सन्निवेशिताः सन्ति यथा वैद्याः केवलमिदमेवैकं पुस्तकं गृहीत्वा निःशङ्कं रुग्णानुल्लाघीकृत्य धनं धर्मं यशश्चार्जयिष्यन्तीति । नानाविधाः खङ्गमुरजपद्मादिबन्धाः, समस्यापूर्त्तयः, अन्तर्लापिकाः, बहिर्लापिकाः, प्रहेलिकाप्रभृतयश्च साहित्यसुधारसं निषिञ्चन्तः कमनीयकविताकलापप्रकाशाः सिद्धप्रयोगप्रदर्शनमुखेन समुपनिबद्धा यच्चमत्कुर्वन्ति तदनुभवेनैव केवलं वेद्यम् । इत्थंप्रयोगमणीन् प्रकाश्य दर्शयन्ती परं स्फीतिमानमुपगता कुञ्चिका टीकाऽपि दर्शनीयैव । किमधिकेन, भागद्वयात्मके ग्रन्थरत्नेऽस्मिन् मञ्जूषाकुञ्चिकाकृद्भ्यामनेकैर्वर्षैः समुपार्जितं स्वसर्वस्वमेव मुक्तहस्ततया निष्कपटतया चायुर्वेदप्रेमिणामाराधनाय समुपस्थापितम् । इदानीमेव ग्राहकतामङ्गीकृतवन्तो महाभागाः स्वल्पेनैव मूल्येन भागमेतं लब्धुं शक्ष्यन्तीति सादरं विनिवेद्यते ।

ये महानुभावाः शतशोऽनुभूतानद्यावधि ग्रन्थादिष्वप्रकाशितान्परम्पराप्रिप्राप्तान् रामबाणवत्सिद्धयोगान्प्रचिकाशयिषन्ति तद्द्वारेण चायुर्वेदस्योपचिकीर्षन्ति, तैः शीघ्रमेव निर्मितं तदौषधांशं ( नमूना ) समनुप्रेष्य सविधिप्रयोगाः स्पष्टमुल्लिख्य प्रेषणीयाः, येन तत्सत्यतां परीक्ष्य सुन्दरकविताभिस्तानुपनिबध्य प्रेषकनाम्ना मञ्जूषाया द्वितीयभागे प्रकाश्य च तदीययशः--प्रसाराय प्रयत्येत ।

सिद्धभैषज्यमञ्जूषास्थप्रयोगाणां निर्माणे कारणेन केनाप्यशक्तैस्तु कार्यालये सूचनीयम्। तदादेशानुसारं सर्वविधान् प्रयोगान्सम्यग्विनिर्मायोचितमूल्येन यथासमयं प्रेषयितुं प्रयतिष्यते।

बहूनां महानुभावानामनुरोधात्साधारणवैद्यानामुपयोगाय ग्रन्थस्यास्य काचित्सरला हिन्दीटीकाऽपि शीघ्रमेव प्रकाशमेष्यति।

श्रीशारदासदनकार्यालयोऽन्येषामपि बहूनां पुरातनानामप्रकाशितानां नवनिर्मितानां च ग्रन्थानां प्रकाशनाय सयत्न आस्ते। द्वित्रग्रन्थानां कार्यं प्रारब्धमपि। येषां सविधे प्राचीनानि हस्तलिखितान्यप्रकाशितानि पुस्तकानि स्युस्तैर्मूल्येन तद्विक्रयायोदारतया प्रदानाय संभूय प्रकाशनाय वा पत्रव्यवहारः कार्यः। प्राचीनानि महार्हाणि ग्रन्थरत्नान्यस्माकमालस्योपेक्षादिदोषवशात्सर्वथा विलोपमुपयातानि। शिष्टानि यान्ति यास्यन्ति च। येषां हृदि मनागपि स्वीयदेशजातिधर्मसभ्यताभाषासाहित्यादिविषयकं प्रेम जागर्त्ति ये वा दैवदुर्विपाकाद्दीनदिनां भगवतीं संस्कृतभारतीं समुन्निनीषन्ति तैरस्मदारब्धे कार्ये सहयोगानुग्रहो विधेयः।

पुस्तकप्राप्तेः सर्वविधपत्रव्यवहारस्य च स्थानम्:—

शारदासदनकार्यालयः

रामगढ़ ( सीकर )

शेखावाटी.